यस्यार्द्धं विश्वदाहव्यसनविसृमरज्योतिरर्द्धं कृपोद्य-
द्वाष्पं चान्योन्यवेगप्रहतिसिमसिमाकारि चक्षुस्तृतीयम् ॥ ४ ॥
मुरारेः ।

धम्मिल्लं च जटां च मौक्तिकसरं चाहिं च रत्नानि च
ब्रह्मास्थीनि च कुङ्कुमं च नृशिरश्चर्णोत्तरं भस्म च ।
क्षौमं च द्विपचर्म चैकवपुषा बिभ्रद्दिशत्वेकतां
भावानामिव योगिनां दिशतु वः श्रेयोऽर्द्धनारीश्वरः ॥ ५ ॥
शङ्करदेवस्य ।

## २८ शृङ्गारात्मकार्द्धनारीश्वरः ।

अर्द्धं दन्तच्छदस्य स्फुरति जपवशादर्द्धमप्युत्प्रकोपा-
देकः पाणिः प्रणन्तुं शिरसि कृतपदः क्षेतमन्यस्तमेव ।
एकं ध्यानान्निमीलत्यपरमविकसद्वीक्षते नेत्रमित्थं
तुल्यानिच्छाविधित्सा तनुरवतु स वो यस्य सन्ध्याविधाने ॥ १ ॥
कस्यचित् ।

अच्छिन्नमेखलमलब्धदृढोपगूढ-
मप्राप्तचुम्बनमवीक्षितवक्त्रकान्ति ।
कान्ताविमिश्रवपुषः कृतविप्रलम्भ-
सम्भोगसख्यमिव पातु वपुः स्मरारेः ॥ २ ॥
क्षित्तपस्य ।

प्रौढप्रेमरसादभेदघटितामङ्के दधानः प्रियां
देवः पातु जगन्ति केलिकलहे तस्याः प्रसादाय यः ।
व्याहर्तुं प्रणयोचितं नमयितुं मूर्धानमप्यक्षमो
धत्ते केवलमेव वामचरणाम्भोजे करं दक्षिणम् ॥ ३ ॥
गदाधरस्य ।

मिश्रीभूतां तव तनुलतां बिभ्रतो गौरि कामं
देवस्य स्यादविरलपरीरम्भजन्मा प्रमोदः ।
किन्तु प्रेमस्तिमितमधुरस्निग्धमुग्धा न दृष्टि-
र्दृष्टेत्यन्तःकरणमसकृत्ताम्यति त्र्यम्बकस्य ॥ ४ ॥
भगीरथस्य ।

अन्यस्यै सम्प्रतीमं कुरु मदनरिपो स्वाङ्गदानप्रसादं
नाहं सोढुं समर्था शिरसि सुरनदीं नापि सन्ध्यां प्रणन्तुम् ।
इत्युक्त्वा कोपविद्धां विघटयितुमुमामात्मदेहं प्रवृत्तां
रुन्धानः पातु शम्भोः कुचकलसहठस्पर्शकृष्टो भुजो वः ॥ ५ ॥
मयूरस्य ।

## २९ गणेशः ।

एकः स एव परिपालयताज्जगन्ति
गौरीगिरीशचरितानुकृतिं दधानः ।
आभाति यो दशनशून्यमुखैकदेश-
देहार्धहारितवधूक इवैकदन्तः ॥ १ ॥ वसुकल्पस्य ।

कपोलादुड्डीनैर्भयवशविलोलैर्मधुकरै-
र्मदाम्भःसंलोभादुपरि पतितुं बद्धपटलैः ।
चलद्बर्हच्छत्रश्रियमिव दधानोऽतिरुचिरा-
मविघ्नं हेरम्बो जगदघविघातं घटयतु ॥ २ ॥
तस्यैव ।

सन्ध्यासिन्दूररागारुणगगनतलासङ्गिगङ्गोत्तमाङ्ग-
त्वङ्गन्नक्षत्रमालाकृतरुचिररुचिः कर्णशङ्खीकृतेन्दुः ।
निस्तोयाम्भोदवृन्दैः श्रुतियुगलचलच्चामराडम्बरश्री-
रव्याजालङ्कृतिर्वः प्रवितरतु गणग्रामणीर्मङ्गलानि ॥ ३ ॥
दक्षस्य ।

गर्जद्गभीरघनघर्घरघोरघोष-
दिग्दन्तिभीतिजननोद्धतकण्ठनादः ।
धुन्वन्मुखं तव निरस्यतु सर्वविघ्नं
लम्बोदरः सहजनाट्यरसप्रमत्तः ॥ ४ ॥ पापाकस्य ।

देवेन्द्रमौलिमन्दार-मकरन्दकणारुणाः ।
विघ्नं हरन्तु हेरम्ब चरणाम्बुजरेणवः ॥ ५ ॥ उमापतिधरस्य ।

## ३० कार्त्तिकेयः ।

स्वेच्छारम्यं लुठित्वा पितुरुरसि चिरं भस्मधूलीचिताङ्गो
गङ्गावारिण्यगाधे झटिति हरजटाजूटतो दत्तझम्पः ।
सद्यः सीत्कारकारी जलजडिमरणद्दन्तपङ्क्तिर्गुहो वः
कम्पी पायादपायाज्ज्वलितशिखिशिखे चक्षुषि न्यस्तहस्तः ॥ १ ॥
बाणस्य ।

अर्चिष्मन्ति विदार्य्य वक्त्रकुहराण्यासृक्कतो वासुके-
स्तर्जन्या विषकर्बुरान् गणयतः संस्पृश्य दन्ताङ्कुरान् ।
एकं त्रीणि नवाष्ट सप्त षडिति व्यस्तास्तसंख्याक्रमा-
वाचः शक्तिधरस्य शैशवकलाः कुर्वन्तु नो मङ्गलम् ॥ २ ॥
कस्यचित् ।

सुप्तं पक्षपुटे निलीनशिरसं दृष्ट्वा मयूरं पुरः
छिन्नं केन शिरोऽस्य तात कथमित्याक्रन्दतः शैशवात् ।

अन्तर्हासपिनाकिपाणियुगलस्फालोल्लसच्चेतस-
स्तन्मूर्धेक्षणहर्षितस्य हसितं पायात्कुमारस्य वः ॥ ३ ॥
कस्यचित् ।

हंसश्रेणिकुतूहलेन कलयन् भूषाकपालावलीं
बालामिन्दुकलां मृणालरभसादान्दोलयन् पाणिना ।
रक्ताम्भोजधिया च लोचनयुगं लालाटमुद्घाटयन्
पायाद्वः पितुरङ्कभाक् शिशुजनक्रीडोन्मुखः षण्मुखः ॥ ४ ॥
जलचन्द्रस्य ।

नालैर्नीलोत्पलानां रचितगुरुजटाजूटविन्यासशोभः
कृत्वा सम्भुग्नकोटिद्वयमथ बिसिनीकन्दमिन्दोः प्रदेशे ।
मातुश्चित्रांशुकेन त्वचमुचितपदे पौण्डरीकीं विधाय
क्रीडारुद्रायमाणो जगदवतु गुहो वीक्ष्यमाणः पितृभ्याम् ॥ ५ ॥
हलायुधस्य ।

## ३१ भृङ्गी ।

दिग्वासा यदि तत्किमस्य धनुषा सास्त्रश्च किं भस्मना
भस्माथास्य किमङ्गना यदि च सा कामं ततो द्वेष्टि किम् ।
इत्यन्योन्यविरोधि चेष्टितमिदं पश्यन्निजस्वामिनो
भृङ्गी सान्द्रसिरावनद्धमपुषं धत्तेऽस्थिशेषं वपुः ॥ १ ॥
योगेश्वरस्य ।

कस्मात्त्वं तातगेहादपरमभिनवा ब्रूहि का तत्र वार्ता
देव्या देवो जितः किं वृषडमरुचिताभस्मभोगीन्द्रचन्द्रान् ।
इत्येवं बर्हिनाथे कथयति सहसा भर्तृभिक्षाविभूषा
वैगुण्योद्वेगजन्मा जगदवतु चिरं हारवो भृङ्गिरीटेः ॥ २ ॥
तुङ्गोकस्य ।

चर्चेयं क्षुधिता सदैव गृहिणी पुत्रोऽप्ययं षण्मुखो
दुष्पूरोदरभारमन्थरवपुर्लम्बोदरोऽपि स्वयम् ।
इत्येव स्वकुटुम्बमेकवृषभो देवः कथं पोक्ष्यती-
त्यालोक्येव विशुष्कपञ्जरतनुर्भृङ्गी चिरं पातु वः ॥ ३ ॥
नीलाङ्गस्य ।

भिक्षाभोजिनि कृत्तिवाससि वसुप्राप्तिः कुतः स्यादिति
प्रागर्द्धं वपुषः स्वयं व्यसनिनी यस्याहरत्पार्वती ।
तस्यार्द्धं कुपिता हठाद्यदि हरेन्मूर्ध्नि स्थिता जाह्नवी
हा नाथः क्व तदेति दुःस्थहृदयो भृङ्गी चिरं शुष्यति ॥ ४ ॥
भवानन्दस्य ।

सेवां नो कुरुते करोति न कृषिं वाणिज्यमस्यास्ति नो
पैत्र्यं नास्ति धनं न बान्धवबलं नैवास्ति कश्चिद्गुणः ।
द्यूतस्त्रीव्यसनं न मुञ्चति तथापीशस्तदस्मात्फलं
किं मे स्यादिति चिन्तयन्निव कृशो भृङ्गी चिरं पातु वः ॥ ५ ॥

कस्यचित् ।

## ३२ गणोच्चावचम् ।

स्थूलो दूरमयं न यास्यति कृशो नैष प्रयातुं क्षम-
स्तेनैकस्य ममैव तत्र काशिपुप्राप्तिः परं दृश्यते ।
इत्यादौ परिचिन्तितं प्रतिमुहुस्तद्भृङ्गिकूष्माण्डयो-
रन्योन्यप्रतिकूलमीशशिवयोः पाणिग्रहे पातु वः ॥ १ ॥

तुङ्गोकस्य ।

चर्चायाः कथमेष रक्षति सदा सद्यो नृमुण्डस्रजम्
चण्डीकेशरिणो वृषं च भुजगान् सूनोर्मयूरादपि ।
इत्यन्तः परिभावयन् भगवतो दीर्घं धियः कौशलं
कूष्माण्डो धृतिसम्भृतामनुदिनं पुष्णाति तुन्दश्रियम् ॥ २ ॥

कस्यचित् ।

देवी सूनुमसूत नृत्यत गणाः किं तिष्ठतेत्युद्भुजे
हर्षाद्भृङ्गिरिटावयाचितगिरा चामुण्डयालिङ्गिते ।
अव्याद्वो हतदुन्दुभिस्वनघनध्वानातिरिक्तस्तयो-
रन्योन्यप्रचलास्थिपञ्जररणत्कङ्कारजन्मा रवः ॥ ३ ॥

योगेश्वरस्य ।

शृङ्गं भृङ्गिन्विमुञ्च त्यज गजवदन त्वं च लाङ्गूलमूलं
मन्दानन्दोऽसि नन्दिन्नलमबल महाकाल कण्ठग्रहेण ।
इत्युक्त्वा नीयमानः सुखयतु वृषभः पार्वतीपादमूले
पश्यन्नैर्विलक्षं बलितगतिचलत्कम्बलं त्र्यम्बकं वः ॥ ४ ॥

अभिनन्दस्य ।

दिग्वासा वृषवाहनो नरशिरोधारी दधानोऽजिनं
भिक्षुर्भस्मभुजङ्गभूषिततनुर्भूतैर्भ्रमन् काननम् ।
सर्वेषां शिवकृत्तथापि जगति स्वेच्छोसमदीयः प्रभु-
र्धन्योस्मीत्यतितोषपुष्टजठरः कूष्माण्डकोऽव्याज्जगत् ॥ ५ ॥

महानिधेः ।

## ३३ हरिहरौ ।

यद्गङ्गार्धजटं यदर्धमुकुटं यच्चन्द्रमन्दारयो-
र्धत्ते धाम च दाम च स्मितलसत्कुन्देन्द्रनीलश्रियोः ।
तत्खट्वाङ्गरथाङ्गसङ्गविकटं श्रीकण्ठवैकुण्ठयो-
र्वन्दे नन्दिमहोक्षताक्ष्र्यपरिषद्वामाङ्कमेकं वपुः ॥ १ ॥

राजशेखरस्य ।

नियमितजटावल्लीलीलाप्रसुप्तमहोरगं
चरणकमलप्रान्ते मुक्तस्वविक्रमगोवृषम् ।
विततफणिभुक्पत्रच्छत्रं गदालगुडाश्रयं
हरिहरवपुर्ब्रह्मोपास्यं पुनातु जगत्त्रयम् ॥ २ ॥ भवानन्दस्य ।

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यो गङ्गां च दधेऽन्धकक्षयकरो यो बर्हिपत्रप्रियः ।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः
सोऽव्यादिष्टभुजङ्गहारवलयस्त्वां सर्वदो माधवः ॥३॥ भारवेः ।

एकावास्थातरस्तु वः पुरमुरप्रद्वेषिणोर्देवयोः
प्रालेयाञ्जनशैलशृङ्गसुभगच्छायाङ्गयोः श्रेयसे ।
तार्क्ष्यत्रासविहस्तपन्नगफटा यस्यां जटापालयो
बालेन्दुद्युतिसुप्तकोशजलजो यस्यां च नाभीह्रदः ॥ ४ ॥

तुङ्गोकस्य ।

यज्जम्बूकम्बुरोचिः फणधरपरिषद्धोजिभोगीन्द्रकान्तं
नन्दच्चन्द्रारविन्दद्युतिचरणशिरःस्यन्दिमन्दाकिनीकम् ।
रक्षासंहारदक्षं मदनसमुदयोद्दीपनं शश्वदव्या-
दव्याघातं विबोधेऽप्युदधिगिरिसुताकान्तयोर्देहमेकम् ॥ ५ ॥

जलचन्द्रस्य ।

## ३४ कान्तासहितहरिहरौ ।

सम्भोगस्पृहयालुमन्मथपुनर्जन्मास्पदं भूर्भुवः-
स्वः पायात्पुरुषोत्तमक्रतुभिदोरर्द्धाङ्गपूर्णं वपुः ।
यल्लक्ष्मीगिरिजाकटाक्षकुटिलक्रीडाहठाकृष्टिभिः
स्यादेव त्रुटितं परस्परगुणस्यूतं न चेदन्तरा ॥ १ ॥

त्रिपुरारिपालस्य ।

वपुरवतु वपुरवतु जटाकिरीटमिश्रं
पुरमुरसूदनयोर्विमिश्रितं वः ।

गिरिजलधिसुतास्वभर्तृकण्ठग्रह-
चलिताहृतबाहुवल्लरीकम् ॥ २ ॥ तस्यैव ।

स्फटिकमरकतश्रीहारिणोः प्रीतियोगा-
न्दवतु वपुरेकं कामकंसद्विषोर्वः ।
न विरमति भवान्याः सार्धमब्धेर्दुहित्रा
सदृशमहसि कण्ठे यत्र सीमाविवादः ॥ ३ ॥ योगेश्वरस्य ।

देवस्यैकतमालपत्रमुकुटस्यार्धं पुरद्वेषिणो
देहार्द्धेन समस्यमानमसमं श्वःश्रेयसायास्तु वः ।
यस्मिन् भूधरकन्यकाब्धिसुतयोरप्राप्तसम्भोगयो-
रन्योन्यप्रतिकर्मनर्मभिदुरो भूयाननङ्गज्वरः ॥ ४ ॥

हरेः ।

धात्रा सौहृदसीमविस्मितमुखं भेदभ्रमापासना-
त्सानन्दं मुनिभिः सनिर्वृति सुरैरेकत्र सेवासुखात् ।
पार्वत्या स्वपदापकर्षिकुटिलभ्रूभङ्गमालोकितः
पायाद्वो भगवांश्चराचरगुरुर्देहार्धहारी हरिः ॥ ५ ॥

आर्याविलासस्य ।

## ३५ गङ्गा ।

ब्राह्मं तेजो द्विजानां ज्वलयति जडिमप्रक्रमं हन्ति बुद्धे-
र्वृद्धिं सेकेन सद्यः शमयति बालिनो दुष्कृतानोकहस्य ।
ऊर्द्ध्वं चैवात्र लोकादपि नयतितरां जन्मिनो मग्नमूर्ती-
स्त्वद्धारावारि काशीप्रणयिनि परितः प्रक्रिया कीदृशीयम् ॥ १ ॥

कोलाहलस्य ।

दुर्वारदोषतिमिरागमवासरश्रीः
कैवल्यकैरवविकाससितांशुलेखा ।
जीयात्त्रिविष्टपधुनी कलिकाल-
भग्नगीर्वाणराजनगराकरवैजयन्ती ॥ २ ॥ ग्रहेश्वरस्य ।

तीर्थाटनैः किमधिकं क्षणमीक्षिताचे-
त्पीतं त्वदम्बु यदि देवि मुधा सुधापि ।
स्नातं यदि त्वयि विरिञ्चिपुरं न दूरे
मुक्तिः करे यदि च सा समुपासितासि ॥ ३ ॥ विरिञ्चेः ।

तीरं तवावतरतीह यथा यथैव
देहेन देवि जरता मनुजो मुमूर्षुः ।

अम्ब स्वयंवरवशंवदनाकनारी-
दोर्वल्लिपल्लवि नभोऽपि तथा तथैव ॥ ४ ॥ तस्यैव ।

तप्तं यन्न तपो हुतं च न हविर्यज्ञातवेदोमुखे
दत्तं यच्च न किञ्चिदेव न कृतो यत्तीर्थयात्रादरः ।
काकेनेव शुनेव केवलमयं यत्पूरितः पुद्गलो
मातस्त्वां परिरभ्य जाह्नवि स मे शान्तोयमन्तर्ज्वरः ॥ ५ ॥

सेन्तुतस्य ।

## ३६ गङ्गाप्रशंसा ।

धर्मस्योत्सववैजयन्ति मुकुटस्रग्वेणि गौरीपते-
स्त्वां रत्नाकरपत्नि जह्नुतनये भागीरथि प्रार्थये ।
त्वत्तोयान्तशिलानिषण्णवपुषस्त्वद्वीचिभिः प्रेङ्खत-
स्त्वन्नाम स्मरतस्त्वदर्पितदृशः प्राणाः प्रयास्यन्ति मे ॥ १ ॥

लक्ष्मीधरस्य ।

शत्रौ मे सुहृदीव काप्युपकृतिर्भूयादसूया न तु
स्वाच्छन्द्यं सत्सु मतिर्जनेषु करुणा हीना न दीनात्मसु ।
प्रक्षीणा कलिकल्मषक्षयकरी तृष्णा न कृष्णार्चने
देवि श्रद्दधतां गतिस्त्वयि मुदा मन्दा न मन्दाकिनि ॥ २ ॥

तस्यैव ।

प्रसीद श्रीगङ्गे मृडमुकुटचूडाग्रसुभगे
तवोल्लोलोन्मूलः स्खलतु मम संसारविटपी ।
अथोत्पत्स्ये भूयस्त्रिजगदधिराज्येपि न तदा
श्वपाकः काको वा भगवति भवेयं तव तटे ॥ ३ ॥

पादुकस्य ।

कदा ते सानन्दं विततनवदूर्वाञ्चिततटी-
कुटीरे तीरे वा सवनमनु मन्वादिकथितैः ।
कथावन्धैरन्धङ्करणकरणग्राममनियमा-
द्यमादुज्झन् भीतिं भगवति भवेयं प्रमुदितः ॥ ४ ॥

गोपीचन्द्रस्य ।

बद्धाञ्जलिर्नौमि कुरु प्रसादमपूर्वमाता भव देवि गङ्गे ।
अन्ते वयस्यङ्कगताय मह्यमदेहबन्धाय पयः प्रयच्छ ॥ ५ ॥

केवट्टपपीपस्य ।

## ३७ हरेर्मत्स्यावतारः।

मत्स्यः पुनातु जगदोङ्कृतिकुञ्चितास्यो
ब्रह्माह्वयप्रणयपीवरमध्यभागः।
क्रीडन्नसौ जलधिर्वीचिभिरेव नेति
नेत्यादरादिव विभावितपुच्छकम्पः॥ १॥

आवन्त्यकृष्णस्य।

देव्याः श्रुतेर्दनुजदुर्णयदूषिताया भूयः समुद्गमविधाववलम्बभूमिः।
एकार्णवीभवदशेषपयोधिमध्य द्वीपं वपुर्जयति मीनतनोर्मुरारेः॥ २॥

उमापतिधरस्य।

ब्रह्माण्डोदरदर्पणे भ्रमिरयोत्क्षिप्ताम्बुधिक्षालिते
संक्रान्तामनिमेषलोचनयुगेनोत्पश्यतः स्वान्तनुम्।
शौरेर्मीनतनोः कृशानुकपिशं पार्श्वद्वयं प्रोल्लस-
च्चन्द्रार्काङ्कितकाञ्चनाद्रिशिखराकारं शिरः पातु वः॥ ३॥

वसन्तदेवस्य।

पातु त्रीणि जगन्ति पार्श्वकषणप्रक्षुण्णदिङ्मण्डलो
नैकाब्धिस्तिमितोदरः स भगवान्क्रीडाझषः केशवः।
त्वङ्गन्निष्ठुरपृष्ठरोमखचितब्रह्माण्डभाण्डावधे-
र्यस्योत्फालकुतूहलेन कथमप्यङ्गेषु जीर्णायितम्॥ ४॥

रघुनन्दनस्य।

मत्स्यः पुच्छाभिघातेन तुच्छीकृतमहोदधिः।
अपर्याप्तजलक्रीडारसो दिशतु वः शिवम्॥ ५॥

कस्यचित्।

## ३८ कूर्मः।

पृष्ठभ्राम्यदमन्दमन्दरगिरिग्रावाग्रकण्डूयना-
न्निद्रालोः कमठाकृतेर्भगवतः श्वासानिलाः पान्तु वः।
यत्संस्कारकलानुवर्तनवशाद्वेलाच्छलेनाम्भसां
यातायातमयन्त्रितं जलनिधेर्नाद्यापि विश्राम्यति॥ १॥

केशटाचार्यस्य।

क्षीराब्धौ मथ्यमाने त्रिदशदनुसुतोद्भूतकोलाहलोद्यद्-
ब्रह्माण्डाकाण्डचण्डस्फुटनगुरुरवभ्रान्तिभाजि त्रिलोक्याम्।
सद्यो निद्रावबोधादुपरि रयवशाक्षिप्तदीर्घातितिभ्रा-
लग्नग्रीवाप्रकाण्डो जयति कमठराट् चण्डविष्कम्भतुल्यः॥ २॥

बन्धसेनस्य।

पायाद्वो मन्दराद्रिभ्रमणनिकषणाकृष्टपृष्ठाग्रकण्डू-
लीलानिद्रालुरब्धेः क्षुभितमगणयन्नद्भुतः कूर्मराजः ।
यस्याङ्गामर्दहेलावशचलितमहाशैलकीला धरित्री
त्वङ्गत्कल्लोलरत्नाकरवलयचलन्मेखला नृत्यतीव ॥ ३ ॥

सूरेः ।

पार्श्वास्फालातिवेगाज्झगिति च विरहादुच्छलद्भिः पतद्भि-
र्भूयोभूयः समुद्रैर्मिहिरमतिरयाद्दापिवद्भिर्वमद्भिः ।
कोटीरस्तोदयानां क्षणमिव गगने दर्शयन्वः पुनीता-
दीषद्यात्रावहेलाचलितवसुमतीमण्डलः कूर्मराजः ॥ ४ ॥

धरणीधरस्य ।

कूर्मः कूर्माकृतये हरये मुक्तावलम्बनाय नमः ।
पृष्ठे यस्य निषण्णं शैवलवल्लीसमं विश्वम् ॥ ५ ॥

भवानन्दस्य ।

## ३६ वराहः ।

दंष्ट्रापिष्टेषु सद्यः शिखरिषु न कृतः स्कन्धकण्डूविनोदः
सिन्धुष्वङ्गावगाहः खुरकुहरविशत्तोयतुच्छेषु नाप्तः ।
प्राप्ताः पातालपङ्के ननु च न रतयः पोत्रमात्रोपयुक्ते
येनोद्धारे धरित्र्याः स जयति विभुतावृद्धितेच्छो वराहः ॥ १ ॥

वराहमिहिरस्य ।

अस्ति श्रीस्तनपत्रभङ्गमकरीमुद्राङ्कितोरस्थलो
देवः सर्वजगत्पतिर्मधुवधूवक्त्राब्जचन्द्रोदयः ।
क्रीडाक्रोडतनोर्नवेन्दुविशदे दंष्ट्राङ्कुरे यस्य
भूर्भाति स्म प्रलयाब्धिपल्वलतलोत्खातैकमुस्ताकृतिः ॥ २ ॥

नम्नस्य ।

सेयं चन्द्रकलेति नाकवनितानेत्रोत्पलैरर्चिता
मन्दारापगमत्तमेति फणिना सानन्दमालोकिता ।
दिङ्नागैः सरलीकृतायतकरैः स्पृष्टा मृणालाशया
भित्त्वोर्वीमभिनिःसृता मधुरिपोर्दंष्ट्रा चिरं पातु वः ॥ ३ ॥

केशवस्य ।

घोणाघोराभिघातोच्छलदुदधिजलासारसिक्ताग्ररोमा
रोमाग्रप्रोततारानिकर इति सुरैर्धीरमालोकितो वः ।
श्वासाकृष्टावकृष्टप्रविशदपसरद्ब्रध्नबिम्बानुबन्धा-
दाविर्नक्तन्दिनश्रीः स दिशतु दुरितध्वंसमाद्यो वराहः ॥ ४ ॥

नरसिंहस्य ।

येनाधोमुखपद्मिनीदलधिया कूर्मश्चिरं वीक्षितो
घ्रातो येन मृणालमुग्धलतिकाबुद्ध्या फणिग्रामणीः ।
यः शालूकमिवोद्दधार धरणीबिम्बं पुनीतादसौ
त्वामेकार्णवपल्वलैकरसिकः क्रीडावराहो हरिः ॥ ५ ॥

कस्यचित् ।

## ४० नरसिंहः ।

सोमार्धायितनिष्पिधानदशनः सन्ध्यायितान्तर्मुखो
बालार्कायितलोचनः सुरधनुर्लेखायितभ्रूलतः ।
अन्तर्नादगभीरपल्वलगलत्वग्रूपनिर्यत्तडि-
त्सारस्फारसटावरुद्धगगनः पायान्नृसिंहो जगत् ॥ १ ॥

मुरारेः ।

चटच्चटिति चर्मणि च्छमिति चोच्छलच्छोणिते
धगद्धगिति मेदसि स्फुटतरोऽस्थिषु ष्ठादिति ।
पुनातु भवतो हरेरमरवैरिनाथोरसि
क्वणत्करजपञ्जरक्रकचकाषजन्मा रवः ॥ २ ॥

वाक्पतिराजस्य ।

प्रेङ्खद्भास्वरकेशरौघरचितत्रैलोक्यसन्ध्यातपो
ब्रह्माण्डोदररोधिघर्घरसघूत्कारप्रचण्डध्वनिः ।
स्फूर्जद्वज्रकठोरघोरनखरक्षुण्णासुरोरस्थली-
रक्तास्वादविदीर्णदीर्घरसनः पायान्नृसिंहो जगत् ॥ ३ ॥

तस्यैव ।

चक्र ब्रूहि विभो गदे जय हरे कम्बो समाज्ञापय
भो भो नन्दक जीव पन्नगपते किं नाथ भिन्नो मया ।
को दैत्यः कतमो हिरण्यकशिपुः सत्यं भवद्भ्यः शपे
केनास्त्रेण नखैरिति प्रवदतः शौरेर्गिरः पान्तु वः ॥ ४ ॥

केशटस्य ।

किं किं सिंहस्ततः किं नरसदृशवपुर्देव चित्रं गृहीतो
नैवं धिक्कोऽत्र जीव द्रुतमुपनय तं सोऽपि सम्प्राप्त एव ।
चापं चापं न सज्जं झटिति हहह हा कर्कशत्वं नखाना-
मित्येवं दैत्यराजं निजनखकुलिशैर्जघ्निवान् सोऽवताद्वः ॥ ५ ॥

श्रीव्यासपादानाम् ।

## ४१ नरसिंहनखाः ।

दंष्ट्रासङ्कटवज्रघर्घरललज्जिह्वाभृतो हव्यभुग्-
ज्वालाभास्वरभूरिकेशरसटाभारस्य दैत्यद्रुहः ।
व्यावल्गद्बलवद्धिरण्यकशिपुक्रोडस्थलीपाटन-
स्पष्टप्रस्फुटदास्थपञ्जरखक्रूरा नखाः पान्तु वः ॥ १ ॥

दक्षस्य ।

ये बालेन्दुकलार्धविभ्रमभृतो मायानृसिंहाकृते-
र्निर्याता इव ये सिरासरणिभिर्नाभ्यब्जकन्दाङ्कुराः ।
ते वक्षस्थलदारितासुरसरित्कीलालधारारुणाः
पायासुर्नवकिंशुकाग्रमुकुलश्रीसाक्षिणः पाणिजाः ॥ २ ॥

वराहस्य ।

अस्रस्रोतस्तरङ्गभ्रमिषु तरलिता मांसपङ्के लुठन्तः
स्थूलास्थिग्रन्थिभङ्गैर्धवलबिसलताग्रासमाकल्पयन्तः ।
मायासिंहस्य शौरेः स्फुरदरुणहृदम्भोजसंश्लेषभाजः
पायासुर्दैत्यवक्षस्थलकुहरसरोराजहंसा नखा वः ॥ ३ ॥

मयूरस्य ।

पुनन्तु भुवनत्रयं दलितदैत्यवक्षस्थल-
प्रसर्पिरुधिरच्छटाच्छुरणबालसूर्यत्विषः ।
दृढास्थिचयचूर्णनाघटितशब्दसारा हरे-
र्नृसिंहवपुषश्चिरं पिशितपिण्डगर्भा नखाः ॥ ४ ॥

धूर्जटिराजस्य ।

जयन्ति निर्दारितदैत्यवक्षसो नृसिंहरूपस्य हरेर्नखाङ्कुराः ।
विचिन्त्य येषां चरितं सुरारयः प्रियानखेभ्योपि रतेषु बिभ्यति ॥ ५ ॥

कस्यचित् ।

## ४२ शृङ्गारिनरसिंहः ।

लक्ष्मीमुरःपरिसरे वहतः सलीलं योगासनं च चरतो नृहरेर्जयन्ति ।
एकक्षणोपनतमान्मथभावमुग्धस्वात्मावबोधमसृणानि विलोकितानि १

कस्यचित् ।

न्यञ्चत्केसरमुत्तरङ्गपुलकस्रग्नद्धमर्धस्खल-
द्धुन्ध्वालापमपास्तगर्जनमटद्भ्रूभङ्गमार्द्रेक्षणम् ।
स्विद्यत्पाणि विनीतदक्षिकरजं पायान्नसिंहाकृते-
र्देवस्य श्रियमङ्कसीम्नि दधतो विश्रान्तरौद्रं वपुः ॥ २ ॥

वैद्यगदाधरस्य ।

स्वच्छन्दं वैरिवक्षस्थलकुलिशभिदो वीक्ष्य कन्दर्पचाप-
क्रीडाभाजो नखाग्रान् समसमयभयानन्दलोलायताक्ष्याः।
लक्ष्म्या वक्षोजकुम्भङ्कारकलभशिरःशङ्कया वीक्षमाणः
स्वैरं शान्ताक्षिरागो जयति नरहरिर्जातचित्तानुरागः ॥ २ ॥

जलचन्द्रस्य।

अव्याद्वो वज्रसारस्फुरदुरुनखरक्रूरचक्रक्रमाग्र-
प्रोद्भिन्नेन्द्रारिवक्षस्थलगलदसृगासारकाश्मीरगौरः।
प्रस्फूर्जत्केशराग्रग्रथितजलधरश्रेणिनीलाब्जमाल्यः
सूर्याचन्द्रावतंसो नरहरिरसमाबद्धशृङ्गारलीलः ॥४॥ प्रजापतेः।

आनन्दमुग्धनयनां श्रियमङ्कभित्तौ बिभ्रत्पुनातु भवतो भगवान्नृसिंहः।
यस्यावलोकनविलासवशाद्विवासीदुत्सन्नलाञ्छनमृगः कमलामुखेन्दुः॥

उमापतिधरस्य।

## ४३ वामनः।

इदं प्रायो लोके न परिचितपूर्वं नयनयो-
र्न याच्ञा यत्पुंसः सुगुणपरिमाणं लघयति।
विशङ्किर्विश्वात्मा स्ववपुषि बलिप्रार्थनकृते
त्रपालीनैरङ्गैर्यदयमभवद्वामनतनुः ॥ १ ॥ दक्षस्य।

अपसर पृथिवि समुद्राः संवृणताम्बूनि भूभृतो नमत।
वामनहरिलघुतुन्दे जगतीकलहः स वः पातु ॥ २ ॥ भवानन्दस्य।

कुतस्त्वमनु कं स्वतः स्वमिति किं न यत्कस्यचि-
त्किमिच्छसि पदत्रयं ननु भुवा किमित्यल्पया।
द्विजस्य शमिनो मम त्रिभुवनं तदित्याशयो
हरेर्जयति निह्नुतः प्रकटितश्च वक्रोक्तिभिः ॥ ३ ॥ वाक्पतेः।

पूज्यो ब्रह्मविदां त्वमेव विमलज्ञानैकपात्रं भवा-
न्मद्भाग्येन गतोऽतिथित्वमधुना किं ते त्रिभिर्भूपदैः।
त्रैलोक्यं भवतः स्वमित्युपगतो दैत्येश्वरेणादरा-
ज्ज्ञातोस्मीति सलज्जनम्रवदनः पायाज्जगद्वामनः ॥ ४ ॥ वसुसेनस्य।

लक्ष्मीपयोधरोत्सङ्गकुङ्कुमारुणितो हरेः।
बलिरेष स येनास्य भिक्षापात्रीकृतः करः ॥ ५ ॥ गणाध्यक्षस्य।

## ४४ त्रिविक्रमः।

किं छत्रं किं नु रत्नं तिलकमथ तथा कुण्डलं कौस्तुभो वा
चक्रं वा वारिजं वेत्यमरयुवतिभिर्यद्बलिध्वंसिदेहे।

ऊर्ध्वं मौलौ ललाटे श्रवसि हृदि करे नाभिदेशे च दृष्टं
पायात्सद्योऽर्कबिम्बं स च दनुजरिपुर्वर्द्धमानः क्रमेण ॥ १ ॥ श्रीहनूमतः ।
ज्योतिश्चक्राक्षदण्डः क्षरदमरसरित्पट्टिकाकेतुदण्डः
क्षोणीनौकूपदण्डः शतधृतिभवनाम्भोरुहो नालदण्डः ।
ब्रह्माण्डच्छत्रदण्डस्त्रिभुवनभवनस्तम्भदण्डोऽङ्घ्रिदण्डः
श्रेयस्त्रैविक्रमस्ते वितरतु विबुधद्वेषिणां कालदण्डः ॥ २ ॥ दण्डिनः ।
चञ्चत्पादनखाग्रमण्डलरुचिप्रस्यन्दिगङ्गाजलो
विस्फूर्जद्बलिराज्यनाशपिशुनोत्पाताम्बुवाहद्युतिः ।
पातु त्वां चरणो हरेः क्रमविधौ यस्याधिकं द्योतते
दूरादंगुलिमुद्रिकामणिरिव स्फारांशुजालो रविः ॥३॥ विक्रमादित्यस्य ।
यत्काण्डं गगनद्रुमस्य यदपि क्षोणीतडागोदरे
देवस्यैव यशोम्बुशोभिनि महार्यष्टिः प्रतिष्ठाकरी ।
तद्विष्णोः पदमन्तरालजलधेराधारतो भूतला-
त्पारं द्यामुपगन्तुमुद्यमवतां सेतूभवत्पातु वः ॥ ४ ॥ चक्रपाणेः ।
खर्वग्रन्थिविमुक्तसन्धिविकसद्वक्षःस्फुरत्कौस्तुभं
निर्यन्नाभिसरोजकुड्मलकुटीगम्भीरसामध्वनि ।
पात्रावाप्तिसमुत्सुकेन बलिना सानन्दमालोकितं
पायाद्वः क्रमवर्धमानमहिमाश्चर्यं मुरारेर्वपुः ॥ ५ ॥ वाक्पतिराजस्य ।

## ४५ परशुरामः ।

दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सापि वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मादाविरभूत्कथाद्भुतमिदं यत्रैव चास्तं गतम् ॥ १ ॥ केशवस्य ।
हा तातेति न जल्पितं न रुदितं न स्वीकृतं तद्धनं
न स्नातं न च वीक्षितः परिजनः पित्रे न दत्तं जलम् ।
यावन्न क्रकचाभिघातविगलद्राजन्यमर्त्यासृ-
ग्गण्डूषैर्घनघोरघर्घररवाः सन्तर्पिताः फेरवः ॥ २ ॥ तस्यैव ।
शौर्यं शत्रुकुलक्षयावधि यशो ब्रह्माण्डखण्डावधि
त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः ।
धैर्यं यत्तु गिरां न तत्पथि ननु व्यक्तं हि तत्कर्मभिः
सत्यं ब्रह्मतपोनिधेर्भगवतः किं किं न लोकोत्तरम् ॥ ३ ॥ भवभूतेः ।
गोत्राचारविशेषपारगतया वृद्धाभिरादिष्टया
मात्रा वस्तुषु तेषु तेषु विशदन्यस्तेषु दृष्टेः पुरः ।

अन्नप्राशनवासरे सरभसं वक्षोभरोत्सर्पिणा
येनात्तं धनुरीक्षिताश्च झटिति क्षत्रावतंसा दिशः ॥४॥ केशवस्य ।
त्रिःसप्तावधि बाधिता क्षितिभुजामाजन्म वैखानसः
कर्ता मातृवधैनसः स सकलश्रुत्यर्थवीथीगुरुः ।
विश्वस्याश्च भुवः क्रतौ वितरिता श्यामाकमुष्टिंपचो
रामः सोयमुदग्रगेयमहिमा कासां गिरां गोचरः ॥ ५ ॥ कस्यचित् ।

## ४६ श्रीरामः ।

शौर्योत्कर्षतृणीकृतत्रिभुवनो लङ्कापतिः सोभव-
त्कारायामुपवासयन्विजयते तं हेलया हैहयः ।
लीलालूनविशालतद्भुजवनो भूजामदग्न्यस्तत-
स्तज्जेता जनकात्मजापरिवृढो रामः कथं वर्ण्यताम् ॥ १ ॥
रामः कस्य न विस्मयाय मनसो निःशङ्कलङ्केश्वर-
त्रुट्यन्मौलिसिरासमुच्छलदसृग्धारानुबन्धेन यः ।
तद्दोर्विक्रमविद्रुता दशदिशो भोगाय भूमण्डले
सम्यग्वासयितुं प्रवालघटिता यष्टीर्दिदस्तम्भयत् ॥ २ ॥ दक्षस्य ।
मार्त्तण्डैककुलप्रकाण्डतिलकस्त्रैलोक्यरक्षामणि-
र्विश्वामित्रमहामुनेर्निरुपधिः शिष्यो रघुग्रामणीः ।
रामस्ताडितताडकः किमपरं प्रत्यक्षनारायणः
कौशल्यानयनोत्सवो विजयते भूकश्यपस्यात्मजः ॥३॥ राजशेखरस्य ।
रामो नूनमयं निशाचरचमूकालाग्निरुद्रोपमो
निःसन्देहमयं च विक्रमनिधिः सौमित्रिरस्यानुजः ।
वारंवारमपाङ्गभागवलितैर्यद्दृष्टिपातैरियं
लङ्काभर्तुरनीकिनी पितृपतेः पाशैरिवाबध्यते ॥ ४ ॥ श्रीमित्रस्य ।
रामोऽसौ भुवनेषु विक्रमगुणैर्यातः प्रसिद्धिं परा-
मस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम् ।
वन्दीवैष यशांसि गायति मरुद्यस्यैकबाणाहति-
श्रेणीभूतविशालविवरोद्गारैः शरैः सप्तभिः ॥ ५ ॥ विशाखदत्तस्य ।

## ४७ विरहिश्रीरामः ।

सरसि विरसः प्रस्थे दुस्थो लतासु गतादरः
प्रतिपरिसरं भ्रान्तोद्भ्रान्तः सरित्सु निरुत्सुकः ।
ददद्पि दृशौ कुञ्जे कुञ्जे रुदन्नुपनिर्भरं
सुचिरविरहक्षामो रामो न कैरनुरुद्यते ॥ १ ॥ वासुदेवज्योतिषः ।
निष्पन्दं गिरिकन्दरेषु विपिनच्छायासु मूर्च्छालसं

साम्रं पञ्चवटीतटीषु तटिनीतीरेषु तीव्रव्यथम्।
काकुत्स्थं तदवस्थमाधिविधुरं दृष्ट्वा तडिद्व्याजतो
मन्ये मन्युभरैरभेदि हृदयं गाढं घनानामपि॥ २॥ वसुरथस्य।

अनुदिनमनुशैलं तामनालोक्य सीतां
प्रतिदिनमतिदीनं वीक्ष्य रामं विरामम्।
गिरिरशनिमयोयं यस्तदा न द्विधाभूत्
क्षितिरपि न विदीर्णा सापि सर्वंसहैव॥ ३॥ शोभांकस्य।

कोहं वत्स स आर्य एव भगवानार्यः स को राघवः
के यूयं वत नाथ नाथ किमिदं भृत्योस्मि ते लक्ष्मणः।
कान्तारे किमिहास्महे वत वृथा देव्या गतिर्मृग्यते
का देवी जनकाधिराजतनया हा जानकि क्वासि मे॥ ४॥ कस्यचित्।

कूजन् कुञ्जे किमपि करुणं कन्दरे कान्दिशीकः
क्षामो शून्यप्रणिहितमनाः कानने ध्याननेत्रः।
गच्छन् मूर्च्छां कुसुमशयने वीतरागस्तडागे
जीयाज्जायाविरहविदुषां ग्रामणी रामभद्रः॥ ५॥ आचार्यगोपीकस्य।

## ४८ हलधरः।

सुरापीतो गोत्रस्खलनपरिवृद्धाधिकरुषः
प्रसादं रेवत्या जनयितुमनीशः कथमपि।
विचुम्बन् संश्लिष्यन् स्तनवसनमस्यन्नविरतं
मधून्मादाविष्टः स किल बलरामो विजयते॥ १॥ लक्ष्मीधरस्य।

आघूर्णद्वपुषः स्खलन्मृदुगिरः किञ्चिन्नसद्वाससो
रेवत्यंसनिषण्णनिःसहभुजस्याताम्रनेत्रद्युतेः।
श्वासामोदमदान्धषट्पदकुलव्यादष्टकण्ठस्रजः
पायासुः परिमन्थराणि बलिनो मत्तस्य यातानि वः॥ २॥ कोकस्य।

भभभ्रमति मेदिनी लललम्बते चन्द्रमाः
कृकृष्ण वववद्द्रुतं हहहसन्ति किं वृष्णयः।
शिशीधु मुमुमुञ्च मे पपपपानपात्रे स्थितं
मदस्खलितमालपन् हलधरः श्रियं वः क्रियात्॥ ३॥ पुरुषोत्तमदेवस्य।

रेवतीवदनोच्छिष्टपरिपूतपुटे दृशौ।
वहन् हली मदक्षीवः पानगोष्ठ्यां पुनातु वः॥ ४॥ माघभोजदेवयोः।

भ्रमति धरणीचक्रं चक्रे नभस्तलयन्त्रणात्
प्रभवति न मे गात्रं किञ्चित्क्रियासु विघूर्णते।

जलधिसलिले मग्नं विश्वं विलोकय रेवति
त्रिजगदवताज्जल्पन्नेवं हली मदविह्वलः ॥ ५ ॥ माधवस्य ।

४६ बुद्धः ।

कामक्रोधौ द्वयमपि यदि प्रत्यनीकं प्रसिद्धं
हत्वानङ्गं किमिव हि रुषा साधितं त्र्यम्बकेन ।
यस्तु क्षान्त्या शमयति शतं मन्मथादीनरातीन्
कल्याणं वो दिशतु स मुनिग्रामणीरर्कबन्धुः ॥ १ ॥ सङ्घश्रियः ।

पादाम्भोजसमीपसन्निपतितस्वर्णाथदेहस्फुर-
च्छत्रस्तोमतया परिस्फुटमिलन्नीलाब्जपूजाविधिः ।
वन्दारुत्रिदशौघरत्नमुकुटोत्सर्पत्प्रभापल्लव-
प्रत्युन्मीलदपूर्वचीवरपटः शाक्यो मुनिः पातु वः ॥ २ ॥ वसुकल्पस्य ।

कारुण्यामृतकन्दलीसुमनसः प्रज्ञावधूमौक्तिक-
ग्रीवालङ्करणश्रियः शमसरित्पूरोच्छलच्छीकराः ।
ते मौलौ भवतां भवन्तु जगतीराज्याभिषेकोचित-
स्रग्भेदा अभयप्रदानचरणप्रेङ्खन्नखाग्रांशवः ॥ ३ ॥ श्रीधरनन्दिनः ।

शीलाम्भःपरिषेकशीतलदृढध्यानालवालस्फुर-
ज्ज्ञानस्कन्धमहोन्नतिः पृथुतरप्रज्ञोल्लसत्पल्लवः ।
देयात्तुभ्यमवार्यवीर्यविटपः क्षान्तिप्रसूनोद्गमः
सुच्छायः षडभिज्ञकल्पविटपी सम्बोधबीजं फलम् ॥ ४ ॥ तस्यैव ।

यदाख्यानासङ्गादुषसि पुनते वाचमृषयो
यदीयः सङ्कल्पो हृदि सुकृतिनामेव रमते ।
स सार्वः सर्वज्ञः पथि निरपवादे कृतपदो
जिनो जन्तूनुच्चैर्दमयतु भवावर्तपतितान् ॥ ५ ॥ मङ्गलस्य ।

५० कल्की ।

भ्रान्त्वा महीं ततस्ततस्तुरगाधिरूढो वेदद्विषो विदलयन्दलिताखिलाशः
देवो निवर्तितकलिः कृतमार्गदर्शी कल्कं स ते हरतु कल्किकुले भविष्यन् ॥
कस्यचित् ।

वामनादणुतमादनु जीयास्त्वं त्रिविक्रमतनूभृतदिक्कः ।
वीतहिंसनपथादथ बुद्धात्कल्किताहतसमस्त नमस्ते ॥ २ ॥
श्रीहर्षस्य ।

कल्की कल्कं हरतु जगतः स्फूर्जदूर्जस्वितेजा
वेदोच्छेदस्फुरितदुरितध्वंसने धूमकेतुः ।

येनोत्क्षिप्य क्षणमसिलतां धूमवत्कल्मषेच्छान्
म्लेच्छान् हत्वा दलितकलिनाकारि सत्यावतारः ॥ ३ ॥ जयदेवस्य ।

आघ्राणश्रवणावलोकनरसास्वादादयश्चुम्बन-
श्रद्धा वाग्विषवर्षणं च शिरसो दोषा इमे यैर्जनः ।
मूढो लङ्घितसत्पथोऽयमिति संक्रुद्धः शठानां हठाद्यः
शीर्षाणि कृपाणपाणिरलुनात्तस्मै नमः कल्किने ॥४॥ कुलदेवस्य ।

तीर्थानां शतमास्त किं तु फलति श्रद्धाभरादित्यसे-
र्धारातीर्थमपूर्वमेव कलयन् कल्की शिवायास्तु वः ।
यत्प्राप्याखिलवेदभेदकधियः श्रद्धातिरस्कारिणः
शङ्कस्यातिथयो भवन्ति भवनेष्वेनस्विनो जन्तवः ॥ ५ ॥ कस्यचित् ।

## ५१ कृष्णशैशवम् ।

कृष्णेनाद्य गतेन रन्तुमनसा मृद्भक्षिता स्वेच्छया
सत्यं कृष्ण क एवमाह मुसली मिथ्याम्ब पश्याननम् ।
व्यादेहीति विदारिते शिशुमुखे दृष्ट्वा समस्तं जग-
न्माता यस्य जगाम विस्मयपदं पायात्स वः केशवः ॥१॥ कस्यचित् ।

लीलोत्तानशयोऽपि गोपनिवहैरुद्गीयमानेष्वति-
प्रौढप्रौढमुरारिविक्रमकथागीतेषु दत्तश्रवाः ।
कस्मिंश्चित्क्षुभितः कुतोऽपि चलितः कुत्रापि रोमाञ्चितः
क्वापि प्रस्फुरितः कुतोऽपि हसितप्राप्तो हरिः पातु वः ॥ २ ॥
महीधरस्य ।

न्यञ्चन्नुदञ्चन् बहुशः कथञ्चिदुदञ्चितो वेपथुमान् हरिर्वः ।
देवोऽसि देवोऽसि सपाणितालं यशोदयोक्तः प्रहसन् पुनातु ॥ ३ ॥
कस्यचित् ।

अधरमधरे कण्ठे कण्ठं सचाटु दृशोर्दृशा-
वलिकमलिके कृत्वा गोपीजनेन ससम्भ्रमम् ।
शिशुरिति रुदन् कृष्णो वक्षस्थले निहितोऽचिरा-
न्निभृतपुलकः स्मेरः पायात् स्मरालसविग्रहः ॥४॥ दिवाकरदत्तस्य ।

भ्रमस्त्वच्चरितं तवाधिजननिच्छद्मोपजताकृते
त्वं यादृग्गिरिकन्दरेषु नयनानन्दः कुरङ्गीदृशाम् ।
इत्युक्तोऽमृतलेहनच्छलतया न्यस्तांगुलिः स्वानने
गोपीभिः पुरतः पुनातु जगतीमुत्तानमुप्तो हरिः ॥ ५ ॥ वनमालिनः ।

## ५२ कृष्णकौमारम्।

वत्स स्थावरकन्दरेषु विचरंश्चारप्रचारे गवां
हिंस्रान् वीक्ष्य पुरः पुराणपुरुषं नारायणं ध्यास्यसि।
इत्युक्तस्य यशोदया मुररिपोरव्याज्जगन्ति स्फुर-
द्बिम्बोष्ठद्वयगाढपीडनवशादव्यक्तभावं स्मितम् ॥१॥ अभिनन्दस्य।
श्यामोश्चन्द्रा स्वपिषि न शिशो नैति मामम्ब निद्रा
निद्राहेतोः शृणु सुत कथां कामपूर्वां कुरुष्व।
रामो नाम क्षितिपतिरभून्माननीयो रघूणा-
मित्युक्तस्य स्मितमवतु वो देवकीनन्दनस्य ॥ २ ॥ शतानन्दस्य।
मा दूरं व्रज तिष्ठ तिष्ठति पुरस्ते लूनकर्णो वृकः
पोतानत्ति इति प्रपञ्चचतुरोदारा यशोदागिरः।
आकर्ण्योच्छलदच्छहासविकसद्बिम्बाभदन्तच्छद-
द्वन्द्वोदीरितदन्तमौक्तिकमणिः कृष्णः स पुष्णातु वः ॥३॥ कस्यचित्।
कालिन्दीपुलिने मया न न मया शैलोपशल्ये न न
न्यग्रोधस्य तले मया न न मया राधापितुः प्राङ्गणे।
दृष्टः कृष्ण इतीरितस्य सभयं गोपैर्यशोदापते-
र्विस्मेरस्य पुरो हसन्निजगृहान्निर्यन् हरिः पातु वः ॥४॥ उमापतिधरस्य।
मन्थानमुज्झ मथितुं दधि न क्षमस्त्वं
बालोसि वत्स विरमेति यशोदयोक्तः।
क्षीराब्धिमन्थनविधिस्मृतिजातहासो
वाञ्छास्पदं दिशतु वो वसुदेवसूनुः ॥ ५ ॥ कस्यचित्।

## ५३ कृष्णस्वप्नायितम्।

शम्भो स्वागतमास्यतामित इतो वामेन पद्मोद्भव
क्रौञ्चारे कुशलं सुखं सुरपते वित्तेश नो दृश्यसे।
इत्थं स्वप्नगतस्य कैटभरिपोः श्रुत्वा यशोदा गिरः
किं किं बालक जल्पसीत्यनुचितं थूथूकृतं पातु वः ॥१॥ मयूरस्य।
धीरा धरित्रि भव भारमवेहि शान्तं
नन्वेष कंसहतकं विनिपातयामि।
इत्यद्भुतस्तिमितगोपवधूश्रुतानि
स्वप्नायितानि वसुदेवशिशोर्जयन्ति ॥ २ ॥ अभिनन्दस्य।
एते लक्ष्मण जानकीविरहिणं मां खेदयन्त्यम्बुदा
मर्माणीव च खण्डयन्त्यलममी क्रूराः कदम्बानिलाः।

इत्थं व्याहृतपूर्वजन्मविरहो यो राधया वीक्षितः
सेर्ष्यं शङ्कितया स वः सुखयतु स्वप्नायमानो हरिः ॥३॥ शुभाङ्कस्य ।
कालिन्दीपुलिनान्तवञ्जुललताकुञ्जे कुतश्चित्क्रमा-
त्सुप्तस्यैव मिथः कथाजुषि शनैः संवाहिकामण्डले ।
वैदेहीं दशकन्धरोऽपहरतीत्याकर्ण्य कंसद्विषो
हुं हुं वत्स धनुर्धनुर्धनुरिति व्यग्रा गिरः पान्तु वः ॥४॥ विरिञ्चेः ।
निर्मग्नेन मयाम्भसि स्मरभयादाली समालिङ्गिता
केनालीकमिदं तवाद्य कथितं राधे मुधा ताम्यसि ।
इत्थं स्वप्नपरम्परासु शयने श्रुत्वा गिरं शार्ङ्गिणः
सव्याजं शिथिलीकृतः कमलया कण्ठग्रहः पातु वः ॥५॥ कस्यचित् ।

## ५४ कृष्णयौवनम् ।

सोत्तापं जरतीभिरस्फुटरसं बालाभिरुन्मीलित-
श्वासं वेश्मसुवासिनीभिरधिकाकूतं भुजिष्याजनैः ।
प्रत्यग्रप्रकटीकृतार्ति कुलटासार्थेन दृष्टं हरे-
रव्याद्वो नवयौवनोत्सवदशानिर्व्याजमुग्धं वपुः ॥ १ ॥
भट्टपालीयपीताम्बरस्य ।

राधायामनुबद्धनर्मनिभृताकारं यशोदाभया-
दभ्यर्णेष्वतिनिर्जनेषु यमुनारोधोलतावेश्मसु ।
मन्दाश्लथवल्लवानुकरणक्रीडस्य कंसद्विषो
लब्धं यौवनमात्रया विजयते गम्भीरशोभं वपुः ॥ २ ॥ अभिनन्दस्य ।

वत्स त्वं नवयौवनोऽसि चपलाः प्रायेण गोपस्त्रियः
कंसो भूपतिरब्जनालभिदुरग्रीवा वयं गोदुहः
सैषानर्थपरम्परेति भगवत्याशङ्कितातिक्रमे
कृष्णे तद्विनयाय नन्दगृहिणीशिक्षोक्तयः पान्तु वः ॥३॥ वर्द्धमानस्य ।

आरूढान्तरयौवनस्य परितो गोष्ठीरनुभ्राम्यत-
स्तत्तासु मनोगतं सुनिभृतं संव्याचिकीर्षोर्हरेः ।
वेगादुच्छलितास्फुटाक्षरदशागर्भास्त्रपागौरवा-
त्प्रत्यञ्चो वलिता भवन्तु भवतां कृत्याय वागूर्मयः ॥४॥ चक्रपाणेः ।

आहूताद्य मयोत्सवे निशि गृहं शून्यं विमुच्यागता
क्षीबः प्रैष्यजनः कथं कुलवधूरेकाकिनी यास्यति ।
वत्स त्वं तदिमां नयालयमिति श्रुत्वा यशोदागिरो
राधामाधवयोर्जयन्ति मधुरस्मेरालसा दृष्टयः ॥५॥ श्रीमत्केशवसेनस्य ।

## ५५ हरिक्रीडा।

इहनिचुलनिकुञ्जे मध्यमध्येऽस्य रन्तु-
र्विजनमजनि शय्या कस्य बालप्रबालैः।
इति कथयति वृन्दे योषितां पान्तु युष्मा-
न्स्मितशबलितराधामाधवालोकितानि ॥ १ ॥ रूपदेवस्य।

कृष्ण त्वद्वनमालया सह कृतं केनापि कुञ्जान्तरे
गोपीकुन्तलबर्हदाम तदिदं प्राप्तं मया गृह्यताम्।
इत्थं दुग्धमुखेन गोपशिशुनाऽऽख्याते त्रपानम्रयो-
राधामाधवयोर्जयन्ति वलितस्मेरालसा दृष्टयः॥ श्रीमल्लदमणसेनदत्तस्य

भ्रूवल्लीचलनैः कयापि नयनोन्मेषैः कयापि स्मित-
ज्योत्स्नाविच्छुरितैः कयापि निभृतं सम्भावितस्याध्वनि।
गर्वोद्भेदकृतावहेलविनयश्रीभाजि राधानने
सातङ्कानुनयं जयन्ति पतिताः कंसद्विषो दृष्टयः ॥३॥ उमापतिधरस्य।

व्यालाः सन्ति तमालवल्लिषु वृतं वृन्दावनं वानरै-
रुग्रक्रं यमुनाम्बु घोरवदनव्याघ्रा गिरेः सन्धयः।
इत्थं गोपकुमारकेषु वदतः कृष्णस्य तृष्णोत्तर-
स्मेराभीरवधूनिषेधि नयनस्याकुञ्चनं पातु वः ॥४॥ तस्यैव।

सङ्केतीकृतकोकिलादिनिनदं कंसद्विषः कुर्वतो
द्वारोन्मोचनलोलशङ्खवलयश्रेणिस्वनं शृण्वतः।
केयं केयमिति प्रगल्भजरतीनादेन दूनात्मनो
राधाप्राङ्गणकोणकोलिविटपिक्रोडे गता शर्वरी॥५॥आचार्य्यगोपीकस्य।

## ५६ प्रश्नोत्तरम्।

देवि त्वं कुपिता त्वमेव कुपिता कोऽन्यः पृथिव्या गुरु-
र्माता त्वं जगतां त्वमेव जगतां माता न वित्तोपरः।
देवि त्वं परिहासकेलिकलहेनन्ता त्वमेवेत्यथ
ज्ञातानन्दपदो नमज्जलधिजां शौरिश्चिरं पातु वः ॥१॥ वाक्पतेः।

कोयं द्वारि हरिः प्रयाह्युपवनं शाखामृगेणात्र किं
कृष्णोऽहं दयिते बिभेमि सुतरां कृष्णः कथं वानरः।
मुग्धेऽहं मधुसूदनो व्रज लतां तामेव पुष्पान्विता-
मित्थं निर्वचनीकृतो दयितया ह्रीणो हरिः पातु वः ॥२॥शुभाङ्कस्य।

कस्त्वं भो निशि केशवः शिरसिजैः किं नाम गर्वायसे

भद्रे शौरिरहं गुणैः पितृगतैः पुत्रस्य किं स्यादिह ।
चक्री चन्द्रमुखि प्रयच्छसि न मे कुण्डीं घटीं दोह्निनी-
मित्थं गोपवधूह्नितोत्तरतया दुःस्थो हरिः पातु वः ॥३॥ कस्यचित् ।

वासः सम्प्रति केशव क्व भवतो मुग्धेक्षणे नन्विदं
वासं ब्रूहि शठ प्रकामसुभगे त्वद्गात्रसंश्लेषतः ।
यामिन्यामुषितः क्व धूर्त्त वितनुर्मुष्णाति किं यामिनी
शौरिर्गोपवधूं छलैः परिहसन्नेवंविधैः पातु वः ॥४॥ कस्यचित् ।

कुशलं राधे सुखितोऽसि कंस कंस क्व सा राधा ।
इति पालीप्रतिवचनैर्विलक्षहासो हरिर्जयति ॥५॥ कस्यचित् ।

## ५७ वेणुनादः

कृष्णः पातु स यस्य संसदि गवां वेणुप्रणादोर्मयो
गोपीनामनुवासरं नवनवा घूर्णन्ति कर्णोदरे ।
तद्वक्त्रासववासिता इव तदाकूतप्रपञ्चा इव
भ्राम्यत्तत्करपल्लवांगुलिगलल्लावण्यलिप्ता इव ॥१॥ लक्ष्मीधरस्य ।

तिर्य्यक्कन्धरमंसदेशमिलितश्रोत्रावतंसं स्फुर-
द्बर्हांसासितकेशपाशमनृजुभ्रूवल्लरीविभ्रमम् ।
गुञ्जद्वेणुनिवेशिताधरपुटं साकूतराधानन-
न्यस्तामीलितदृष्टि गोपवपुषो विष्णोर्मुखं पातु वः ॥ २ ॥
श्रीमल्लक्ष्मणसेनस्य ।

सायं व्यावर्त्तमानाखिलसुरभिकुलाह्वानसङ्केतनामा-
न्याभीरीवृन्दचेतोहठहरणकलासिद्धमन्त्राक्षराणि ।
सौभाग्यं वः समन्ताद्दधतु मधुभिदः केलिगोपालमूर्त्तेः
सानन्दाकृष्टवृन्दावनरसिकमृगश्रेणयो वेणुनादाः ॥३॥ उमापतिधरस्य ।

वक्त्रक्वाणितवेणुरह्नि शिथिले व्यावर्त्तयन् गोकुलं
बर्हापीडकमुत्तमाङ्गरचितं गोधूलिधूम्रं दधत् ।
म्लायन्त्या वनमालयापरिगतः श्रान्तोऽपि रम्याकृति-
र्गोपस्त्रीनयनोत्सवो वितरतु श्रेयांसि वः केशवः ॥४॥ कस्यचित् ।

अंसासक्तकपोलवंशवदनव्यासक्तबिम्बाधर-
द्वन्द्वोरितमन्दमन्दपवनप्रारब्धमुग्धध्वनिः ।
ईषद्वक्रिमलोलहारनिकरः प्रत्येकरोकानन-
न्यञ्चञ्चञ्चदुदञ्चदंगुलिचयस्त्वां पातु राधाधवः ॥ ५ ॥
केशरकोलीयनाथोकस्य ।

## ५८ गीतम् ।

सञ्जाते विरहे कयापि हृदये सन्दानिते चिन्तया
कालिन्दीतटवेतसीवनघनच्छायानिषण्णात्मनः ।
पायासुः कलकण्ठकूजितकला गोपस्य कंसद्विषो
जिह्वावर्जिततालुमूर्च्छितमरुद्विस्फारिता गीतयः ॥१॥ कस्यचित् ।

कालिन्दीजलकुञ्जवञ्जुलवनच्छायानिषण्णात्मनो
राधाबद्धनवानुरागरसिकस्योत्कण्ठितं गायतः ।
तत्पायादपरिस्खलज्जलरुहापीडं कलस्पृङ् नत-
ग्रीवोत्तानितकर्णतर्णककुलैराकर्ण्यमानं हरेः ॥२॥ उद्भटस्य ।

देवस्त्वामेकजङ्घावलयितलगुडो मूर्ध्नि विन्यस्तबाहु-
र्गायन् गोयुद्धगीतीरुपरचिताशिरःशेखरः प्रग्रहेण ।
दर्पस्फूर्जन्महोक्षद्वयसमररसाबद्धदीर्घानुबन्धः
क्रीडागोपालमूर्तिर्मुररिपुरवतादात्तगोरक्षलीलः ॥ ३ ॥ योगेश्वरस्य ।

याते द्वारवतीं पुरं मधुरिपौ तद्वस्त्रसंव्यानया
कालिन्दीतटकुञ्जवञ्जुललतामालम्ब्य सोत्कण्ठया ।
उद्गीतगुरुबाष्पगद्गदगलत्तारस्वरं राधया
येनान्तर्जलचारिभिर्जलचरैरुत्कण्ठमाकूजितम् ॥ ४ ॥ कस्यचित् ।

यानि त्वच्चरितामृतानि रशनालेह्यानि धन्यात्मनां
ये वा शैशवचापलव्यतिकरा राधानुबन्धोन्मुखाः ।
या वा भावितवेणुगीतगतयो लीला मुखाम्भोरुहे
धारावाहितया वहन्तु हृदये तान्येव तान्येव मे ॥५॥ कस्यचित् ।

## ५९ कृष्णभुजः ।

भ्राम्यद्भास्वरमन्दराद्रिशिखरव्याघट्टनाद्विस्फुरत्-
केयूराः पुरुहूतकुञ्जरकरप्राग्भारसंवर्द्धिनः ।
दैत्येन्द्रप्रमदाकपोलविलसत्पत्राङ्कुरच्छेदिनो
दोर्दण्डाः कलिकालकल्मषमुषः कंसद्विषः पान्तु वः ॥१॥ कस्यचित् ।

लक्ष्म्याः केशप्रसवरजसां विन्दुभिः सान्द्रपातै-
रुद्वर्णश्रीर्घननिधुवनक्लान्तिनिद्रान्तरेषु ।
दोर्दण्डोऽसौ जयति जयिनः शार्ङ्गिणो मन्दराद्रि-
ग्रावश्रेणीनिकषमसृणक्षुण्णकेयूरपत्रः ॥ २ ॥ भगीरथस्य ।

ये गोवर्द्धनमूलकर्दमरसव्यादष्टबर्हच्छदा-
ये वृन्दावनकुक्षिषु व्रजवधूलीलोपधानानि च ।

ये चाभ्यङ्गसुगन्धयः कुवलयापीडस्य दानाम्भसा
ते वो मङ्गलमादिशन्तु सततं कंसद्विषो बाहवः ॥३॥ शुभाङ्कस्य।

जयश्रीविन्यस्तैर्महित इव मन्दारकुसुमैः
स्वयं सिन्दूरेण द्विपरणमुदा मुद्रित इव।
भुजामर्दक्रीडाहतकुवलयापीडकरिणः
प्रकीर्णासृग्बिन्दुर्जयति भुजदण्डो मुरजितः ॥ ४ ॥ जयदेवस्य।

पान्तु वो जलदश्यामाः शार्ङ्गज्याघातकर्कशाः।
त्रैलोक्यनगरस्तम्भाश्चत्वारो हरिबाहवः ॥ ५ ॥ श्रीव्यासपादानाम्।

## ६० गोवर्धनोद्धारः।

सत्रासार्ति यशोदया प्रियगुणप्रीतेक्षणं राधया
नग्नैर्वल्लवसूनुभिः सरभसं सम्भावितात्मोर्जितैः।
भीतानन्दितविस्मितेन विषमं नन्देन चालोकितः
पायाद्वः करपद्मसुस्थितमहाशैलः सलीलो हरिः ॥१॥ सोल्लोकस्य।

एकेनैव चिराय कृष्ण भवता गोवर्द्धनोयं धृतः
श्रान्तोसि क्षणमास्स्व साम्प्रतममी सर्वे वयं दध्महे।
इत्युल्लासितदोष्णि गोपनिवहे किञ्चिद्भुजाकुञ्चन-
न्यञ्चच्छैलभरार्दिते विरमति स्मेरो हरिः पातु वः ॥२॥ कस्यचित्।

स्नेहादंसतटेवलम्ब्य चरणावारोप्य तत्पादयो-
र्दूरोदस्तमहीधरस्य तनुतामाशंक्य दोष्णो हरेः।
शैलोद्धारसहायतां जिगमिषोरप्राप्तगोवर्धना
राधायाः सुचिरं जयन्ति गगने वन्ध्याः करभ्रान्तयः ॥३॥ शतानन्दस्य।

दूरं दृष्टिपथात्तिरोभव हरेर्गोवर्धनं बिभ्रत-
स्त्वय्यासक्तदृशः कृशोदरि करः स्रस्तोस्य माभूदिति।
गोपीनामिति जल्पितं कलयतो राधानिरोधाश्रयं
श्वासाः शैलभरश्रमभ्रमकराः कृष्णस्य पुष्णन्तु वः ॥४॥ कस्यचित्।

मुग्धे नाथ किमात्थ तन्वि शिखरिप्राग्भारभुग्नो भुजः
साहाय्यं प्रिय किं भजामि सुभगे दोर्वल्लिमायासय।
इत्युल्लासितबाहुमूलविचलच्चेलाञ्चलव्यक्तयो
राधायाः कुचयोर्जयन्ति चलिताः कंसद्विषो दृष्टयः ॥५॥ जयदेवस्य।

## ६१ उत्कण्ठा।

रत्नच्छायाच्छुरितजलधौ मन्दिरे द्वारकायां
रुक्मिण्यापि प्रततपुलकोद्भेदमालिङ्गितस्य।
विश्वं पायान्मसृणयमुनातीरवानीरकुञ्जे-

ष्वाभीरस्त्रीनिभृतचरितध्यानमूर्च्छा मुरारेः ॥१॥ उमापतिधरस्य ।
कालिन्दीमनुकूलकोमलरयामिन्दीवरश्यामलाः
शैलोपान्तभुवः कदम्बकुसुमैरामोदिनः कन्दरान् ।
राधां च प्रथमाभिसारमधुरां जातानुतापः स्मर-
न्नस्तु द्वारवतीपतिस्त्रिभुवनामोदाय दामोदरः ॥२॥ शरणस्य ।
कामं कामयते न केलिनलिनीं नामोदते कौमुदी-
निस्यन्दैर्न समीहते मृगदृशामालापलीलामपि ।
सीदन्नेष निशासु दुःसहतनुर्भोगाभिलाषालसै-
रङ्गैस्ताम्यति चेतसि व्रजवधूमाधाय मुग्धो हरिः॥३॥ तस्यैव ।
प्रत्यग्रोज्झितगोकुलस्य शयनादुत्स्वप्नमूढस्य मां
मा गोत्रस्खलितादुपैतु च दिवा राधेति भीरोरति ।
रात्रावस्वपतो दिवा च विजने लक्ष्मीति चाभ्यस्यतो
राधां संस्मरतः श्रियं रमयतः खेदो हरेः पातु वः ॥४॥ कस्यचित् ।
तल्पीकृतस्य भुजगाधिपतेः फणायां रत्नेषु संवलितबिम्बतया रमायाः ।
कृष्णावतारकृतगोपवधूसहस्रसङ्गस्मृतिर्जयति सोत्कलिकस्य विष्णोः
॥ ५ ॥ कस्यचित् ।

## गोपीसन्देशः ।

ते गोवर्धनकन्दराः स यमुनाकच्छः स चेष्टारसो
भाण्डीरः स वनस्पतिः सहचरास्ते तच्च गोष्ठाङ्गणम् ।
किं ते द्वारवतीभुजङ्ग हृदयं नायान्ति दोषैरपी-
त्यव्याहृतो हृदि दुःसहं व्रजवधूसन्देशशल्यं हरेः ॥ १ ॥
पान्थ द्वारवतीं प्रयासि यदि हे तद्देवकीनन्दनो
वक्तव्यः स्मरमोहमन्त्रविवशा गोप्योऽपि नामोज्झिताः ।
एताः केतकगर्भधूलिपटलैरालोक्य शून्या दिशः
कालिन्दीतटभूमयोऽपि तरवो नायान्ति चिन्तास्पदम् ॥२॥ कस्यचित् ।
उपनय मासि पत्रं चेदं लिखामि किमत्र वा
त्वमिति विनयभ्रंशो यूयं त्विति प्रणयक्षतिः।
सुहृदिति मृषा नाथेत्यूनं नृपेति तटस्थता
कथमिव ततः सन्देष्टव्यो मया यदुनन्दनः ॥ ३॥ पुंसोकस्य ।
कालिन्द्याः पुलिनं प्रदोषमरुतो रम्याः शशाङ्कांशवः
सन्तापं न हरन्तु नाम नितरां कुर्वन्ति कस्मात्पुनः ।
सन्दिष्टं व्रजयोषितामिति हरेः संशृण्वतोऽन्तःपुरे
निःश्वासाः प्रसृता जयन्ति रमणीसौभाग्यगर्वच्छिदः ॥ ४ ॥
पञ्चतन्त्रकृतः ।

मथुरापथिक मुरारेरुद्गेयं द्वारि वल्लवीवचनम् ।
पुनरपि यमुनासलिले कालियगरलानलो ज्वलति ॥५॥ वीरसरस्वत्याः।

## सामान्यहरिः ।

सेयं द्यौस्तदिदं शशाङ्कदिनकृच्चिह्नं नभः सा क्षिति-
स्तत्पातालतलं त एव गिरयस्तेम्भोधरास्ता दिशः ।
इत्थं नाभिविनिर्गतेन सशिरः कम्पाद्भुतं वेधसा
यस्यान्तश्च बहिश्च दृष्टमखिलं त्रैलोक्यमव्यात्स वः ॥१॥

वाक्पतिराजस्य ।

लक्ष्मीं यत्परिचारिकेति नयनं यस्येति भासांपतिं
यत्पादार्घभवेति नाकसरितं येनोद्धृतेति श्रुतिम् ।
ईशं यत्तनुभागभागिति जनः शुश्रूषते सादरं
भूयाद्विश्वनमस्यमानमहिमा भूत्यै स वः केशवः ॥२॥ समन्तभद्रस्य।
संसारार्तिपरिश्रमाध्वविटवी क्षीरोदवापीपयः-
क्रीडानाटकनायको विजयते सत्कर्म्मबीजांकुरः ।
दैत्यस्त्रीस्तनपालिपाणिजपदव्यालोपशिल्पोत्तरो
देवः श्रीवदनेन्दुबिम्बलडहज्योत्स्नाचकोरो हरिः ॥ ३ ॥ भानोः ।
बीजं ब्रह्मैव देवो मधु जलनिधयः कर्णिका स्वर्णशैलः
कन्दो नागाधिराजो वियदपि विपुलः पत्रकोशावकाशः ।
द्वीपाः पत्राणि मेघा मधुपकुलममूस्तारका गर्भधूलि-
र्यस्यैतन्नाभिपद्मं भुवनमिति स वः शर्म्म देवो दधातु ॥४॥ हलायुधस्य।
यं लक्ष्मीरुपजीवति स्म भजते यं भारती संभ्रमा-
देतस्मै किमु दीयतां कथमसावस्मादृशैः स्तूयताम् ।
सेव्यो वा कथमेष यस्य शिरसा धत्ते पदार्घ्यं शिव-
स्तस्मात्कृत्यमजानतो मम मनोवृत्तेः प्रमाणं हरिः ॥५॥ तिलचन्द्रस्य।

## ६४ हरिभक्तिः ।

बद्धेनाञ्जलिना नतेन शिरसा गात्रैः सरोमोद्गमैः
कण्ठेन स्वरगद्गदेन नयनेनोद्गीर्णबाष्पाम्बुना ।
नित्यं त्वच्चरणारविन्दयुगलध्यानामृतास्वादिना-
मस्माकं सरसीरुहाक्ष सततं सम्पद्यतां जीवितम् ॥१॥ श्रीकुलशेखरस्य।

नास्था धर्मे न वसुनिचये नैव कामोपभोगे
यद्यद्भव्यं भवतु भगवन् पूर्व्वकर्म्मानुरूपम् ।
एतत्प्रार्थ्यं मम बहुमतं जन्मजन्मान्तरेऽपि
त्वत्पादाम्भोरुहयुगलके निश्चला भक्तिरस्तु ॥ २ ॥ तस्यैव ।

मज्जन्मनः फलमिदं मधुकैटभारे मत्प्रार्थनैव मदनुग्रह एष एव ।
त्वद्भृत्यभृत्यपरिचारकभृत्यभृत्यभृत्यस्य भृत्य इति मां स्मर लोकनाथ
तस्यैव ।

नाहं वन्दे तव चरणयोर्द्वन्द्वमद्वन्द्वहेतोः
कुम्भीपाकं गुरुमपि हरे नारकं नापनेतुम् ।
रम्या रामा मृदुतनुलता नन्दने नाभिरन्तुं
भावे भावे हृदयभवने भावयेयं भवन्तम् ॥ ४ ॥ तस्यैव ।

मुकुन्द मूर्ध्ना प्रणिपत्य याचे भवन्तमेकान्तमियन्तमर्थम् ।
अविस्मृतस्त्वच्चरणारविन्दे भवे भवे मेऽस्तु तव प्रसादात् ॥ ५ ॥
कस्यचित् ।

## ६५ समुद्रमथने हरिः ।

श्रेयोऽस्याश्चिरमस्तु मन्दरगिरेर्माघानि पार्श्वैरियं
माचाग्लम्भि महोर्मिभिः फणिपतेर्मास्पि लालाविषैः ।
इत्याकूतजुषः श्रियं जलनिधेरर्धोत्थितां पश्यतो
वाचोऽन्तः स्फुरिता बहिर्विकृतिभिर्व्यक्ता हरेः पान्तु वः ॥ १ ॥

पाण्डुलक्ष्मीकुचाभोगे नर्तिता हरिणा दृशः ।
औत्सुक्यादिव तेनादौ निहिता वरणस्रजः ॥ २ ॥
श्रीमत्केशवसेनदेवस्य ।

पातु त्रिलोकीं हरिरम्बुराशौ प्रमथ्यमाने कमलां विलोक्य ।
अज्ञातहस्तच्युतभोगिनेत्रः कुर्वन् वृथा बाहुगतागतानि ॥ ३ ॥
त्रिभुवनसरस्वत्याः ।

आघ्रणा नासि गिरेः क्षता न पयसाप्यार्तासि न म्लापिता
निश्वासैः फणिनोऽसि न त्वदनुगा नायासिता कापि न ।
स्वं वेश्म प्रतिगच्छतोरिति मुहुः श्रीशार्ङ्गिणोः सस्पृहं
सा प्रश्नोत्तरयुग्मपङ्क्तिरुभयोरत्यायता पातु वः ॥ ४ ॥ कस्यचित् ।

पाथोधेः परिमथ्यमानसलिलादर्धोत्थितायाः श्रियः
सानन्दोल्लसितभ्रुवः कुटिलया दृष्ट्यैव पीताननः ।
अज्ञातस्वकरद्वयीविगलितव्यालोलमन्थोरगः
शून्ये बाहुगतागतानि रचयन्नारायणः पातु वः ॥ ५ ॥ सागरस्य ।

## ६६ समुद्रोत्थितलक्ष्मीः ।

सम्पूर्णः पुनरभ्युदेति किरणैरिन्दुस्ततो दन्तिनः
कुम्भद्वन्द्वमिदं पुनः सुरतरोरप्रोल्लसन्मञ्जरी ।

इत्थं यद्वदनस्तनद्वयवलद्रोमावलीषु भ्रमः
क्षीराब्धेर्मथने भवाद्विविषदां लक्ष्मीरसावस्तु वः ॥ १ ॥ कस्यचित् ।
सानन्दं त्रिदशैः सविस्मयमविश्वस्तैः सुरद्वेषिभिः
साश्चर्यं सुरसुन्दरीपरिजनैः सेर्ष्यं च रम्भादिभिः ।
साकूतं च सकौतुकं च समनोह्लादं च कसद्विषा
दृष्टा दुग्धमहोदधिप्रमथने लक्ष्मीः शिवायास्तु वः ॥ २ ॥ शङ्करदेवस्य ।
जयति महोदधिमथने मुररिपुपरिरम्भसम्भृता लक्ष्मीः ।
सत्वरसत्रपसरभससपुलकसोत्कम्पसस्वेदा ॥ ३ ॥ कस्यचित् ।
मन्थानोल्लासलीलाचलचिकुरमिलत्कुण्डलां कर्णपालिं
मिथ्यैवोन्मोचयन्त्याः कृतकपटपरावृत्तयस्ते कटाक्षाः ।
लक्ष्म्याः पायासुरन्तः स्मरभरविकसत्स्मेरगण्डस्थलाया
लज्जालोलं बलन्तो मधुरिपुवदनाम्भोजभृङ्गाश्चिरं वः ॥ ४ ॥
भोजदेवस्य ।
श्रियः क्षीराम्भोधेर्निजावनयनम्रेण वपुषा
शनैरुत्तिष्ठन्त्याः पवनचलितेन्दीवरदृशः ।
कटाक्षो मन्दाक्षास्तिमितलुलितभ्रूर्हरिमनु
प्रकीर्णः कालिन्दीलघुलहरिवृत्तिर्विजयते ॥ ५ ॥ कस्यचित् ।

## ६७ लक्ष्मीस्वयंवरः ।

सोद्वेगं करिकृत्तिवाससि भवद्व्रीडान्वितं ब्रह्मणि
त्रैलोक्यैकगुरावनादरबलत्तारं शचीभर्तरि ।
त्रासामीलितपक्ष्म भास्वति लसत्प्रेमप्रसन्नं हरौ
क्षीरोदोत्थितया श्रिया विनिहितं चक्षुः शिवायास्तु वः ॥ १ ॥ भारवेः ।
समुद्रमथनव्यग्रसुरसन्दोहनिस्पृहाः ।
लग्नाः कृष्णस्य वक्त्रेन्दौ पान्तु वो दृष्टयः श्रियः ॥ २ ॥
उमापतिधरस्य ।
सोत्साहं दधति स्वयंवरमहारङ्गे मिथः स्पर्धया
नेपथ्यप्रतिपन्नचित्रकलनाश्चर्यं सुराणां गणे ।
उद्यान्त्या मकरालयात्कमलया सम्भावितः केन-
चिद्दृक्पातेन विरूढगूढहसितानन्दो हरिः पातु वः ॥ ३ ॥ महादेवस्य ।
आख्याते हसितं पितामह इति त्रस्तं कपालीति च
व्यावृत्तं गुरुरित्यथो दहन इत्याविष्कृता भीरुता
पौलोमीपतिरित्यसूयितमथ व्रीडावनम्रं श्रिया
पायाद्वः पुरुषोत्तमोऽयमिति च न्यस्तः स पुष्पाञ्जलिः ॥ ४ ॥ क्षेमेश्वरस्य ।

मुग्धे मुञ्च विषादमत्र बलभित्कम्पो गुरुस्त्यज्यतां
सद्भावं भज पुण्डरीकनयने मान्यानिमान्मानय ।
लक्ष्मीं शिक्षयतः स्वयंवरविधौ धन्वन्तरेर्वाक्छला-
दित्यन्यप्रतिषेधमात्मनि विधिं शृण्वन् हरिः पातु वः ॥ ५ ॥
पुण्डरीकस्य ।

## लक्ष्मीशृङ्गारः ।

शान्तं शेते न शेषः स्थगयति तिमिरं कौस्तुभो नापि भासः
साम ब्रह्मापि गीत्वा मुकुलितनयनो निद्रया ध्यायतीव ।
लक्ष्म्या कर्णे गदित्वा मृदुकमिति हरेर्व्रीडया हारिहास्यं
हस्तो हस्तेन नीवीवसनविघटनाद्वारितो वः पुनातु ॥१॥ कस्यचित् ॥

तिर्यक्त्वादबुधः फणी मणिरुचोऽप्यस्योपधानीकृतै-
र्मन्दारैः स्थगितांशवः स्तनघनस्वेदास्पदं कौस्तुभः ।
नाभीपद्मरजोऽन्ध एव सततं वेधा मुधा लज्जसे
लक्ष्मीमित्यवबोधयन्निभुवनारम्भे हरिः पातु वः ॥ २ ॥ गणपतेः ।

मिथ्याकण्डूतिसाचीकृतगलसरणिर्येषु जातो गरुत्मा-
न्ये निद्रां नाटयद्भिः शयनफणिफणैर्लक्षिता न श्रुताश्च ।
ये च ध्यानानुबन्धच्छलमुकुलदृशा वेधसा नैव दृष्टा-
स्ते लक्ष्मीं नमयन्तो त्रिभुवनविधयः पान्तु वो माधवस्य ॥ ३ ॥
राजशेखरस्य ।

उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकबरीभारमंसे वहन्त्याः ।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥ ४ ॥
वररुचेः ।

कचचिबुककुचाग्रे पाणिषु व्यापृतेषु
प्रथमजलधिपुत्रीसङ्गमे रङ्गधाम्नि ।
ग्रथितनिबिडनीवीग्रन्थिनिर्मोचनेच्छो-
श्चतुरधिकभुजाशा शार्ङ्गिणो वः पुनातु ॥ ५ ॥ दाक्षिणात्यस्य ।

## ६९ लक्ष्मीः ।

प्रवीरहठभोग्यापि जयति श्रीर्महासती ।
कृत्स्नत्रैलोक्यवासापि कृष्णोरस्थलशायिनी ॥ १ ॥ राजशेखरस्य ।

विद्वानक्षरनष्टधीरिति शुचिर्धर्मध्वजीति स्थिर-
स्तब्धः क्रुद्ध इति ग्रहीति सुदृढः क्षन्ता लघीयानिति ।
मायावीति च नीतिशास्त्रकुशलो यामन्तरेणेश्वरै-
र्गण्यन्ते गुणिनोऽपि दूषणपदं तस्यै नमस्ते श्रिये ॥ २ ॥ सोलूकस्य ।

विष्णुवक्षस्थले लक्ष्मीरस्ति कौस्तुभदीपिते
पुनातु निवसन्ती वो दृढदोस्तम्भतोरणं ॥ ३ ॥ राजशेखरस्य ।

जयति श्रीमुखं कान्तकौस्तुभप्रतिबिम्बितम् ।
चन्द्रमा मनसो जात इति यद्गायति श्रुतिः ॥ ४ ॥

वृत्ते साङ्गविवाहमङ्गलविधौ लब्धापि दैत्यद्रुहः
सौहार्दे विमनाः पुनातु भवती लक्ष्मीः स्मरन्ती पितुः ।
यामाश्वासयतीव सोदरतया प्रत्यग्रबिम्बग्रह-
व्याजादङ्कगतामनंकुशनिजस्नेहो मुहुः कौस्तुभः ॥ ५ ॥ शरणदेवस्य ।

## ७० लक्ष्म्युपालम्भः ।

कोपस्तेज इति ग्रहः स्थितिरिति क्रीडेति दुश्चेष्टता
माया च व्यवहारकौशलमिति स्वच्छत्वमित्यज्ञता ।
दौर्जन्यं स्फुटवादितेति धनिनामग्रे बुधैर्यद्दशा-
दोषोऽपि व्यपदिश्यते गुणतया तस्यै नमोऽस्तु श्रिये ॥ १ ॥
शालूकस्य ।

रत्नाकरस्तव पिता स्थितिरम्बुजेषु
भ्राता तुषारकिरणः पतिरादिदेवः ।
केनापरेण कमले वद शिक्षितासि
सारङ्गशृङ्गकुटिलानि विचेष्टितानि ॥ २ ॥ कस्यचित् ।

कस्मैचित्कपटाय कैटभरिपूरःपीठदीर्घालयां
देवि त्वामभिवाद्य कुप्यसि न चेत्तत्किंचिदाचक्ष्महे ।
यत्ते मन्दिरमम्बुजन्म किमिदं धियागृहं यच्च ते
नीचान्नीचतरोपसर्पणमपामेतत्किमाचार्यकम् ॥ ३ ॥ मुरारेः ।

अस्मान्मा भज कालकूटभगिनि स्वप्नेपि पद्मालये
व्याधीभूय कदर्थयन्ति बहुशो मातर्विकारा इमे ।
यच्चक्षुर्न निरीक्षते च्छविषयं नैवं शृणोति श्रुतिः
प्राणा एव वरं प्रयान्ति न पुनर्निर्यान्ति वाचो बहिः ॥ ४ ॥
भवग्रामीणवाथोकस्य ।

लक्ष्मीर्नीचानुरक्तासि पुनरब्धिबिलं विश ।
क्व मन्दरः क्व ते देवाः कस्त्वामुत्तोलयिष्यति ॥ ५ ॥ कस्यचित् ।

## ७१ सरस्वती ।

वीणाक्वाणलयोल्लासिलोलदङ्गुलिपल्लवः ।
भारत्याः पातु भूतानि पाणिर्लसितकङ्कणः ॥ १ ॥ कङ्कणस्य ॥

आदित्यादपि नित्यदीप्तममृतप्रस्यन्दि चन्द्रादपि
त्रैलोक्याभरणं मणेरपि तमःकाषं हुताशादपि ।
विश्वालोकि विलोचनादपि परब्रह्मस्वरूपादपि
स्वान्तानन्दनमस्तु धाम जगतस्तोषाय सारस्वतम् ॥ २ ॥ बलदेवस्य ।

निगूढं कुत्रापि क्वचिदपि बहिर्व्यक्तमधुरं
सरस्वत्याः स्रोतः परिमलगभीरं विजयते ।
अतिस्वादुन्यन्तःपिहितरससरम्ये यदुपरि
प्लवन्ते भूयांसः कतिचिदपि मज्जन्ति निपुणाः ॥ ३ ॥ गदाधरस्य ।

क्वचिदिव रविजाड्यच्छेदि क्वचित्प्रचुराचिर-
द्युतिरिव चमत्कारि क्वापि क्षमाकरवन्मृदु ।
शिखिवदनृजु क्वापि क्वापि प्रदीपवदुज्ज्वलं
विजयि किमपि ज्योतिः सारस्वतं तदुपास्महे ॥ ४ ॥ अपिदेवस्य ।

यस्य प्रसादपरमाणुरसायनेन
कल्पान्तरे सुकविकीर्तिशरीरमस्ति ।
या कामधेनुरिव कामशतानि देवी
दुग्ध्वा प्रयच्छति नमामि सरस्वतीं ताम् ॥ ५ ॥
पुरुषोत्तमदेवस्य ।

## ७२ प्रशस्तचन्द्रः ।

शृङ्गारे सूत्रधारः कुसुमशरमुनेराश्रमब्रह्मचारी
नारीणामादिदेवस्त्रिभुवनमहितो रागयज्ञे पुरोधाः ।
ज्योत्स्नासत्रं दधानः पुरमथनजटाजूटकोटीशयालु-
र्देवः क्षीरोदजन्मा जयति कुमुदिनीनायकः श्वेतभानुः ॥ १ ॥
वसुकल्पस्य ।

कामायुष्टोमयज्वा पुरमथनजटाचक्रकौमारभक्तिः
प्राणायामोपदेष्टा सरसिरुहवने शर्वरीसार्वभौमः ।
देवो जागर्ति भानोर्भुवनभरभृतः स्कन्धविश्रामबन्धुः
शृङ्गाराद्वैतवादी शमितकुमुदिनीमौनमुद्रो मृगाङ्कः ॥ २ ॥ मुरारेः ।

कन्दर्पस्य जगत्त्रयीविजयिनः साम्राज्यदीक्षागुरुः
कान्तामानशिलोञ्छवृत्तिरखिलध्वान्ताभिचारे कृती ।
देवस्त्र्यम्बकमौलिमण्डनसरित्तीरस्थलीतापसः

शृङ्गाराध्वरदीक्षितो विजयते राजा द्विजानामयम् ॥ ३ ॥ विश्वेश्वरस्य ।

व्योमाम्भोनिधिपुण्डरीकममृतप्राग्भारधारागृहं
शृङ्गारद्रुमपुष्पमीश्वरशिखालङ्कारमुक्तामणिः ।
कालाकारतमोभिभूतकुमुदग्रामापमृत्युञ्जयो
जीयान्मन्मथराष्ट्रपौष्टिकमहाशान्तिद्विजश्चन्द्रमाः ॥ ४ ॥

उमापतिधरस्य ।

लीलासद्मप्रदीपस्त्रिपुरविजयिनः स्वर्णदीकेलिहंसः
कन्दर्पोल्लासबीजं रतिरसकलहक्लेशविच्छेदचक्रम् ।
कह्लाराङ्कितबन्धुस्तिमिरजलनिधेरुच्छिखो वाडवाग्नि-
र्लक्ष्म्याः क्रीडारविन्दं जयति भुजभुवां वंशकन्दः सुधांशुः ॥ ५ ॥

श्रीमत्केशवसेनस्य ।

## ७३ चन्द्रकला ।

श्यामायाः करजक्षतं रतिपतेर्जैत्रं धनुर्बन्धकी-
हृत्कम्बुक्रकचश्चकोरखुरलीसौहृद्यबीजांकुरः ।
चोरग्रामगजांकुशः परिलसन्मन्दाकिनीरोहितो
ध्वान्ताम्भस्तिमिरैकनौर्विजयते बालः सुधादीधितिः ॥ १ ॥ उमापतेः ।

लेखामनङ्गपुरतोरणकान्तिभाज-
मिन्दोर्विलोकय तनूदरि नूतनस्य ।
देशान्तरप्रणयिनोरपि यत्र यूनो-
र्नूनं मिथः सखि मिलन्ति विलोकितानि ॥ २ ॥ वसुकल्पस्य ।

विगाढदोषं तिमिरं निरस्यता क्रमेण विद्ध्वाग्रकलाशलाकया ।
चिकित्सकेनेव विलोकनक्षमं पुनर्नभश्चक्षुरिवेन्दुना कृतम् ॥ ३ ॥

गणपतेः ।

प्रसरत्तिमिरसरित्तरिरसतीहृद्दारुणारुणक्रकचः ।
स्मरगृहकवाटविघटनराजतकुञ्जी कला शशिनः ॥४॥ सेह्लोकस्य ।

चैतन्यं नभसश्चकोररमणीकर्पूरपाली सुधा-
निर्यासद्रवदोहदस्य कुमुदस्तोमस्य सन्धुक्षणम् ।
ध्वान्तोत्तुङ्गमतङ्गवारणसृणिः शृङ्गारबीजांकुरः
पश्योदञ्चति सस्पृहं प्रणयिनि प्रालेयभानोः कला ॥५॥ इन्द्रज्योतिषः ।

## ७४ चन्द्रबिम्बः ।

अनलसजवापुष्पोत्पीडच्छवि प्रथमं ततः
समदयवनीगण्डच्छायं पुनर्मधुपिङ्गलम् ।

तदनु च नवस्वर्णाम्भोजप्रभं शशिनस्तत-
स्तरुणि तु गवाकारं बिम्बं विभाति नभस्तले ॥ १॥ कस्यचित्।
उद्दर्पहूणरमणीरमणोपमर्द्दभुग्नोन्नतस्तननिवेशनिभं हिमांशोः।
बिम्बं कठोरविसकाण्डकडारगौरैर्विष्णोः पदं प्रथममग्रकरैर्व्यनक्ति ॥
अपराजितरक्षितस्य।
स्फुटकोकनदारुणं पुरस्तादथ जाम्बूनदपत्रपिञ्जराभम्।
क्रमलङ्घितमुग्धभावमिन्दोः स्फटिकच्छेदनिभं विभाति बिम्बम्॥ ३॥
भागीरथस्य।
करमूलबद्धपन्नगविषाग्निधूमाहतं मध्ये।
ऐशानमिव कपालं स्फुटलक्ष्म स्फुरति शशिबिम्बम्॥ ४॥ कस्यचित्।
मध्ये यामिनि पार्वणामृतरुचेर्बिम्बं स्फुरच्चन्द्रिका
तत्प्रान्ते परितो विसारिकिरणश्रेणीशलाकावलि।
नाराग्रन्थिविसंष्ठुलं स्थलमिव ज्योत्स्नास्फुरद्वाससा
संवीतं सुखमध्यशेत जगती सुव्यक्तमालोक्यते ॥ ५॥ अंशुधरस्य।

## ७५ प्रौढचन्द्रः।

एतत्तर्कय कैरवक्लमहरे शृङ्गारदीक्षागुरौ
दिक्कान्तामुकुरे चकोरसुहृदि प्रौढे तुषारत्विषि।
कर्पूरैः किमपूरि किं मलयजैरालेपि किं पारदै-
रक्षालि स्फटिकोपलैः किमघटि द्यावापृथिव्योर्वपुः॥ १॥ वसुकल्पस्य।
पञ्चेषोरिपुकोटिशातनशिलाचक्रं चकोराङ्गना-
चक्षुष्यश्चतुरम्बिताण्डवगुरुश्चौरः कृशाङ्गीरुषाम्।
सोऽयं सान्द्रतमिस्रसिन्धुरघटाकण्ठीरवः कैरव-
श्रीजीवातुरमर्त्यमण्डलसुधासत्री दिवि द्योतते ॥ २॥ गङ्गाधरस्य।
चन्द्रे सान्द्रमरीचिसञ्चयजुषि प्राचीप्रियाप्रेयसि
प्राप्ते प्रौढतमिस्रभावतिमिरध्वंसप्रशंसानिधौ।
कालिन्दी सुरनिम्नगीयति तथा विन्ध्यो हिमाद्रीयति
क्षोणी राजतभाजनीयति तथा चक्रोऽपि हंसीयति ॥ ३॥ कस्यचित्।
जनानन्दश्चन्द्रो भवतु न कथं नाम सुकृती
प्रयातोवस्थाभिस्तिसृभिरपि यः कोटिमियतीम्।
भ्रुवोर्लीलां बालः श्रियमलिकपट्टस्य तरुणो
मुखेन्दोः सर्व्वस्वं हरति हरिणाक्ष्याः परिणतः ॥ ४॥ मुरारेः।
निर्यासैः करपत्रपीडनवशान्निर्यद्भिरिन्दूपला-
न्मानग्रन्थिभिरश्रमेण कठिनैस्त्रुट्यद्भिरेणीदृशाम्।

देवोयं परिपिष्टचक्रहृदयादुत्सर्पिभिः पावकै-
र्व्यक्ताहंकृतिरभ्युदेति तमसां माराङ्कमल्लः शशी ॥५॥ शान्त्याकरस्य

## ७६ सकिरणचन्द्रः

अद्यापि स्तनशैलदुर्गविषमे वामेक्षणानां हृदि
स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः ।
उद्यन्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणं
स्फायत्कैरवकोषनिःसरदलिश्रेणीकृपाणं शशी ॥ १ ॥ वसुकल्पस्य ।

सद्यः कुंकुमपङ्कपिच्छिलमिव व्योमाङ्गणं कल्पयन्
पश्यैरावतकान्तदन्तमुसलच्छेदोपमेयाकृतिः ।
उद्गच्छत्ययमच्छमौक्तिकमणिप्रालम्बलम्बैः करै-
र्मुग्धानां स्मरलेखवाचनकलाकेलिप्रदीपः शशी ॥ २ ॥ राजशेखरस्य ।

सलीलं लिम्पद्भिर्धवलधवलैरम्बरतलं
करौघैः कह्लारप्रसवनवकर्म्मस्थपतिभिः ।
चकोरस्तोमानाममृतघृतकुल्यामुपनय-
न्नयं देवः प्राचीमवतरति तारापारवृढः ॥ ३ ॥ हरेः ।

गोरोचनारुचकभङ्गपिशङ्गिताङ्गस्ताराापतिर्मसृणमाक्रमते क्रमेण
गोभिर्नवीनविसतन्तुवितानगौरैराढ्यम्भविष्णुरयमम्बरमावृणोति ॥४॥
कस्यचित् ।

रसातलस्थानविसारिणीं हरन् प्रभां मृणालीमिव धौतकर्दमाम्
समुत्पपातार्द्रतनूरुहः शनैरुदन्वतो हंस इव क्षपाकरः ॥ ५ ॥
भृङ्गस्वामिनः ।

## ७७ चन्द्ररश्मिः ।

ये पूर्व्वं यवशूकसूचिसुहृदो ये केतकाग्रच्छद-
च्छायाधामभृतो मृणाललतिकालावण्यभाजश्च ये ।
ये धाराम्बुविडम्बिनः क्षणमथो ये तारहारश्रिय-
स्तेमी स्फाटिकदण्डडम्बररुचो जाताः सुधांशोः कराः ॥ १ ॥
राजशेखरस्य ।

कपाले मार्जारः पय इति कराँल्लेढि शशिन-
स्तरुच्छिद्रप्रोतान्विसमिति करी संकलयति ।
रतान्ते तल्पस्थान्हरति वनिताप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो विप्लवयति ॥ २ ॥ तस्यैव ।

निद्रानन्दकरीर्नितान्तधवला आमोदिनीरप्ययमूः
पीयूषं मधु वर्षतीरपि तमोभृङ्गान्निराकुर्व्वतीः ।

आकाशद्रुमम‌ञ्जरीरिव विधोर्भासः ककुप्कामिनी-
लीलोत्तंसरुचः करोति नियतं बाणान् प्रसूनायुधः ॥ ३ ॥ सुरभेः।

एतैर्जह्नुसुताजलैरयमुनाभिन्नैरलग्नाञ्जनै-
र्नारीणां नयनैरकर्दमलवालिप्तैर्मृणालांकुरैः।
हारैरस्फुरदिन्द्रनीलतरलैः कुन्दैरलीनालिभि-
र्वल्लद्भिर्भुवनं विभूषितमिदं शीतद्युतेरंशुभिः ॥ ४ ॥ तस्यैव।

हारश्रीसुहृदो रथाङ्गरमणीसन्न्यासपुण्यापगा
वन्दीभूतमधुव्रताब्जकलिकाकाराकवाटार्गलाः।
उन्मीलन्ति चकोरदैवतसुधापूर्णाहुतीनां स्रुचो
व्योमान्तः परिमाणसूत्रसरलास्तारा हिमांशोः कराः ॥५॥ अभिनन्दस्य

७८ ज्योत्स्ना।

शीतांशुः शशिकान्तनिर्म्मलशिला तस्यां प्रसुप्तः सुखं
जग्ध्वा ध्वान्ततृणांकुरान्मृगशिशुः खण्डेन्द्रनीलत्विषः।
निद्रामुद्रितलोचनालसतया रोमन्थफेनच्छटां
रोदःकन्दरपूरणाय तनुते ज्योत्स्नाच्छलेनामुना ॥ १ ॥ कापालिकस्य।

संप्रत्याक्रमते पुरन्दरपुरीकासारकह्लारिणी-
कोषोद्घाटनकुञ्चिकाः प्रकटयन्नारम्भतः कौमुदीः।
पौरस्त्याद्रितटीकुटुम्बिमृगयुव्यापारितास्त्रव्यध-
व्यङ्गक्रोडकुरङ्गसङ्गलदसृक्संसर्गशोणः शशी ॥ २ ॥ आपदेवस्य।

कर्पूरद्रवसीकरोत्करमहानीहारमग्नामिव
प्रत्यग्रामृतफेनपङ्कपटलीलेपोपदिग्धामिव।
स्वच्छैकस्फटिकाश्मवेश्मजठरक्षिप्तामिव क्ष्मामिमां
कुर्वन् पार्वणशर्वरीपतिरसावुद्दाम विद्योतते ॥ ३ ॥ पञ्चमेश्वरस्य।

सद्यः पाटितकेतकोदरदलश्रेणिश्रियं बिभ्रती
येयं मौक्तिकदामगुम्फनविधौ योग्यच्छविः प्रागभूत्।
उन्मेया कलशीभिरञ्जलिपुटैर्ग्राह्या मृणालांकुरैः
पातव्या च शशिन्यमुग्धविभवे सा वर्तते चन्द्रिका ॥ ४ ॥
राजशेखरस्य।

क्षीरोदाम्भसि मज्जतीव दिवसव्यापारखिन्नं जग-
त्तत्क्षोभाज्जलबुद्बुदा इव भवन्त्यालोहितास्तारकाः।
चन्द्रः क्षीरमिव क्षरत्यविरतं धारासहस्रोत्करै-
रुद्ग्रीवैस्तृषितैरिवाद्य कुमुदैर्ज्योत्स्नापयः पीयते ॥ ५ ॥
विक्रमादित्यचण्डालविद्याकालिदासानाम्।

## ७९ कलङ्कः ।

महानीलश्यामं नरकरिपुवक्षो वियदिदं
ततांशुश्रेणीकस्तुहिनकिरणः कौस्तुभमणिः ।
कलङ्कोऽप्येतस्य प्रमुखनिवसत्तोयधिसुता-
स्तनासङ्गस्फूर्जन्मदलिखितपत्रप्रतिकृतिः ॥ १ ॥ सुरभेः ।

किरद्धारां धारा इव किरणधाराः प्रतिदिशं
तुषारांशोर्बिम्बं मणिघटितधारागृहमिव ।
इहायं कस्तूरीहरिणमदपङ्काङ्कितततनुः
कलङ्कव्याजेन प्रतिवसति कन्दर्पनृपतिः ॥ २ ॥ अभिनन्दस्य ।

शेषस्याहेर्व्रजति तुलनां मण्डलीभूतमूर्त्ते-
रिन्दुः कुन्दस्तवकविशदः पार्व्वणोयं यथैव ।
व्योमाम्भोधौ सजलजलदश्यामरोचिस्तथोच्चै-
रङ्कः शङ्कामयमपि हरेस्तत्र सुप्तस्य धत्ते ॥ ३ ॥ राजशेखरस्य ।

स्फटिकालवालललदर्मी प्रवहति शशिबिम्बमम्बरोद्याने ।
किरणजलसिक्तलाञ्छनबालतमालैकविटपस्य ॥ ४ ॥ तस्यैव ।

यथायं भात्यंशून्दिशि दिशि किरन्कुन्दविशदा-
ञ्शशाङ्कः काश्मीरीकुचकलशलावण्यघटितः ।
तथायं कस्तूरीमसिलिखितमुद्रावतितुलां
नवाम्भोदच्छेदच्छविरपि समारोहति मृगः ॥ ५ ॥ शर्व्वस्य ।

## ८० सतमश्चन्द्रः ।

प्रथममरुणच्छायस्तावत्ततः कनकप्रभ-
स्तदनुविरहोत्ताम्यत्तन्वीकपोलतलद्युतिः ।
प्रभवति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे
सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥ १ ॥ राजशेखरस्य ।

निःसरन्करघातविदीर्णध्वान्तदन्तिरुधिरारुणमूर्तिः ।
केशरीव कटकादुदयाद्रेरङ्कलीनहरिणो हरिणाङ्कः ॥ २ ॥ भवभूतेः ।

प्रत्यग्रप्रसरे तमिस्रपटले बिम्बैकमात्रोदया-
रम्भे शीतरुचावकीर्णकिरणे रम्योयमेकः क्षणः ।
यस्मिन्नीलनिचोलकेन पिहितं कृत्वा तदेकान्ततः
सिन्दूरारुणचक्रमुद्रितमिव त्रैलोक्यमालोक्यते ॥ ३ ॥ कस्यचित्

अथ जगदवगाढं वासरान्तापचारा-
त्तिमिरपटलवृद्धाव्यप्रतीकाररसस्वम् ।

शशिभिषगनुपूर्वं शीतहस्तो भिषज्य-
न्नधिकविशदवक्त्रस्वैरभावं चकार ॥४॥ कस्यचित्।
य एष प्रत्यूषे रविशबरमालोक्य पुरतो
नभः पारावारं न्यविशत भयादिन्दुशफरः।
स सायं निःशङ्कं चटुलतरताराभंकशतै-
श्चरन्मन्दं मन्दं तिमिरजलनीलीमुदयते ॥५॥ वैद्यश्रीजीवदासस्य॥

## ८१ सतारश्चन्द्रः।

मृगेन्द्रस्येव चन्द्रस्य मयूखैर्नखरैरिव।
पाटितध्वान्तमातङ्ग-मुक्ताभा भान्ति तारकाः॥१॥ अभिनन्दस्य।
ताराः स्तोकतमिस्रधूमपटलीव्यापारसन्ध्यानन-
ज्वालालीढनभःकपालविचलल्लाजाश्रियं बिभ्रति।
किं चायं रजनीपतिः परिणतप्राग्भारतालद्रवो-
न्मिश्रं चिक्कणपिण्डमण्डकलसल्लावण्यमारोहति॥२॥ कस्यचित्।
उदयगिरिसौधशिखरे ताराचयचित्रिताम्बरविताने।
सिंहासनमिव निहितं चन्द्रः कन्दर्पभूपस्य॥३॥ कस्यचित्।
ताराकोरकराजिभाजि गगनोद्याने तमोमक्षिकाः
सन्ध्यापल्लवपातिनीः कवलयन्नेकान्ततस्तर्कय।
एतस्मिन्नुदयान्तपर्वततरुद्वन्द्वान्तराले ततै-
रेतैर्भाति गभस्तितन्तुपटलैः श्वेतोर्णनाभः शशी॥४॥ हरेः।
अयमुदयमहीध्रधातुरागैररुणकरारुणिताम्बराभिरामः।
वितरसि न दृशौ कृशाङ्गि तारामिव दिवि वन्दितुमिन्दुरभ्युदेति॥५॥
हरिदत्तस्य।

## ८२ त्वरदमृतचन्द्रः।

शशिनमसूत प्राची नृत्यति मदनो हसन्ति ककुभोऽपि।
कुमुदरजः पटवासं विकिरति गगनाङ्गणे पवनः॥१॥ धर्मकीर्तेः।
तथा पौरस्त्यायां दिशि कुमुदकेदारकलिका-
कपाटघ्नीमिन्दुः किरणलहरीमुल्ललयति।
समन्तादुन्मीलद्बहुलजलबिन्दुव्यतिकरै-
र्यथा पुञ्जायन्ते प्रतिगुणक्रमेणाङ्कमणयः॥२॥ मुरारेः।
स श्रीकण्ठकिरीटकुट्टिमपरिष्कारप्रदीपांकुरो-
देवः कैरवबन्धुरन्धतमसप्राग्भारकुक्षिम्भरिः।

संस्कर्त्ता निजकान्तमौक्तिकमणिश्रेणीभिरेणीदृशां
गीर्वाणाधिपतेः सुधारसवतीपौरोगवः प्रोद्गात् ॥ ३ ॥ तस्यैव ।

आमोदं कुमुदाकरेषु विपदं पद्मेषु कालानलं
पञ्चेषोर्विशिखेषु सान्द्रशिशिरक्षारं शशिग्रावसु ।
म्लानिं मानवतीमुखेषु विनयं चेतःसु वामभ्रुवां
वृद्धिं वार्धिषु निक्षिपन्नुदयते देवस्तमीकामुकः ॥ ४ ॥ शङ्करदेवस्य ।

सौरातपविरहज्वरलाञ्छितगात्रीं कुमुद्वतीं निभृतः ।
संरक्तः परिपश्यन्विधुरयमयते प्रसादयितुम् ॥ ५ ॥ कस्यचित् ।

## ८३ भासः ।

कह्लारस्पर्शगर्भैः शिशिरपरिचयात्कान्तिमद्भिः कराग्रै-
श्चन्द्रेणालिङ्गितायास्तिमिरनिवसने स्रंसमाने रजन्याः ।
अन्योन्यालोकिनीभिः परिचयजनितप्रेमनिस्यन्दिनीभि-
र्दूरारूढे प्रमोदे हसितमिव परिस्पष्टमाशासखीभिः ॥ १ ॥ पाणिनेः ।

उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरोपि मोहाद्गलितं न लक्षितम् ॥२॥
तस्यैव ।

यातस्यास्तमनन्तरं दिनकृतो वेशेन रागान्वितः
स्वैरं शीतकरः करं कमलिनीमालिङ्गितुं योजयन् ।
शीतस्पर्शमवाप्य संप्रति तया गुप्ते मुखाम्भोरुहे
हासेनेव कुमुद्वतीवनितया वैलक्ष्यपाण्डूकृतः ॥ ३ ॥ वसुकल्पस्य ।

प्राचीमञ्चति यामिनीमनुनयत्याशाः समालम्बते
द्यामालिङ्गति सेवते कुमुदिनीं स्निग्धोतिमुग्धैः करैः ।
वल्लीषु प्रतिपन्नमन्मथरसं कुर्वन्मनः कामिना-
मिन्दुर्वन्ध्यकरः स एष भुवनानन्दः परिस्पन्दते ॥ ४ ॥ कस्यचित् ।

कलाधारो वक्रः स्फुरदधररागो नवतनु-
र्गलन्मानावेशास्तरुणरमणीनागर इव ।
घनश्रोणीबिम्बे नयनमुकुले चाधरदले
कपोले ग्रीवायां कुचकलशयोश्चुम्बति शशी ॥५॥ श्रीकण्ठस्य ।

## ८४ मिश्रकचन्द्रः ।

उत्पल्लव इव किरणैः कुसुमित इव तारकाभिरयमिन्दुः ।
उदयत्युदयतटान्ते सुरतरुरिव शीतलच्छायः ॥ १ ॥ जनकस्य ।

यात्रायामिव दत्तपूर्णकलशः कन्दर्पराज्ञः शशी-

ज्योत्स्नालेपनपङ्कपूरितमिव व्योमाङ्गणं सर्वतः
क्षिप्ता मङ्गललाजमुष्टय इव भ्राजिष्णवस्तारकाः ॥ २ ॥ कस्यचित्।

गगनतलतडागप्रान्तसीम्नि प्रदोष-
प्रबलतरवराहोत्खन्यमानश्चकास्ति।
परिकलितकलङ्कस्तोकपङ्कानुलेपो-
निजकिरणमृणालीमूलकन्दोऽयमिन्दुः ॥ ३ ॥ परमेश्वरस्य।

चिताचक्रं चन्द्रः कुसुमधनुषो दग्धवपुषः
कलङ्कस्तस्यायं वहति मलिनाङ्गारतुलनाम्।
अथैतस्य ज्योतिर्दरदलितकर्पूरधवलं
मरुद्भिर्भस्मेव प्रसरति विकीर्णं दिशि दिशि ॥ ४ ॥ राजशेखरस्य।

तथोद्दामैरिन्दोः सरसबिसदण्डद्युतिधरै-
र्मयूखैर्विक्रान्तं सपदि परितः पीततिमिरैः।
दिनंमन्या रात्रिश्चकितचकितं कौशिककुलं
प्रफुल्लं निद्राणैः कथमपि यथाम्भोरुहवनैः ॥ ५ ॥ योगेश्वरस्य।

## ८५ बहुरूपकचन्द्रः।

फेनः क्षीराम्बुराशेरयमुदयगिरेस्तुङ्गशृङ्गातपत्रं
पूर्वस्या भालदेशे तिलक इव दिशो दर्पणो यामिनीनाम्।
वापीनां राजहंसः परिलसितसटः केशरी काननाना-
माकाशस्याट्टहासः कुमुदवनचयोद्बोधशङ्खः शशाङ्कः ॥१॥ राजशेखरस्य

वृद्धः क्षौणिभुजां कुलस्य कुलटासङ्केतयात्रापुरो-
वर्त्ती तुच्छघटस्तमीसुततमस्तोमस्य जन्माश्मः।
क्षीराम्भोधिरसायनं रचयति प्राचीं प्रसन्नस्मितां
दुर्दैवं कमलस्य पान्थतरुणीप्रौढाक्षिशूलं शशी ॥ २ ॥ सागरस्य।

एकः सम्प्रति पाकशासनपुरीपीयूषसत्त्री पुरः
पारक्यं तमसामसौ कुमुदिनीचैतन्यचिन्तामणिः।
मानोच्चाटनकार्मणं मृगदृशां देवो नभोम्भोनिधौ
पश्योदञ्चति पञ्चबाणवणिजो यात्रावहित्रं शशी ॥ २ ॥ हरेः।

अमृतमयमनङ्गद्रुमारुहस्यालवालं मृतदिवसकपालं कालकापालिकस्य।
जयति मकरकेतोः शाणचक्रं शराणाममरपुरपुरन्ध्रीदर्पणः श्वेतभानुः ॥४॥
त्रिपुरारेः।

क्रीडाकर्पूरदीपस्त्रिदशमृगदृशां कामसाम्राज्यलक्ष्मी-
प्रोत्क्षिप्तैकातपत्रं श्रमशमनचलच्चामरं कामिनीनाम्।
कस्तूरीपङ्कमुद्राङ्कितमदनवधूमुग्धगण्डोपधानं

द्वीपं व्योमाम्बुराशेः स्फुरति सुरपुरीकेलिहंसः सुधांशुः ॥५॥ जयदेवस्य

८६ अस्तमयः ।

यथैवैष श्रीमांश्चरमगिरिवप्रान्तजलधौ
सुधासूतिश्चेतः कनककमलाशङ्कि कुरुते ।
तथायं लावण्यप्रसरमकरन्दद्रवतृषा-
पतद्भृङ्गश्रेणिश्रियमपि कलङ्कः कलयति ॥ १ ॥ कस्यचित् ।

कृतपादनिगूहनोवसीदन्नधिकश्यामकलङ्कपङ्कलेखः ।
गगनोदधिपश्चिमान्तलग्नो विधुरुत्तानइवास्ति कूर्मराजः ॥ २ ॥
शतानन्दस्य ।

मुषितमुषितालोकास्तारास्तुषारकणत्विषः
सवितुरपि च प्राचीमूले मिलन्ति मरीचयः ।
श्रयति शिथिलच्छायाभोगस्तटीमपराम्बुधे-
र्जरठलवलीलावण्याच्छच्छविर्मृगलाञ्छनः ॥ ३ ॥ शर्वस्य ।

लुठत्यपरवारिधौ कमलनिर्विशेषः शशी
प्ररूढमुदयाचले चुलुकमात्रमुष्णं महः ।
त्वरां गगनवेदिकामिदमनंकुशं गाहते
कलिन्दगिरिकन्यकातटतमालनीलं तमः ॥ ४ ॥ सिह्लणस्य ।

स्वस्थानादवनीभुजेव पतितं दोषाकरेणेन्दुना
ताराभिर्विरलायितं प्रकृतिभिस्तस्यैव निर्धामभिः ।
निःश्रीकैः कुमुदाकरैर्मुकुलितं तस्यावरोधैरिव
प्रध्वस्तं तिमिरोत्करैः परिजनैस्तस्यैव दुश्चारिभिः ॥५॥ लक्ष्मीधरस्य ।

८७ उच्चावचचन्द्रः ।

नेपथ्यं भूतभर्तुस्त्रिदशपरिषदां जीवनं यामिनीना-
मुत्तंसः पांसुलानां कुलरिपुरमृतस्रोतसामादिशैलः ।
आतङ्कः पङ्कजानां जयति रतिकलाकेतनं मीनकेतोः
सिन्धूनामेकबन्धुः कुमुदसमुदयानन्दकन्दोयमिन्दुः ॥ १ ॥ शरणस्य ।

ज्योत्स्नामुग्धवधूविलासभवनं पीयूषवीचीसरः
क्षीराब्धेर्नवनीतकूटमवनीतापार्तितोयोपलः ।
यामिन्यास्तिलकः कला मृगदृशां प्रेमव्रतैकाश्रमः
क्रामत्येष चकोरयाचकमहःकर्पूरवर्षः शशी ॥ २ ॥

प्राचीगण्डस्थलमलयजस्थासके कामिनीना-
मन्तर्यामिण्यमृतकिरणे वैरिणि स्वैरिणीनाम् ।
ज्योत्स्नाजालं विकिरति मुहुश्चन्द्रकान्तप्रणाली-

राचामन्ति प्रियसहचरीचाटुकाराश्चकोराः ॥ ३ ॥ हरेः।

तमोभिर्दिक्कालैर्वियदिव विलंघ्य क नु गतं
गता दृश्यद्रापि क नु कुमुदकोषस्य सरसः।
क धैर्यं तच्चाब्धेर्विदितमुदयाद्रेः परिसर-
स्थलीमध्यासीने शशिनि जगदप्याकुलमिदम् ॥ ४ ॥

अपराजितरक्षितस्य।

श्रान्तैर्वृतो हरिपदे नियतन्समीर-
सन्तानदैन्यजनकः कुमुदप्रमोदी।
निघ्नन्निशाचरतमः पृथुनीललक्ष्मा
तारापतिः स्फुरति चित्रमनङ्गदोयम् ॥ ५ ॥ सुरभेः।

## ८८ वातः।

मज्जन्नम्भसि पुष्पधूलिषु लुठन्नाकम्पयन्भूरुह-
श्रेणीरुन्मदकोकिलावलिरवैराबद्धकोलाहलः।
अध्वन्यान् हृदि ताडयन् पुरवधूवासांसि विस्रंसयन्
स्वच्छन्दं भ्रमति स्मरावनिपतेरुन्मत्तको मारुतः ॥ १ ॥ कस्यचित्।

अलीनां मालाभिर्विरचितजटाभारमहिमा
परागैः पुष्पाणामुपरचितभस्मव्यतिकरः।
वनानामाभोगे कुसुमवति पुष्पोच्चयपरो
मरुन्मन्दं मन्दं विचरति परिव्राजक इव ॥ २ ॥ वीर्यमित्रस्य।

सुरतसमरस्वेदच्छेदप्रदो दलदम्बुज-
व्रजपरिमलस्पर्शं वर्षन्नसौ श्वसनः शनैः।
प्रसरति पिकत्रोटित्रुट्यद्रसालनवांकुर-
द्रवनवपरिष्वङ्गैः शीतः कुरङ्गवधूदृशाम् ॥ ३ ॥ कस्यचित्।

प्रमदविपिनवापीसम्भृताम्भोजराजि-
प्रकटितमकरन्दग्राहिणोमी समीराः।
अभिनवमदभाजां कामिनीनां कपोले
सुरतसमरखेदस्वेदमुन्मूलयन्ति ॥ ४ ॥ गदाधरनाथस्य।

एते पल्लीपरिवृढवधूप्रौढकन्दर्पकेलि-
क्लिश्यत्पीनस्तनपरिसरस्वेदसम्पह्लिपक्षाः।
वान्ति स्वैरं सरसि सरसि क्रोडदंष्ट्राविमर्द-
त्रुट्यद्गुन्द्रापरिमलगुणग्राहिणो गन्धवाहाः ॥५॥ कस्यचित्।

## ८९ दक्षिणवातः।

चुम्बन्नाननमालुठन् स्तनतटीमान्दोलयन् कुन्तलं

व्यस्यन्नंशुकपल्लवं मनसिजक्रीडां समुल्लासयन् ।
अङ्गं विह्वलयन्मनो विकलयन्मानं समुन्मूलय-
न्नारीणां मलयानिलः प्रिय इव प्रत्यङ्गमालिङ्गति ॥ १ ॥ विनयदेवस्य ।

एते ते मलयाद्रिकन्दरजुषस्तच्छाखिशाखावली-
लीलाताण्डवसम्प्रदानगुरवश्चेतोभुवो बान्धवाः ।
चूतान्मत्तमधुव्रतप्रणयिनाहुङ्कारझङ्कारिणो
हा कष्टं प्रसरन्ति पान्थयुवतीजीवद्रुहो वायवः ॥ २ ॥ श्रीपतेः ।

अन्ध्रीनीरन्ध्रपीनस्तनतटलुठनायासमन्दप्रचारा-
श्चारूनुल्लासयन्तो द्रविडवरवधूहारधम्मिल्लभारान् ।
जिघ्रन्तः सिंहलीनां मुखकमलवनं केरलीनां कपोलं
चुम्बन्तो वान्ति मन्दं मलयपरिमला वायवो दाक्षिणात्याः ॥ ३ ॥
कस्यचित् ।

ये दोलाकेलिकाराः किमपि मृगदृशां मन्युतन्तुच्छिदो ये
सद्यः शृङ्गारदीक्षाव्यतिकरगुरवो ये च लोकत्रयेपि ।
ते कण्ठे लोठयन्तः परभृतवयसां पञ्चमं रागराजं
वान्ति स्वैरं समीराः स्मरविजयमहासाक्षिणो दाक्षिणात्याः ॥ ४ ॥
राजशेखरस्य ।

स्वैरं स्वैरं द्रविडललनागण्डभित्तीः स्पृशन्तः
कर्णाटीनामटनकुटिलाः कुन्तलावर्त्तनेषु ।
व्याधुन्वन्तो वकुललवलीनागपुंनागवल्ली-
र्लोपामुद्रादयितककुभो मारुताः संचरन्ति ॥ ५ ॥ कस्यचित् ।

## ६० नदीवातः ।

प्रतितटिनि तरङ्गान्मन्दमान्दोलयन्त-
स्तरुणकरुणमल्लीकुञ्जमुल्लासयन्तः ।
इह हि नववसन्ते वान्ति सीमन्तिनीनां
सुरतसमरखेदच्छेदधीराः समीराः ॥ १ ॥ कस्यचित् ।

धुनानः कावेरीपरिसरभुवश्चन्दनतरू-
न्गरुन्मन्दं कुन्दप्रकरमकरन्दानवकिरन् ।
प्रियप्रेमावर्षच्युतरचनमामूलसरलं
ललाटे लाटीनां लुठितमलकं ताण्डवयति ॥ २ ॥ कस्यचित् ।

वहति मलयशैलोपान्तविश्रान्तवल्लीनवकिसलयभङ्गक्षीरसौरभ्यबन्धुः ।
रहसि परिचितोयं पाण्ड्यसीमन्तिनीनां दरतरलितरेवातीरनीरः समीरः ॥
उमापतिधरस्य ।

रेवानिर्झरवारिबिन्दुशिशिरः प्रेयानिवायं सखे
वातः फुल्ललवङ्गसङ्गमवशान्मन्दः कुरङ्गीदृशाम् ।
वक्त्रं चुम्बति वेपथुं जनयति प्रोद्घाटयत्यंशुकं
शीत्कारं तनुते तनोति पुलकं केशान्तमाकर्षति ॥४॥ अचलस्य ।

उदञ्चत्कावेरीलहरिषु परिष्वङ्गरङ्गे लुठन्तः
कुहूकण्ठीकण्ठीरवरवलवत्रासितप्रोषितेभाः ।
अमी चैत्रे मैत्रावरुणितरुणीकेलिकङ्केल्लिमल्ली-
चलद्वल्लीहल्लीसकसुरभयश्चण्डि चञ्चन्ति वाताः ॥५॥ राक्षसस्य ।

## ६१ समुद्रवातः ।

वहति जलधिकूले बालताम्बूलवल्ली-
चलनविधिविदग्धः सान्द्रनीहारसार्द्रः ।
गगनचरपुरन्ध्रीदन्तनिर्भिन्नवन्य-
क्रमुकफलकषायामोदसौम्यः समीरः ॥ १ ॥ दक्षस्य ।

लवणजलधिवेलाशीकरासारवर्षी
सुरतरभसखिन्नद्राविडीभुक्तमुक्तः ।
वहति मलयशैलारण्यदोलाविलासी
तरुणकरुणमल्लीगन्धबन्धुः समीरः ॥ २ ॥ धर्मपालस्य ।

ये कल्लोलैश्चिरमनुगता दक्षिणस्याम्बुराशेः
पीतोच्छिष्टास्तदनु मलये भोगिभिश्चन्दनस्थैः ।
अन्तर्भ्रान्ताः प्रतिकिसलयं पुष्पितानां लतानां
संप्राप्तास्ते विरहशिखिनो गन्धवाहाः सहायाः ॥३॥ अमरसिंहस्य ।

मन्दान्दोलितदक्षिणार्णवचलत्कल्लोललीलालस-
त्कर्णाटीरतकेलिलोलसुमनोमालासमुल्लासिनः ।
वाताः केरलकामिनीकुचतटे लाटीललाटे मुहुः
खेलन्तो विकिरन्ति मालववधूधम्मिल्लमल्लीस्रजः ॥ ४ ॥ कस्यचित् ।

लावण्यैश्चक्रपाणेः क्षणधृतगतयः प्रांशुभिश्चन्द्रकान्त-
प्रासादैर्द्वारिकायां तरलितचरमाम्भोधितीराः समीराः ।
सेवन्ते नित्यमाद्यत्करिकठिनकरास्फालकालप्रबुद्ध-
क्रुध्यत्पञ्चाननोग्रध्वनिभरविगलत्खण्डहुङ्कारगर्भाः ॥ ५ ॥ कस्यचित् ।

## ६२ प्राभातिकवातः ।

अयमुषसि विनिद्रद्राविडीतुङ्गपीन-
स्तनपरिसरसान्द्रस्वेदबिन्दूपमर्दी ।

स्नुतमलयजवृक्षक्षीरसौरभ्यरम्यो
वहति सखि भुजङ्गीभुक्तशेषः समीरः ॥ १ ॥ कस्यचित् ।
प्रभाते सन्नद्धस्तनिततनिमानं जलधरं
स्पृशन्तः सर्वत्र स्फुटिततरमल्लीसुरभयः ।
अमी मन्दं मन्दं सुरतसमरश्रान्ततरुणी-
ललाटस्वेदाम्भःकणपरिमुषो वान्ति मरुतः ॥ २ ॥ अचलस्य ।
रजनिकरमयूखोन्निद्रनीलोत्पलाली-
परिमलबहुगन्धो बन्धुरस्तत्परागैः ।
कवलितरतिखेदस्वेदविन्दुर्निशान्ते
पुलकयति तुषारासारवर्षी समीरः ॥ ३ ॥ सरसीरुहस्य ।
रामाणां रमणीयवक्त्रशशिनः स्वेदोदविन्दुप्लुत-
व्यालोलालकवल्लरीः प्रचलयन्धुन्वन्नितम्बाम्बरम् ।
प्रातस्त्यो वहति प्रकामविलसद्राजीवराजीरजः-
पुञ्जामोदमनोहरो रतिरसग्लानिं हरन्मारुतः ॥ ४ ॥ अमरोः ।
स्तनपरिसरभागे दूरमावर्तमानाः
श्रिततनिमनि मध्ये किंचिदेव स्खलन्तः ।
ववुरतनुनितम्बाभोगरुद्धा वधूनां
निधुवनरसखेदच्छेदिनः कल्यवाताः ॥ ५ ॥ रत्नाकरस्य ।

## ६३ मदनः ।

सुधासूतेर्बन्धुर्मधुसहचरः पञ्चमरुचि-
र्दिशँल्लीला बह्वीः कुवलयदृशां नर्मणि गुरुः ।
स देवः शृङ्गारी हृदयबसतिः पञ्चविशिखः
सदास्वादून्कुर्वन्मधुमदविकारान्विजयते ॥१॥ राजशेखरस्य ।
अन्तर्बहिस्त्रिजगतीरसभावविद्धा
न्यो नर्तयत्यखिलदेहभृतां कुलानि ।
क्षेमं ददातु भगवान्परमादिदेवः
शृङ्गारनाटकमहाकविरात्मजन्मा ॥ २ ॥ भवानन्दस्य ।
जयति स मदलेखोच्छृङ्खलप्रेमरामा-
ललितसुरतलीलादैवतं पुष्पचापः
त्रिभुवनजयसिद्धौ यस्य शृङ्गारमूर्ते-
रुपकरणमपूर्वं माल्यमिन्दुर्मधूनि ॥ ३ ॥ उत्पलराजस्य ।
मनसि कुसुमबाणैरेककालं त्रिलोकीं
कुसुमधनुरनङ्गस्ताडयत्यस्पृशाङ्गैः ।

इति विततविचित्राश्चर्यसंकल्पशिल्पो
जयति मनसिजन्मा जन्मिभिर्मानिताङ्गः ॥ ४ ॥ कस्यचित् ।
याच्यो न कश्चन गुरुः प्रतिमा च कान्ता
पूजा विलोकननिगूहनचुम्बनानि ।
आत्मा निवेद्यमितरव्रतसारजैत्रीं
वन्दामहे मकरकेतनदेवदीक्षाम् ॥ ५ ॥ वल्लनस्य ।

## ६४ मदनशौर्यम् ।

वन्दे देवमनङ्गमेव रमणीनेत्रोत्पलच्छद्मना
पाशेनायतिशालिना सुनिविडं संयम्य लोकत्रयम् ।
येनासावपि भस्मनाञ्चिततनुर्देवः कपाली बला-
त्प्रेमक्रुद्धनगात्मजाङ्घ्रिविनतिक्रीडाव्रते दीक्षितः ॥ १ ॥ ललितोकस्य ।
चापः क्षमाधरपतिः फणिनां पतिर्ज्या
बाणः पुराणपुरुषस्त्रिदशाः सहायाः ।
ईशः पुराभिति पुरां तिसृणां विजेता
पुष्पायुधः पुनरयं त्रिजगद्विजेता ॥ २ ॥ भवानन्दस्य ।
अयं स भुवनत्रयप्रथितसंयमी शङ्करो
बिभर्ति वपुषाधुना विरहकातरः कामिनीम् ।
अनेन किल निर्जिता वयमिति प्रियायाः करं
करेण परिलालयञ्जयति जातहासः स्मरः ॥ ३ ॥ नीलपट्टस्य ।
कुलगुरुरबलानां केलिदीक्षाप्रदाने
परमसुहृदनङ्गो रोहिणीवल्लभस्य ।
अपि कुसुमपृषत्कैर्देवदेवस्य जेता
जयति सुरतलीलानाटिकासूत्रधारः ॥ ४ ॥ राजशेखरस्य ।
धनुर्माला मौर्वी क्वणदलिकुलं लक्ष्यमबला-
मनोभेद्यं पद्मप्रभृतय इमे पञ्च विशिखाः ।
इयाञ्जेतुं यस्य त्रिभुवनमदेहस्य विभवः
स वः कामः कामान्दिशतु दयितापाङ्गवसतिः ॥ ५ ॥ कस्यचित् ।

## ६५ उच्चावचम् ।

पुनः प्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे न प्रायः क्वचिदपि भवन्तं प्रणतवान् ।
नमञ्जन्मन्यस्मिन्नहमतनुरग्रेप्यनतिभाङ्-
महेश क्षन्तव्यं तदिदम[illegible]द्वयमपि ॥ १ ॥ मुञ्जस्य ।

न ज्योत्स्ना न च मालती न दयिता नो वल्लकीपञ्चम-
स्ताम्बूलं न विलेपनं न च रहःकेलिर्न मुक्तालता ।
नो वा सत्कविसूक्तयो मम तथा हर्तुं क्षमन्ते मनः
पुण्यैरुन्मिषिता चराचरगुरोर्भक्तिर्यथा शूलिनः ॥ २ ॥ तस्यैव ।
का दुर्दशा कुपितनिर्दयचित्रगुप्त-
वित्रासितस्य जगतो यदि देवि न स्याः ।
त्वं कर्मबन्धनविमोचनधर्मराज-
लेखाधिकारपरिशोधनजातपत्री ॥ ३ ॥ विरिञ्चेः ।
स्वाङ्गैः कल्पितसान्द्रतल्परचनः श्वासानिलोल्लासिभिः
कह्लारैः कृतचामरः पृथुफणाक्लृप्तातपत्रक्रियः ।
चूडारत्नधृतप्रदीपवलयो विश्वेशमाराधय-
न्नाकल्पस्थिरनिश्चयेन मनसा शेषः परं जीवति ॥ ४ ॥
ब्रह्मनागस्य ।
स श्लाघ्यस्तमुपस्तुवन्ति विबुधास्तेनान्वयः पावित-
स्तस्मै नाम नमन्ति तेपि मुनयो मान्यास्ततो बिभ्यति ।
हस्ते तस्य जगत्त्रयी किमपरं तत्रामृतं लीयते
येन श्रीहरिपादपद्मरजसि न्यस्तं कदाचिन्मनः ॥ ५ ॥
तस्यैव ।
श्रीधरदासविनिर्मितसदुक्तिकर्णामृते पवित्रयतु ।
गङ्गेव गाहमानान्प्रथमो देवप्रवाहोयम् ॥ १ ॥ श्रीः
इति श्रीमहामाण्डलिकश्रीधरदाससंगृहीते सदुक्तिकर्णामृते देवता-
प्रवाहो नाम प्रथमः प्रवाहः ॥ अत्र वीचयः ६५ श्लोकाः ४७५ ॥

## शृङ्गारप्रवाहवीचयः ।

वयसोः सन्धिरुदञ्चद्युवभावा युवतिरङ्गनाश्चर्य्यम् ।
मुग्धा मध्या प्रौढा नवपरिणीता च सैव विस्रब्धा ॥ १ ॥
गर्भवती सत्यवती स्वैरिण्युपदेशगुप्तबन्धक्यौ ।
वैदग्ध्यवती कुलटा लक्षितकुलटा च वारवनिता च ॥ २ ॥
अपि दाक्षिणात्यपाश्चात्त्यौदीच्यप्राच्ययुवतयो ग्राम्याः ।
स्त्रीमात्रं खण्डितया सहान्यसंभोगचिह्नदूना च ॥ ३ ॥
कलितविरहिणी विरहिण्यस्या वागश्रु दूतिकावचनम् ।
दयिते प्रियपरुषोत्तरवचसो चेष्टानुकथनं च ॥ ४ ॥
तापतनुत्वोद्वेगक्षणदावस्थाविभावनं तस्याः ।
वासकसज्जा स्वाधीनभर्तृका विप्रलब्धा च ॥ ५ ॥

कलहान्तरिता तद्वाक् सखीवचो गोत्रतः स्खलनम् ।
मानिन्युदात्तमानिन्यनुरक्तमनस्विनी तदीयोक्तिः ॥ ६ ॥
तस्याः सखी प्रबोधोऽनुनयो मानद्युतिः प्रवसतः स्त्री ।
यात्राक्षेपः प्रोषितपतिका तद्वाक् सखीषु तद्वचनम् ॥ ७ ॥
तस्याः प्रियसंवादोऽवस्थाकथनं प्रतीक्षणं पत्युः ।
काकः प्रियसंभेदोऽप्यथाभिसारक्रियारम्भः ॥ ८ ॥
अभिसारिका दिनतमोज्योत्स्नादुर्दिनगता च कुलटानाम् ।
प्रलपितमबलारूपं भ्रूदृक्कर्णाधरराननं वचनम् ॥ ९ ॥
बाहुस्तनरोमावालिमध्यं च क्रीडितानि युवतीनाम् ।
अनुकूलो दक्षिणशठधृष्टग्राम्याश्च नायका मानी ॥ १० ॥
प्रोषितपथिको वर्षापथिकः पथिकस्य नायिकास्मरणम् ।
यात्राभङ्गो विरहो विरहिस्त्रीस्मरणमवलोकः ॥ ११ ॥
चित्रं स्वप्नो यूनोरभिलाषस्तानवं गुणाख्यानम् ।
उद्वेगः परिदेवनमिन्दुस्मरजलमुचामुपालम्भः ॥ १२ ॥
उन्मादः स्मरलेखः क्रीडावनवारिणोरलंकारः ।
दूतीसंवदनं स्त्री पुंलोभनदूत्युपालम्भौ ॥ १३ ॥
मिथुनागमनं वाद्यं नृत्यं गीतं दुरोदरं दृष्टिः ।
स्त्रीणां कटाक्षचाटू मधुपानं तल्पसंश्रयणम् ॥ १४ ॥
परिरम्भचुम्बनाधरदंशनखन्यासकण्ठकूजाश्च ।
वस्त्राकर्षनवोढासंभोगौ निधुवनारम्भः ॥ १५ ॥
सुरतं विपरीतरतं विपरीतरतानुकथनसुरतान्तौ ।
उषसि प्रियावलोकनमथ वनितानिष्क्रमो रतश्लाघा ॥ १६ ॥
आलीनामितरेतरकथा शुकालापलज्जमाना च ।
प्रत्यूषादित्योदयमध्याह्नास्तमयसायातिमिराणि ॥ १७ ॥
दीपेन्दूदयरजनय आरम्भः कुसुमसमयस्य ।
कुसुमसमयोऽस्य वासरतरुपिकमधुपा निदाघतद्वेशौ ॥ १८ ॥
ग्रीष्मभवः शृङ्गारो दववह्निः प्रावृडारम्भः ।
वर्षा वार्षिकवारिदतटिनीदिनरात्रयः शरत्सन्धिः ॥ १९ ॥
शरदेतदीयह्रदिनी खञ्जनहेमन्ततत्समस्विन्यः ।
हैमनहालिकपथिकौ शिशिरस्तद्ग्रामशस्यशर्माणि ॥ २० ॥
उच्चावचामिति नवसप्तत्यधिकशतेन सरसवीचीनाम् ।
श्रीधरदासेन सतारचि शृङ्गारप्रवाहोयम् ॥ २१ ॥

## १ वयःसन्धिवीचिः ।

अचञ्चलं मुग्धमुदञ्चितं दृशोरनुन्नतं श्रीमदुरो मृगीदृशः ।
अभङ्गुराकूतवती गतिर्भ्रुवोरबद्धलक्ष्यं कचिदुत्क्रमान्तरम् ॥१॥
गोसोकस्य ।

अप्रकटवर्तितस्तनमण्डलिकानिभृतचक्रदर्शिन्यः ।
आवेशयन्ति हृदयं स्मरचर्यागुप्तयोगिन्यः ॥ २ ॥ तस्यैव ।

यूनां पुरः सपदि किंचिदुपेतलज्जा
वक्षो रुणद्धि मनसैव न दोर्लताभ्याम् ।
प्रौढाङ्गनाप्रणयकेलिकथासु बाला
शुश्रूषुरन्तरथ बाह्यमुदास्त एव ॥ ३ ॥ श्रीहनूमतः ।

अहमहमिकाबद्धोत्साहं रतोत्सवशंसिनि
प्रसरति मुहुः प्रौढस्त्रीणां कथामृतदुर्दिने ।
कलितपुलका सद्यः स्तोकोद्गतस्तनकोरके
वलयति शनैर्बाला वक्षस्थले तरलां दृशम् ॥ ४ ॥
धर्माशोकदत्तस्य ।

लावण्यामृतसान्द्रसिन्धुलहरीसंसिक्तमस्या वपु-
र्जातस्तत्र नवीनयौवनकलालीलालतामण्डपः ।
तत्रायं स्पृहणीयशीतलतरुच्छायाप्रसुप्तोत्थितः
संमुग्धो मधुबान्धवः सभगवानद्यापि निद्रालसः ॥५॥ भिक्षोः।

## २ किंचिदुपारूढयौवना ।

यत्प्रत्यङ्गं स्फुटमनुसरन्त्यूर्मयो विभ्रमाणां
क्षोभं धत्ते यदपि विपुलः स्निग्धलावण्यपङ्कः ।
उन्मग्नं यत्स्फुरति च मनाक्कुम्भयोर्युग्ममेत-
त्तन्मन्येस्याः स्मरगजयुवा गाहते हृत्तडागम् ॥ १ ॥
विधूकस्य ।

भ्रुवोः काचिल्लीला परिणतिरपूर्वा नयनयोः
स्तनाभोगो व्यक्तस्तरुणिमसमारम्भसमये ।
इदानीमेतस्याः कुवलयदृशः प्रत्यहमयं
नितम्बस्याभोगो नयति मणिकाञ्चीमधिकताम् ॥ २ ॥
राजोकस्य ।

दरोत्तानं चक्षुः कलितविरलापाङ्गचलनं
भविष्यद्विस्तारस्तनमुकुलगर्भालसमुरः ।
नितम्बे संक्रान्ताः कतिपयकला गौरवजुषो
वपुर्मुञ्चद्बाल्यं किमपि कमनीयं मृगदृशः ॥ ३ ॥ कस्यचित् ।

पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्यां
श्रोणीबिम्बं त्यजति तनुतां सेवते मध्यभागः।
धत्ते वक्षः कुचसचिवतामद्वितीयं च वक्त्रं
तद्गात्राणां गुणविनिमयः कल्पितो यौवनेन ॥ ४ ॥

राजशेखरस्य।

गते बाल्ये चेतः कुसुमधनुषा सायकहतं
भयाद्वीद्यैवास्याः स्तनयुगमभून्निर्जिगमिषु।
सकम्पा भ्रूवल्ली चलति नयनं कर्णकुहरं
कृशं मध्यं भुग्ना वलिरलसितः श्रोणिफलकः ॥ ५ ॥

शतानन्दस्य।

## ३ युवतिः।

तरन्तीवाङ्गानि स्फुरदमललावण्यजलधौ
प्रथिम्नः प्रागल्भ्यं स्तनजघन मुन्मुद्रयति च।
दृशोर्लीलारम्भाः स्फुटमपवदन्ते सरलता-
महो सारङ्गाक्ष्यास्तरुणिमनि गाढः परिचयः ॥ १ ॥

राजशेखरस्य।

अतन्त्री वाग्वीणा स्तनयुगलमग्रीवकलसा-
वनब्जं दृङ्नीलोत्पलदलमपत्रोरुकदली।
अकाण्डा दोर्वल्ली वदनमकलङ्कः शशधर-
स्तदस्यास्तारुण्यं भुवनविपरीतं घटयति ॥ २ ॥ वाग्वीणस्य।

न जङ्घे गौराङ्ग्याः सरसकदलीस्तम्भयुगलं
न मध्योयं वेदी न कुचयुगलं काञ्चनघटौ।
न काञ्ची किन्त्वायं स्फुरति परितस्तोरणगुणः
स्मरस्यैतन्मन्ये सकलमभिषेकोपकरणम् ॥ ३ ॥ कस्यचित्।

तदेतत्सर्वस्वं भुवनजयिनः पुष्पधनुषो
मनुष्याणामेकं तदिदमसमं जीवितफलम्।
इदं तत्सौख्यानां कुलभवनमाद्यं त्रिभुवने
यदेतत्तारुण्योपहितमहिमानो मृगदृशः ॥ ४ ॥ कस्यचित्।

मध्यं बद्धवलित्रयं विजयते निस्सन्धिबन्धोन्नम-
द्विस्तारिस्तनभारमन्थरमुरो मुग्धाः कपोलश्रियः।
किञ्चामुग्धविनिद्रनीरजदृशस्तारुण्यपुण्यातिथे-
रस्याः कुङ्कुमपङ्कलेपलडहच्छायं वपुर्वर्तते ॥ ५ ॥ कस्याचित्।

## ४ नायिकाद्भुतम् ।

मध्ये हेमलतं कपित्थयुगलं प्रादुर्बभूव क्रम-
प्राप्तौ तालफलद्वयं तदभवन्निःसन्धिभावस्थितम् ।
पश्चाद्वृद्धसमुन्नतिव्यतिकरं सौवर्णकुम्भद्वया-
कारेण स्फुटमेव तत्परिणतं केदं वदामोद्भुतम् ॥ १ ॥

वेतोकस्य ।

दृष्टा काञ्चनयष्टिरद्य नगरोपान्ते भ्रमन्ती मया
तस्यामद्भुतमेकपद्ममनिशं प्रोत्फुल्लमालोकितम् ।
तत्रोभौ मधुपौ तथोपरि तयोरेकोष्टमीचन्द्रमा-
स्तस्याग्रे परिपुञ्जितेन तमसा नक्तंदिवं स्थीयते ॥ २॥ तस्यैव ।

दृष्टाः शैवलमञ्जरीपरिचिताः सिन्धोश्चिरं वीचयो
रत्नान्यप्यवलोकितानि बहुशो युक्तानि मुक्ताफलैः ।
यत्तु प्रोज्झितलाञ्छने हिमरुचावुन्निद्रमिन्दीवरं
संसक्तं च मिथो रथाङ्गमिथुनं तत्कुत्र दृष्टं पुनः ॥ ३ ॥

रथाङ्गस्य ।

लावण्यसिन्धुरपरैव हि केयमत्र
यत्रोत्पलानि शशिना सह संप्लवन्ते
उन्मज्जति द्विरदकुम्भतटी च यत्र
यत्रापरे कदलकाण्डमृणालदण्डाः ॥४॥ विकटनितम्बायाः ।

किं कोप्येष मम भ्रमः किमथवा जातो दृशां मादृशां
दोषस्तैमिरिकः किमेष सुमहानुत्पातनामा विधिः ।
यन्नीलाञ्जनसंनिभोत्पलदलद्वन्द्वोल्लसत्पञ्चम-
व्याहारी दिवसे च वर्द्धितरुचिर्गेहे शशी पार्वणः ॥ ५ ॥

कस्यचित् ।

### मुग्धा ।

वारंवारमनेकधा सखि मया चूतद्रुमाणां वने
पीतः कर्णदरीप्रणालवलितः पुंस्कोकिलानां ध्वनिः ।
तस्मिन्नद्य पुनः श्रुतिप्रणयिनि प्रत्यङ्गमुत्कम्पितं
तापश्चेतसि नेत्रयोस्तरलता कस्मादकस्मान्मम ॥ १ ॥
ववुरेव मलयमरुतो जगुरेव पिकाः परारि च परुच्च ।
उत्कण्ठाभरतरलं सखि मानसमेषमः किमिदम् ॥ २ ॥

कालिदासस्य ।

सा पत्युः प्रथमापराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम्।
स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः ॥ ३ ॥ अमरोः।

भ्रुवमुदयतटीषु वल्लयस्ता यदुदिततन्तुचयैर्भवन्ति काञ्च्यः।
इह हरिणदृशः फलैर्यदीयैर्विदधति मौक्तिकनामभिश्च हारान् ॥४॥
राजशेखरस्य।

यावद्यावत्कुवलयदृशा मृज्यते दन्तराजि-
स्तावत्तावद्द्विगुणमधरच्छायया शोणशोचिः।
भूयोभूयः प्रियसहचरीदर्शितादर्शभित्तौ
दृष्ट्वा दृष्ट्वा न विरमयते पाणिमद्यापि मुग्धा ॥ ५ ॥
देवबोधस्य।

६ मध्या।

विरम नाथ विमुञ्च ममाञ्चलं
शमय दीपमियं समया सखी।
इति नवोढवधूवचसा युवा
मुदमगादधिकां सुरतादपि ॥ १ ॥ रुद्रटस्य।

दृष्टिः स्निह्यति निर्भरं प्रियतमे वैदग्ध्यभाजो गिरः
पाणिः कुन्तलमालिकाविरचने त्यक्तान्यकार्यग्रहः।
वक्षः संव्रियते पुनः पुनरिदं भारालसं गम्यते
जाता सुभ्रु मनोरमा तव दशा कस्मादकस्मादियम् ॥ २ ॥
तस्यैव।

यथा रोमाञ्चोऽयं स्तनभुवि लसत्स्वेदकणिको
यथा दृष्टिस्तिर्यक् पतति सहसा संकुचति च।
तथा शङ्केऽमुष्याः प्रणयिनि दरास्वादितरसं
न मध्यस्थं चेतः प्रगुणरमणीयं न च दृढम् ॥ ३ ॥
कस्यचित्।

न वक्ति प्रेमार्द्रं न खलु परिरम्भं रचयति
स्थितौ तस्यां तस्यां करकमललीलां न सहते।
स्मितज्योत्स्नाक्रान्तं मुखमभिमुखं नैव कुरुते
तथाप्यन्तः प्रीतिं वपुषि पुलकोऽस्याः कथयति ॥ ४ ॥
कालिदासस्य।

यदन्योन्यप्रेमप्रवणयुवतीमन्मथकथा-
समारम्भे स्तम्भीभवति पुलकैराञ्चिततनुः।

तथा मन्ये धन्यं परमसुरतब्रह्मनिरतं
कुरङ्गाक्षी दीक्षागुरुमकृत कश्चित्सुकृतिनम्॥ ५॥
नरसिंहस्य।

## ७ प्रगल्भा।

गण्डे मण्डनमात्मनैव कुरुते वैदग्ध्यगर्वादसौ
मुक्त्वा हेमविभूषणानि कुरुते तालीदलेषु ग्रहम्।
मन्दा कन्दुकखेलनाय कुरुते शारीषु शिक्षारसं
तन्व्याश्चित्रमकाण्डएव लडहे भावे निबद्धो भरः॥ १॥
कस्यचित्।

दोलायां जघनस्थलेन चलता लोलेक्षणा लज्जते
धत्ते दिक्षु निरीक्षणं स्मितमुखी पारावतानां रुतैः।
स्पर्शैः कण्टककोटिभिः कुटिलया लीलावनौ नेष्यते
सज्जं मौग्ध्यविसर्जनाय सुतनोः शृङ्गारमित्रं वपुः॥ २॥
बिह्लणस्य।

प्रियस्य रूढप्रणस्य काचित्किञ्चित्समुत्सार्य नितम्बबिम्बम्।
भ्रुवस्त्रिभागेन तरङ्गितेन सलीलमर्धासनमादिदेश॥ ३॥
प्रवरसेनस्य।

मधुरवचनैः सभ्रूभङ्गैः कृताङ्गुलितर्जनै-
रलसवलितैरङ्गन्यासैर्महोत्सवबन्धुभिः।
असकृदसकृत्स्फारस्फारैरपाङ्गविलोकितै-
स्त्रिभुवनजये सा पञ्चेषोः करोति सहायताम्॥ ४॥ रुद्रटस्य।

अभ्यस्य स्मरदंशकौशलमुपाध्यायीरुपास्यावयोः
क्रीडाम्नायरहस्यवस्तुनि मिथोऽप्यासीज्जिगीषा सखि।
उत्कम्पोत्पुलकाङ्गसंभृतघनस्वेदाविलस्तन्मया
सद्यो निष्प्रतिभः स मन्मथकलावैतण्डिकः खण्डितः॥ ५॥
योगोकस्य।

## ८ नवोढा।

प्रथयति मयि व्याजेनाङ्गं ह्रिया च निगूहते
क्षिपति विशदस्निग्धं चक्षुः क्षणाच्च नियच्छति।
मम न सहते दृष्टा दृष्टिं पुनश्च समीहते
वहति हृदये कामं बाला न चोज्झति वामताम्॥ १॥
चन्द्रस्वामिनः।

पटालग्ने पत्यौ नमयति मुखं जातविनया
हठाश्लेषं वाञ्छत्यपहरति गात्राणि निभृतम्।

न शक्नोत्याख्यातुं स्मितमुखसखीदत्तनयना
ह्रिया ताम्यत्यन्तः प्रथमपरिहासे नववधूः ॥ २ ॥ अमरोः ।

निर्यन्त्रणं विहर मा चिरय प्रसीद
किं वेपसे पवनवेल्लितवल्लरीव ।
धीरोदचञ्चलदृगञ्चलपातमात्र-
क्रीते जने क इव विभ्रमसंनिरोधः ॥ ३ ॥
गोवर्द्धनस्य ।

अवचनं वचनं प्रियसंनिधावनवलोकनमेव विलोकनम् ।
अवयवावरणं च यदञ्चलव्यतिकरेण तदङ्गसमर्पणम् ॥४॥
कालिदासस्य ।

क्षिपति दयिते दृष्टिं वक्रामपाङ्गतरङ्गिणीं
हसितमनभिव्यक्तं मध्ये दधाति कपोलयोः ।
मृदु मदकलं किञ्चिद्वाक्यं कथञ्चन मुञ्चती
हरति हृदयं प्रौढेवेयं नवापि नितम्बिनी ॥ ५ ॥
उमापतिधरस्य ।

## ९ विस्रब्धनवोढा ।

दृष्टा दृष्टिमधो ददाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्य तिष्ठति बलादालिङ्गिता वेपते ।
निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते
जाता वामतयैव मेऽद्य सुतरां प्रीत्यै नवोढा प्रिया ॥ ६ ॥
श्रीहर्षस्य ।

अपि भुजलतोत्क्षेपादस्याः कृतं परिरम्भणं
प्रियसहचरीक्रीडालापे श्रुता अपि सूक्तयः ।
नवपरिणयव्रीडावत्या मुखोन्नतियत्नतो-
प्यलसवलिता तिर्यग्दृष्टिः करोति महोत्सवम् ॥ २ ॥
कालिदासनन्दिनः ।

हरति रुचिरं गाढाश्लेषे यदङ्कमङ्गना
स्थगयति तथा यत्पाणिभ्यां मुखं परिचुम्बने ।
यदपि बहुशः पृष्टा किंचिद्ब्रवीत्यपरिस्फुटं
रमयतितरां तेनैवासौ मनोभिनवा वधूः ॥ ३ ॥
कस्यचित् ।

प्रगल्भस्त्रीशिक्षानियमितभयव्रीडमुदित-
स्मरोत्कम्पस्वेदं वहति घनमालिङ्गति मुहुः ।

मुहुः स्वादु स्वैरं वदति निभृतं पश्यति मुहु-
श्चिरादेवं धम्यानन्त्रिरपरिणीता रमयति ॥ ४ ॥ प्रियाकस्य ।
दन्ताग्रग्रहणं करोति शनकैर्नैवाधरे खण्डनं
कण्ठे श्लिष्यति निर्भरग्रहविधिं कर्तुं पुनः शङ्कते ।
तिष्ठत्येव रतान्तरेष्वभिमुखं नैवाभियुङ्क्ते स्वयं
निष्प्रागल्भ्यतयैव वल्लभतरो यूनां नवोढाजनः ॥ ५ ॥
भ्रमरदेवस्य ।

## १० गर्भिणी ।

आविर्भूतविपाण्डुरच्छवि मुखं क्षामा कपोलस्थली
स्वव्यापारपरिश्लथे च नयनेऽनुत्साहमुग्धं वपुः ।
श्यामीभूतमुखं पयोधरयुगं मध्यः स्वभावोच्छ्रितो
जातान्यैव मनोहराकृतिरहो गर्भोदये सुभ्रुवः ॥ १ ॥
कालिदासनन्दिनः ।

हारिद्रमम्बरमुपान्तनिबद्धचक्र-
मेकं कुलस्थितिवशाद्दधती प्रियासौ ।
तत्कालमङ्गलसमाचरणप्रयत्न-
व्यासिद्धकेलिरपि मङ्गलमातनोति ॥ २ ॥ तस्यैव ।
मृदासक्ता हृद्यं स्थगयति मुखं चुम्बति मयि
स्तनौ पाण्डुश्यामौ मम करतलादाक्षिपति च ।
कृते गर्भालापे विशदहसितं रक्षति रुषा
प्रिया सर्वाकारं विशति हृदयं वल्लभतया ॥ ३ ॥
कर्णाटदेवस्य ।
अलसमधुरा स्निग्धा दृष्टिर्घनत्वमुपागता
किसलयरुचिर्निस्ताम्बूलस्वभावधरोधरः ।
त्रिवलिवलया लेखोन्नेया घटन्तइवैकतः
प्रकृतिसुभगा गर्भेणासौ किमप्युपपादिता ॥ ४ ॥ तस्यैव ।
परिणतशरकाण्डापाण्डुरा गण्डभित्तिः
कुचकलसमुखश्रीः कालिमानं दधाति ।
व्यपनतकृशभावं पीनतामेति मध्यं
वपुरतिशयगौरं गर्भमाविष्करोति ॥ ५ ॥ पशुपतिधरस्य ।

## ११ कुलस्त्री ।

कुर्वीथाः श्वशुरस्य भक्तिमधिकां श्वश्र्वाश्च पादानतिं
स्नेहं भृत्यजने प्रतीच्छ रभसाद्द्वारागतान्बान्धवान् ।

भर्तारं सुखदुःखयोरविकृतप्रेमानुबन्धोदया
गेहे वा विपिनेऽपि वा सहचरीवृत्तेन नित्यं भज ॥ १ ॥

कालिदासस्य ।

न नयति बहुमानस्यास्पदं स्निग्धबन्धू-
न्न च गुणिनि समृद्धेऽप्यादरं याति ताते ।
न भजति धृतिमन्तर्नन्दनेऽप्यन्तरात्मा
भवति हि पतिनिष्ठं प्रेम साध्वीजनस्य ॥ २ ॥

उमापतिधरस्य ।

अभ्युत्थानमुपागते गृहपतौ तद्भाषणे नम्रता
तत्पादार्पितदृष्टिरासनविधिस्तस्योपचर्या स्वयम् ।
सुप्ते तत्र शयीत तत्प्रथमतो जह्याच्च शय्यामिति
प्राच्यैः पुत्रि निवेदिताः कुलवधूसिद्धान्तधर्मा अमी ॥ ३ ॥

राजशेखरस्य ।

शिरो यदवगुण्ठितं सहजरूढलज्जानतं
गतं च परिमन्थरं चरणकोटिलग्ने दृशौ ।
वचः परिमितं च यन्मधुरमन्दमन्दाक्षरं
निजं तदियमङ्गना वदति नूनमुच्चैः कुलम् ॥ ४ ॥

लक्ष्मीधरस्य ।

शुश्रूषस्व गुरून्कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥ ५ ॥

कालिदासस्य ।

## १२ असती ।

सिकतिलतलाः सान्द्रच्छायातटान्तविलम्बिनः
शिशिरमरुतां नीतावासाः क्वणज्जलरङ्कवः ।
अविनयवतीनिर्विच्छेदस्मरव्ययदायिनः
कथय मुरले केनामी ते कृता निचुलद्रुमाः ॥ १ ॥

विद्यायाः ।

पत्युः केलिभिरस्थिषु च्छिदुरता मर्मक्षतिर्नर्मणा
शृङ्गारेण गुरुव्यथा समुदयत्युच्चाटनं चाटुभिः ।
ध्यायन्त्याः सततोत्सुकेन मनसा नीरन्ध्रवानीरिणी-
राकौमारमुपास्यमानमुरलासीमाभुवः सुभ्रुवः ॥ २ ॥

उमापतिधरस्य ।

यः कौमारहरः स एव हि वरस्ताश्चन्द्रगर्भा निशाः
प्रोन्मीलन्नवमालतीसुरभयस्ते ते च विन्ध्यानिलाः ।
सा चैवास्मि तथापि चौर्यसुरतव्यापारलीलाभृतां
रेवारोधसि वेतसीवनभुवां चेतः समुत्कण्ठते ॥३॥ कस्यचित् ।
दावालीढकलेवरे विटपिनि प्राप्तोद्गमानङ्कुरा-
नग्रे पल्लवितैर्मनोभिरचिराच्चेतोभुवा नर्तिताः ।
सानन्दाश्रु विलोकयन्ति कलितखेदं स्पृशन्त्यादरा-
दुत्कम्पाङ्गुलि दर्शयन्ति मदनक्रीडामहस्सारिणः ॥ ४ ॥
तस्याः संप्रति वासरक्रमनमत्तोये तमालातटे
साकूतं निपतन्ति वेतसलताकुञ्जोदरे दृष्टयः ।
सोत्कम्पस्खलितांशुकस्तनतटं सोल्लासकाञ्चीगुण-
ग्रन्थिन्यस्तचलाङ्गुलीकिसलयं स्वेदार्द्रहस्ताम्बुजम् ॥ ५ ॥
चण्डालचन्द्रस्य ।

## १३ कुलटोपदेशः ।

वयं बाल्ये बालांस्तरुणिमनि यूनः परिणता-
वपीच्छामो वृद्धांस्तदिह कुलरक्षा समुचिता ।
त्वयारब्धं जन्म क्षपयितुमनेनैकपतिना
न नो गोत्रे पुत्रि क्वचिदपि सतीलाञ्छनमभूत् ॥ १ ॥
विद्यायाः ।
उन्मीलद्यौवनासि प्रियसखि विषमाः श्रेण्यो नागराणां
तस्मात्कोपि त्वयाद्य प्रभृति न सहसा संमुखं वीक्षणीयः ।
यावच्चन्द्रार्कमेकः पतिरतिशयितश्रद्धया सेवितव्यः
कर्तव्या रूपरक्षा वचसि च हृदयं देयमस्मद्विधानाम् ॥ २ ॥
शरणस्य ।
आराध्यः पतिरेव तस्य च पदद्वन्द्वानुवृत्तिर्व्रतं
केनैताः सखि शिक्षितासि विपथप्रस्थानदुर्वासनाः ।
किं रूपेण न यत्र मज्जति मनो यूनां किमाचार्यकै-
र्गूढानङ्गरहस्ययुक्तिषु फलं येषां न दीर्घं यशः ॥ ३ ॥
तस्यैव ।
अस्माकं व्रतमेतदेव यदयं कुञ्जोदरे जागरः
शुश्रूषा मदनस्य वक्त्रमधुभिः संतर्पणीयोतिथिः ।
निस्त्रिंशाः शतशः पतन्तु शिरसश्छेदोथवा जायता-
मात्मीयं कुलवर्त्म पुत्रि न मनागुल्लङ्घनीयं त्वया ॥ ४ ॥
वैद्यगदाधरस्य ।

कुलोत्कर्षात्स्नेहात्कामितुरथवा पातकभया-
त्सखि श्रद्धा ते स्याद्यदि विनयमालम्बितुमपि ।
किमेभिर्दातव्यं परिकलय शिप्रातटरुहां
करञ्जानां कुञ्जैरविनयवतीनर्मनिपुणैः ॥ ५ ॥ डिम्बोकस्य ।

१४ गुप्तासती ।

दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृहे दास्यसि
प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति ।
एकाकिन्यपि यामि सत्वरमितः स्रोतस्तमालाकुलं
नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः ॥ १ ॥
विद्यायाः ।

उपान्तप्रोन्मीलद्विटपिजटिलां कौतुकवती
कदाचिद्गन्तासि प्रियसखि न शिप्रातटभुवम् ।
यदस्यां मुक्तास्रग्विहितसितभोगिभ्रमतया
वयोरूढः केकी लिखति नखरेण स्तनतटम् ॥ २ ॥ मधोः ।
षष्ठ्यां गन्तुमरण्यमस्मि चकिता यत्रार्चयन्ती द्रुमा-
न्दृष्ट्वैवापतिता भुजङ्गमभितो व्यस्तापयान्ती ततः ।
विश्लिष्यद्वसना विकीर्णकबरी जातक्षता कण्टकैः
कास्मीति स्वमहं न वेद सखि तद्वन्दे व्रतं तादृशम् ॥ ३ ॥
गोविन्दस्वामिनः ।

अन्यासां न किमस्ति वेश्मनि वधूः कैवं निशि प्रावृषि
प्रैति प्रान्ततडागमम्ब गृहिणि स्वस्थासि मेवस्थया
भग्नोयं वलयो घटो विघटितः क्षुण्णा तनुः कण्टकै-
राक्रान्तः स तथा भुजङ्गहतकः कष्टं न यद्दष्टवान् ॥ ४ ॥
पादूकस्य ।

अम्ब श्वश्रु यदि त्वया हतशुकः संवर्द्धनीयस्तदा
लौहं पञ्जरमस्य दुर्णयवतो गाढान्तरं कारय ।
अद्यैनं वदरीनिकुञ्जकुहरे संलीनमन्विष्यती
दष्टा यन्न भुजङ्गमेन तदतिश्रेयः किमेभिः क्षतैः ॥ ५ ॥
कस्यचित् ।

१५ विदग्धासती ।

ग्रामान्ते वसतिर्ममातिविजने दूरप्रवासी पति-
र्गेहे देहवती जरेव जरती श्वश्रूर्द्वितीया परम् ।

एतत्पान्थ वृथा विडम्बयति मां बाल्यातिरिक्तं वयः
सूक्ष्मं वीक्षितुमक्षमेह जनता वासोऽन्यतश्चिन्त्यताम् ॥१॥

बलभद्रस्य ।

एकाकिनी परवशा तरुणी तथाह-
मस्मिन्गृहे गृहपतिश्च गतो विदूरम् ।
किं याचसे तदिह वासमियं वराकी
श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ ॥ २ ॥ रुद्रटस्य ।

अम्बा शेतेऽत्र वृद्धा परिणतवयसामग्रणीरत्र तातो
निःशेषागारकर्मश्रमशिथिलतनुर्गर्भदासी तथात्र ।
अस्मिन्पापाहमेका कतिपयदिवसप्रोषितप्राणनाथा
पान्थायेत्थं युवत्या कथितमभिमतं व्याहृतिव्याजपूर्वम् ॥ ३ ॥

भट्टस्य ।

पुरः पल्ली शून्या तदनु च विदूरेऽस्ति नगरं
परं पारेगङ्गं चरमगिरिगामी च मिहिरः ।
इतो यान्तं प्रान्ते मम रमणमालोकयसि चे-
त्ततस्ते कल्याणं पथिक स हि तत्र प्रहरिकः ॥ ४ ॥

नीलोकस्य ।

पान्थ स्वैरगतिं विहाय झटिति प्रस्थानमारभ्यता-
मत्यन्तं करिशूकराहिगवयैर्भीमं पुरः काननम् ।
चण्डांशोरपि रश्मयः प्रतिदिशं म्लानास्त्वमेको युवा
स्थानं नास्ति गृहे ममापि भवतो बालाहमेकाकिनी ॥ ५ ॥

कस्यचित् ।

## १६ लक्षितासती ।

दशनपद्मतिस्फुटं विभाति
स्फुरति तनुः श्रमवारिसिक्तमास्यम् ।
अवितथमभिधत्स्व कामिनि त्वां
कुटिलगतिर्न न दष्टवान् भुजङ्गः ॥ १ ॥

कस्यचित् ।

न्यस्तं न स्तनमण्डले नखपदं कण्ठान्नविश्लेषिता
मुक्ताहारलता कपोलफलके लुप्ता न पत्रावली ।
मुग्धे यद्यपि तेन ते न दशनैर्भित्त्वोद्य बिम्बाधर-
स्तद्वैलक्ष्यविजृम्भितैरिह तथाप्युन्नीयते दुर्णयः ॥ २ ॥

श्रीमल्लक्ष्मणसेनस्य ।

निर्धौताञ्जनलक्ष्म नेत्रमरुणोच्छूना कपोलस्थली
कान्तेवाधरपालिरस्फुटमिलल्लेखा तटी पार्श्वयोः ।
निद्राघूर्णितनिष्प्रयत्नशिथिलान्यङ्गानि ते तद्वयं
नो विद्मः सखि संमुखः स भगवान् कस्याद्य पुष्पायुधः ॥ ५ ॥
उमापतिधरस्य ।

मीलच्चक्षुरनुत्तरं पुलकिनी धत्से यदन्तर्मुदं
सावज्ञं यदुपान्तसंकुचितया दृष्ट्या पतिं पश्यसि ।
यद्वक्रास्वपि वेषभाषितकलास्वभ्यासमालम्बसे
तन्मन्ये सखि नागरस्य विषयं कस्यापि यातासि किम् ॥ ४ ॥
तस्यैव ।

परिणतसखीवाङ्निर्वेदान्निवृत्तगृहग्रहे
सुदति मदनाद्वैताभ्यासान्निकुञ्जनिवासिनि ।
कनखलशिलोत्खेलद्गङ्गास्खलद्गुरुकीकसः
कथय कतमो वानप्रस्थाश्रमेद्य तवातिथिः ॥ ५ ॥
पादुकस्य ।

## १७ वेश्या ।

ईर्ष्या कुलस्त्रीषु न नायकस्य निःशङ्ककेलिर्न पराङ्गनासु ।
वेश्यासु चैतद्द्वितयं विरूढं सर्वस्वमेतास्तदहो स्मरस्य ॥ १ ॥
रुद्रटस्य ।

कथमपि नाकिनेत्राग्निज्वालभस्मीकृतः पुरा ।
उज्जीवति पुनः कामो मन्ये वेश्यावलोकितैः ॥ २ ॥ तस्यैव ।

सश्रीकोलकपल्लवेन तिमिरस्ताम्बूलरागच्छविः
स्वच्छायादशनव्रणैर्नखपदैश्चित्रा च पत्रावली ।
लीलापाङ्गविलोकितस्तवकिता कर्णोत्पलश्रीरिति
व्यक्तोद्दीपितभूषणाः स्मरमपि क्षुभ्नन्ति वारस्त्रियः ॥ ३ ॥
जलचन्द्रस्य ।

श्रोणीभारभरालसा दरगलन्माल्यापवृत्तिच्छला-
ल्लीलोत्क्षिप्तभुजोपदर्शितकुचोन्मीलन्नखाङ्कावलिः ।
लोलेन्दीवरदामदीर्घतरया दृष्ट्या धयन्ती मनो
दोरान्दोलनलोलकङ्कणझणत्कारोत्तरं सर्पति ॥ ४ ॥
कृष्णमिश्रस्य ।

समुद्रवीचीव चलस्वभावाः सन्ध्याभ्रलेखेव मुहूर्तरागाः ।
वेश्याः कृतार्थाः पुरुषं हृतस्वं निष्पीडितालक्तकवत्त्यजन्ति ॥५॥
शूद्रकस्य ।

## १८ दाक्षिणात्यस्त्री ।

आमूलतो वलितकुन्तलचारुचूड-
चूर्णालकप्रकरलाञ्छितभालभागः ।
कक्षानिवेशनिबिडीकृतनीविरेष
वेषश्चिरं जयति कुन्तलकामिनीनाम् ॥ १ ॥
राजशेखरस्य ।

नेत्रयात्राशरक्षेपैस्त्र्यम्बकस्यापि ताडनी ।
भ्रूलता द्रविडस्त्रीणां द्वितीयं कामकार्मुकम् ॥ २ ॥ तस्यैव ।

मुखानि चारूणि घनाः पयोधरा नितम्बपृथ्व्यो जघनोत्तमश्रियः ।
तनूनि मध्यानि च यस्य सोऽभ्यगात्कथं नृपाणां द्रविडीजनो हृदः ॥३॥
पाणिनेः ।

वाचो माधुर्यवर्षिण्यो नाभयः शिथिलांशुकाः ।
दृष्टयश्च चलद्भ्रूका मण्डनान्यन्ध्रयोषिताम् ॥४॥ भर्तृमेण्ठस्य ।

द्रविडीनां ध्रुवं लीलारेचितभ्रूलते मुखे ।
आसज्य राज्यभावं स्वं सुखं स्वपिति मन्मथः ॥ ५ ॥
कस्यचित् ।

## १९ पाश्चात्यस्त्री ।

प्रपञ्चितकलातन्त्रे पञ्चालीकेलिनर्मणि ।
सर्वास्त्रमोक्षं कुरुते स्वयं कुसुमकार्मुकः ॥ १ ॥
राजशेखरस्य ।

खेलं संचरितुं तरङ्गतरलभ्रूलेखमालोकितुं
रम्यं स्थातुमनादरार्पितमनोमुद्रं च संभाषितुम् ।
संत्यज्योज्जयिनीजनीर्विवदितुं हृद्यं च लङ्कापते
प्रत्यङ्गार्पणसुन्दरं च न जनो जानाति रन्तुं पुरः ॥ २ ॥
तस्यैव ।

चकोर्य एव चतुराश्चन्द्रिकापानकर्मणि ।
आवन्त्य एव निपुणाः स्त्रियः सुरतनर्मणि ॥ ३ ॥ तस्यैव ।

ताडङ्कवल्गनतरङ्गितगण्डलेख-
मानाभिलम्बिदरदोलिततारहारम् ।
आश्रोणिगुल्फपरिमण्डलितोत्तरीयं
वेशं नमस्यत महोदयसुन्दरीणाम् ॥ ४ ॥ कस्यचित् ।

बाहुद्वन्द्वे वलयचरना रक्तकौशेयसूत्रैः
द्विसन्रान्तस्तवकशबला सामि सीमन्तलक्ष्मीः ।

दूर्वाश्यामं तिलकमलिके ग्रन्थिलः केशपाशः
प्रीतिं काशीनगरसुदृशामेष वेषस्तनोति ॥ ५ ॥ कस्यचित् ।

## २० उदीच्यप्राच्ये ।

कान्तिं कुङ्कुमकेशरान्मधुरतां द्राक्षारसस्यासवा-
द्वैदर्भीपरिपाकपूरवचसः काव्यात्कवेर्मार्दवम् ।
पार्श्वादेव जरातुरेण विधिना तं तं गृहीत्वा गुणं
सृष्टा हन्त हरन्ति कस्य न मनः कश्मीरवामभ्रुवः ॥ १ ॥

उमापतिधरस्य ।

तूणीनां हरिणाङ्कपाण्डुमधुरश्रीभाजि गण्डस्थले
शोभां कामपि बिभ्रति प्रणिहिताः कश्मीरविच्छित्तयः ।
अप्यासां स्तनमण्डले परिणमन्मालूरगौरे श्रियं
संधत्ते नवसांध्यरश्मिरुचिरं माञ्जिष्ठपट्टांशुकम् ॥ २ ॥

तस्यैव ।

उत्तरापथकान्तानां किं ब्रूमो रामणीयकम्
यासां तुषारसंभेदे नम्लायति मुखाम्बुजम् ॥ ३ ॥

अमृतदत्तस्य ।

अत्रार्द्रचन्दनकुचार्पितसूत्रहार-
सीमन्तचुम्बिसिचयस्फुटबाहुमूलः ।
दूर्वाप्रकाण्डरुचिरासु गुरूपभोगो
गौडाङ्गनासु चिरमेष चकास्ति वेषः ॥ ४ ॥

राजशेखरस्य ।

वासः सूक्ष्मं वपुषि भुजयोः काञ्चनी चाङ्गदश्री-
र्मालागर्भः सुरभिमसृणैर्गन्धतैलैः शिखण्डः ।
कर्णोत्तंसे नवशशिकलानिर्मलं तालपत्रं
वेशः केषां न हरति मनो वङ्गवाराङ्गनानाम् ॥ ५ ॥

कस्यचित् ।

## २१ ग्राम्या ।

तथाप्यकृतकोत्ताल-हासपल्लविताधरम् ।
मुखं ग्रामविलासिन्याः सकलं राज्यमर्हति ॥ १ ॥

भर्तृमेण्ठस्य ।

भाले कज्जलबिन्दुरिन्दुकिरणस्पर्धी मृणालाङ्कुरो
दोर्वल्लीषु शलाटुफेनिलफलोत्तंसश्च कर्णातिथिः ।

धम्मिल्लास्तिलपल्लवाभिषवणास्निग्धः स्वभावादयं
पान्थान्मन्थरयत्यनागरवधूवर्गस्य केशग्रहः ॥ २ ॥

चन्द्रचन्द्रस्य ।

न तथा नागरस्त्रीणां विलासा रमयन्ति नः ।
यथा स्वभावमुग्धानि वृत्तानि ग्राम्ययोषिताम् ॥ ३ ॥

कस्यचित् ।

मञ्चे रोमाञ्चिताङ्गी रतिमृदिततनोः कर्कटीवाटिकायां
कान्तस्याङ्के प्रमोदादुभयभुजपरिष्वक्तकण्ठे निलीना ।
पादेन प्रेङ्खयन्ती मुखरयति मुहुः पामरी फेरवाणां
रात्रावुत्त्रासहेतोर्वृतिशिखरलतालम्बिनीं कम्बुमालाम् ॥४॥

विद्यायाः ।

हलक्षतकरस्पर्शत्रपयेवासिताननम् ।
बिभर्ति सुभगाभोगं ग्राम्यस्त्री स्तनमण्डलम् ॥ ५ ॥

आचार्यगोपीकस्य ।

## २२ स्त्रीमात्रम् ।

यासां सत्यपि सद्गुणानुसरणे दोषानुबन्धः सदा
याः प्राणान्वरमर्पयन्ति न पुनः संपूर्णदृष्टिं प्रिये ।
अत्यन्ताभिमतेपि वस्तुनि विधिर्यासां निषेधात्मक-
स्तास्त्रैलोक्यविलक्षणप्रकृतयो वामाः प्रसीदन्तु वः ॥ १ ॥

विभोकस्य ।

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥ २ ॥

राजशेखरस्य ।

सोनङ्गः कुसुमानि पञ्च विशिखाः पुष्पाणि बाणासनं
स्वच्छन्दच्छिदुरा मधुव्रतमयी पङ्क्तिर्गुणः कार्मुके ।
एतत्साधन उत्सहेत स जगज्जेतुं कथं मन्मथ-
स्तस्यामोघममूर्भवन्ति न हि चेदस्त्रं कुरङ्गीदृशः ॥ ३ ॥

अमरसिंहस्य ।

यन्नामापि सुखाकरोति कलयत्युर्वीमपि द्यामिव
प्राप्तिर्यस्य यदङ्गसङ्गविधिना किं यन्न निह्नूयते ।
अन्तः किञ्च सुधासपत्नमनिशं जागर्ति यद्रागिणां
विस्रम्भास्पदमद्भुतं किमपि तत्कान्तेति तत्त्वान्तरम् ॥ ४ ॥

कस्यचित् ।

व्यर्थं विलोक्य कुसुमेषुमसुव्ययेऽपि
गौरीपतीक्षणशिखिज्वलितो मनोभूः ।
रोषाद्वशीकरणमस्त्रमुपाददे य-
त्सा सुभ्रुवां विजयते जगति प्रतिष्ठा ॥ ५ ॥

मनोविनोदस्य ।

## २३ खण्डिता ।

तव कितव किमाभिर्वाग्भिरभ्यर्णचूत-
क्षितिरुहि कलकण्ठालापमाकर्णयन्ती ।
रजनिमहमलज्जाऽजागरं पांशुलाना-
मुषसि विघस न त्वां पाणिनापि स्पृशामि ॥ १ ॥

धर्मयोगेश्वरस्य ।

सार्धं मनोरथशतैस्तव धूर्त कान्ता
सैव स्थिता मनसि कृत्रिमभावरम्या ।
अस्माकमस्ति न च कश्चिदिहावकाश-
स्तस्मात्कृतं चरणपातविडम्बनाभिः ॥ २ ॥

कस्यचित् ।

पादान्ते पतितः प्रियः पततु न प्रव्यक्तवाष्पोद्गमः
संजातः स न जायतां त्वमधुना तद्वक्त्रमत्रागता ।
एकाहं तटिनीतटान्तविटपागारे यदाजागरं
नासीत्कापि सखी तदाघनतमःस्तोमावृतायां निशि ॥ ३ ॥

आचार्यगोपीकस्य ।

किं ते वाष्पस्तिरयति दृशौ किं सकम्पोधरस्ते
गण्डाभोगः कथय किमु ते कोपकेलीकषायः ।
निर्मर्यादे मम हि रजनीजागरक्लेशराशे-
रेकः साक्षी स खलु मुरलातीरवानीरकुञ्जः ॥ ४ ॥

वासुदेवस्य ।

ततश्चाभिज्ञाय स्फुरदरुणगण्डस्थलरुचा
मनस्विन्या रूढप्रणयकलहाविष्टमनसा ।
अहो चित्रं चित्रं स्फुटमिति लपन्त्याश्रुकलुषं
रुषा ब्रह्मास्त्रं मे शिरसि निहितो वामचरणः ॥ ५ ॥

अमरुकस्य ।

## २४ अन्यरतिचिह्नदुःखिता ।

इदं हो कान्त रहोगतेन भवता यत्पूर्वमावेदितं
निर्भिन्ना तनुरावयोरिति मया तज्ज्ञातमद्य स्फुटम् ।

कामिन्या स्मरवेदनाकुलहृदा यः केलिकाले कृतः
सोऽत्यर्थं कथमन्यथा तुदति मामेष त्वदोष्ठव्रणः ॥ १ ॥

अयं धूर्तो मायाविनयमधुरादस्य वचसः
सखि प्रत्येषि त्वं प्रकृतिसरले पश्यसि न किम् ।
कपोले यल्लाक्षावहलरसरागप्रणयिनी-
मिमां धत्ते मुद्रामनतिचिरवृत्तान्तपिशुनाम् ॥ २ ॥

सोल्होकस्य ।

किमेताः स्वच्छन्दं वितथशपथोक्तीर्वितनुषे
भजेथास्तामेव प्रियसहचरीं चित्तमधुराम् ।
यया याच्ञानम्रे तव शिरसि सौभाग्यगरिम-
प्रशास्तिर्न्यस्तेयं चरणनखलाक्षारसमयी ॥ ३ ॥

वामदेवस्य ।

लाक्षालक्ष्म ललाटपट्टमभितः केयूरमुद्रा गले
वक्त्रे कज्जलकालिमा नयनयोस्ताम्बूलरागोदयः ।
प्रातः कोपविधायि मण्डनमिदं दृष्ट्वा चिरं प्रेयसः
क्रीडातामरसोदरेम्बुजदृशः श्वासाः समाप्तिं गताः ॥४॥

अमरोः ।

निद्राच्छेदकषायिते तव दृशौ दृष्टिर्ममालोहिनी
वक्षो मुष्टिभिराहतं तव हृदि स्फूर्जन्ति मे वेदनाः ।
आश्चर्यं नवकुन्दकुड्मलशिखातीक्ष्णैरमीभिर्नखैः
प्रत्यङ्गं तव जर्जरा तनुरहं जाता पुनः खण्डिता ॥ ५ ॥

उमापतिधरस्य ।

## २५ लक्षितविरहिणी ।

कुचौ धत्तः कम्पं निपतति कपोलः करतले
निकामं निःश्वासः सरलमलकं ताण्डवयति ।
दृशः सामर्थ्यानि स्थगयति मुहुर्वाष्पसलिलं
प्रपञ्चोयं किञ्चित्तव सखि हृदिस्थं कथयति ॥ १ ॥

अमरसिंहस्य ।

आहारे विरतिः समस्तविषयग्रामे निवृत्तिः परा
नासाग्रे नयनं यदेतदपरं यच्चैकतानं मनः ।
मौनं चेदमिदं च शून्यमखिलं यद्विश्वमाभाति ते
तद्ब्रूयाः सखि योगिनी किमसि भोः किं वा वियोगिन्यसि ॥२॥

राजशेखरस्य ।

यत्तालीदलपाकपाण्डु वदनं यन्नेत्रयोर्दुर्दिनं
गण्डः पाणिनिषेवनाच्च यदयं संक्रान्तपञ्चाङ्गुलिः।
गौरी क्रुध्यतु वर्तते यदि न ते तत्कोपि चित्ते युवा
धिग्धिक् त्वां सह पांशुखेलनसखीवर्गेपि यन्निह्नवः॥ ३॥

तस्यैव।

यत्सम्भाषणलालसेव तनुषे वक्त्रेन्दुमर्द्धानतं
धत्से बाहुलतार्गलां कुचतटे निष्क्रान्तिभीत्येव यत्।
किंवा मन्त्रयते जनोयमिति यत्सर्वत्र शङ्काकुला
तज्जाने हृदि कोपि तिष्ठति युवा प्रौढश्च गूढश्च ते॥ ४॥

शिल्हणस्य।

यद्दौर्बल्यं वपुषि महती सर्वतश्चास्पृहा य-
न्नासालक्ष्यं यदपि नयनं मौनमेकान्ततो यत्।
एकाधीनं कथयति मनस्तावदेषा दशा ते
कोसावेकः कथय सुमुखि ब्रह्म वा वल्लभो वा॥ ५॥

लक्ष्मीधरस्य।

## २६ विरहिणी।

श्वासास्ताण्डवितालकाः करतले सुप्ता कपोलस्थली
नेत्रे वाष्पतरङ्गिते परिणतः कण्ठे कलः पञ्चमः।
अङ्गेषु प्रथमप्रबुद्धफलिनीलावण्यसंवादिनी
पाण्डिम्ना विरहोचितेन गमिता कान्तिः कथाशेषताम्॥ १॥

कस्मान्म्लायसि मालतीव मृदितेत्यालीजने पृच्छति
व्यक्तं नोदितमार्तयापि विरहे शालीनया बालया।
अक्ष्णोर्वाष्पभरं निगृह्य कथमप्यालोकितः केवलं
किञ्चित्कुड्मलकोटिभिन्नशिखरश्चूतद्रुमः प्राङ्गणे॥ २॥

वाहूटस्य।

सा चन्द्रादपि मन्मथादपि जलद्रोणीसमीरादपि
त्रस्ता मन्मथमत्तसिन्धुरवरक्रीडाविहारस्थली।
क्रीडाकल्पितकालकण्ठकपटस्वर्भानुचक्षुःश्रवः-
श्रेणीसंभृतदुष्प्रवेशशिविरक्रोडान्न निष्क्रामति॥ ३॥

महादेवस्य।

निःशेषा मणिपञ्जरावलिरसौ दात्यूहशून्या कृता
श्येनाः केलिवनेषु कोकिलकुलोच्छेदाय संचारिताः।
किं कुर्मः पुनरत्र रात्रिमखिलां कल्यक्वणत्कोकिला-

केलीपञ्जमहंकृतेः स्वयमियं यन्मृत्युमाकाङ्क्षति ॥ ४ ॥
शिल्हणस्य ।

प्रयातेऽस्तं भानौ श्रितशकुनिनीडेषु तरुषु
स्फुरत्सन्ध्यारागे शशिनि शनकैरुल्लसति च ।
प्रियप्रत्याख्यानद्विगुणविरहोत्कण्ठतद्दशा
तदारब्धं तन्व्या मरणमपि यत्रोत्सवपदम् ॥ ५ ॥ लड्डकस्य ।

## २७ विरहिणी-वचनम् ।

जलार्द्रां चार्द्रां वा मलयजरसैर्मा मम कृथा
वृथा सद्यः पद्मच्छदनशयनं मापि च विधाः ।
अतीवार्द्रेणायं प्रियसखि शिखी वाडवनिभः
परीतापं प्रेयश्चिरविरहजन्मा जनयति ॥ १ ॥ नरसिंहस्य ।

वृथा गाथाश्लोकैरलमलमलीकां मम रुजं
कदाचिद्धूर्तोऽसौ कविवचनमित्याकलयति ।
इदं पार्श्वे तस्य प्रहिणु सखि लग्नाञ्जनलव-
स्नवद्बाष्पोत्पीडग्रथितलिपि ताडङ्कयुगलम् ॥२॥ शिल्हणस्य ।

गच्छामि कुत्र विदधामि किमत्र कस्मिं-
स्तिष्ठामि कः खलु ममात्र भवेदुपायः ।
कर्त्तव्यवस्तुनि न मे सखि निश्चयोऽस्ति
त्वां चेतसा परमनन्यगतिः स्मरामि ॥३॥ कालिदासनन्दिनः ।

सखि मलयजं मुञ्च क्षारं क्षते किमिवार्प्यते
कुसुममशिवं कामस्यैतत्किलायुधमुच्यते ।
व्यजनपवनो मा भूच्छ्वासान्करोति ममाधिका-
नुपचितबले व्याधावस्मिन्मुधा भवति श्रमः ॥ ४ ॥
तस्यैव ।

विरमत विरमत सख्यो नलिनीदलतालवृन्तपवनेन ।
हृदयगतोऽयं वह्निर्धगिति कदाचिज्ज्वलत्येव ॥५॥ कस्यचित् ।

## २८ विरहिणीरुदितम्

वल्ली पादपमोचितेव सुतनुः प्रम्लायति प्रत्यहं
निःश्वासाकुटिलालकं करतलोत्सङ्गे मुखं सीदति ।
नासाग्रातिथयो मुहूर्त्तमरुणोच्छूनान्तयोर्नेत्रयो-
र्विश्राम्यन्ति न सिन्दुवारमुकुलस्थूलाः पयोबिन्दवः ॥ १ ॥
कोऽसौ धन्यः कथय सुभगे कस्य गङ्गासरय्वो-
स्तोयास्फालव्यतिकरखणत्कारि कङ्कालमास्ते ।

यं ध्यायन्त्याः सुमुखि नियतं कज्जलच्छेदभाञ्जि
व्यालुम्पन्ति स्तनकलसयोः पत्रमश्रूण्यजस्रम् ॥ २ ॥
कस्यचित् ।

मुक्तानङ्गः कुसुमविशिखान्पञ्च चूर्णीकृताग्रा-
न्मन्ये मुग्धां प्रहरति हठात्पत्रिणा वारुणेन ।
वारां पूरः कथमितरथा स्फारनेत्रप्रणाली-
वक्रोद्गाहस्त्रिवलिविपिने सारणीसाम्यमेति ॥ ३ ॥
राजशेखरस्य ।

पक्ष्मान्ते स्खलिताः कपोलफलके लोलं लुठन्तः क्षणं
धारालास्तरलोच्छलत्तनुकणाः पीनस्तनास्फालनात् ।
कस्माद्ब्रूहि तवाद्य कण्ठविगलन्मुक्तावलीविभ्रमं
बिभ्राणा निपतन्ति वाष्पपयसां प्रस्यन्दिनो बिन्दवः ॥ ४ ॥
तस्यैव ।

कपोलं पक्ष्मभ्यः कलयति कपोलात्स्तनतटं
स्तनान्नाभिं नाभेर्घनजघनमेत्य प्रतिमुहुः ।
न जानीमः किं नु क्व नु कृतमनेन व्यवसितं
यदस्याः प्रत्यङ्गं नयनजलबिन्दुर्विहरति ॥ ५ ॥ नरसिंहस्य ।

## २९ दूतीवचनम् ।

वक्त्रेन्दोर्न हरन्ति वाष्पपयसां धारा मनोज्ञां श्रियं
निःश्वासा न कदर्थयन्ति मधुरां बिम्बाधरस्य द्युतिम् ।
तन्व्यास्तद्विरहे विपक्कलवलीलावण्यसंवादिनी
छाया कापि कपोलयोरनुदिनं तस्याः परं शुष्यति ॥ १ ॥
धर्मकीर्तेः ।

लावण्येन पिधीयतेऽङ्गतनिमा संधार्यते जीवितं
त्वद्ध्यानैः सततं कुरङ्गकदृशः किं त्वेतदास्ते नवम् ।
निःश्वासैः कुचकुम्भपीठलुठनप्रत्युद्गमान्मांसलैः
श्यामीभूतकपोलमिन्दुरधुना यत्तन्मुखं स्पर्धते ॥ २ ॥
शृङ्गारस्य ।

त्वदर्थिनी चन्दनभस्मदिग्धललाटलेखाश्रुजलाभिषिक्ता ।
मृणालचीरं दधती स्तनाभ्यां स्मरोपदिष्टं चरति व्रतं सा॥३॥
कस्यचित् ।

श्रोत्रं त्वद्गुणजालपूरितमभूद्वाष्पाम्बुपूरे दृशौ
किंचास्या मुखमन्धकारितमभून्निःश्वासवातोर्मिभिः ।

चण्डालस्तव शोकवह्निरभितो धन्वी जिघांसुः स्मर-
स्तस्याः कण्ठगतागतानि दधति प्राणाः कुरङ्गोपमाः ॥ ४ ॥
दनोकस्य ।

कण्ठे जीवितमानने तव गुणाः पाणौ कपोलस्तनौ
संतापस्त्वयि मानसं नयनयोरच्छिन्नधारं पयः ।
सर्वं निष्करुण त्वदीयविरहे सालम्बनं किं पुन-
स्तस्याः सम्प्रति जीविते बत सखीवर्गो निरालम्बनः ॥ ५ ॥
जलचन्द्रस्य ।

## ३० प्रियसंबोधनम् ।

विलिम्पत्येतस्मिन्मलयजरसार्द्रेण महसा
दिशां चक्रं चन्द्रे सुकृतमय तस्या मृगदृशः ।
दृशोर्बाष्पः पाणौ वदनमसवः कण्ठकुहरे
हृदि त्वं ह्रीः पृष्ठे वचसि च गुणा एव भवतः ॥ १ ॥

मुखेन्दुः प्रभ्रश्यन्नयनजलबिन्दुः करतले
मृणालीहारोऽपि ज्वर इव परीतापजनकः ।
प्रियङ्गुश्यामाङ्ग्याः सुकृतमय वक्रे त्वयि मना-
गनाख्येयावस्थो रतिरमणबाणव्यतिकरः ॥ २ ॥ तस्यैव ।

चन्द्रं चन्दनकर्दमेन लिखितं सा मार्ष्टि दष्टाधरा
वन्द्य निन्दति यच्च मन्मथमसौ भङ्क्त्वाग्रहस्ताङ्गुलीः ।
कामः पुष्पशरः किलेति सुमनोवर्गं लुनीते च य-
त्तत्कां सा सुभग त्वया वरतनुर्वातूलतां लम्भिता ॥ ३ ॥
राजशेखरस्य ।

उन्मीलन्ति नखैर्लुनीहि वहति क्षौमाञ्चलेनावृणु
क्रीडाकाननमाविशन्ति वलयक्वाणैः समुत्त्रासय ।
इत्थं वञ्जुलदक्षिणानिलकुहूकण्ठीषु सांकेतिक-
व्याहाराः सुभग त्वदीयविरहे तस्याः सखीनां मिथः ॥ ४ ॥
अमरोः ।

दरपरिणतदूर्वादुर्बलामङ्गलेखां
ग्लपयति न यदस्याः श्वासजन्मा हुताशः ।
स खलु सुभग मन्ये लोचनद्वन्द्ववारा-
मविरतपटुधारावाहिनीनां प्रभावः ॥५॥ धोयीकस्य ।

## ३१ परुषाभिधानम् ।

तस्यास्तापमहं नृशंस कथयाम्येणीदृशस्ते कथं
पद्मिन्याः सरसं दलं विनिहितं यस्याः शमायोरसि ।

आदौ शुष्यति संकुचत्यनु ततश्चूर्णत्वमापद्यते
पश्चान्मुर्मुरतां दधाति दहति श्वासावधूतं सखी: ॥ १ ॥
कस्याचित् ।

नीरसं काष्ठमेवेदं सत्यं ते हृदयं यदि ।
तथापि दीयतां तस्यै गता सा दशमीं दशाम् ॥ २ ॥
कुञ्जराजस्य ।

कुशलं तस्या जीवति कुशलं पृष्टासि जीवतीत्युक्तम् ।
पुनरपि तदेव कथयसि मृतां नु कथयामि या श्वसिति ॥ ३ ॥
छित्तपस्य ।

तनुर्लीना तल्पे प्रियसहचरीहस्तकलना-
न्निजस्थानेङ्गानि श्वसितमपि तस्याः श्रमपदे ।
क सा कान्तिर्याता वत न शपथैस्तास्वयमपि
प्रतीमः स्त्रीहत्या तदपि तव चेतो नटयति ॥ ४ ॥
युवराजदिवाकरस्य ।

धिक् चण्डाल किमालपामि मधुपीझंकारझञ्झामरु-
न्माकन्दांकुरसंनिपातजनितस्तस्याः स कोपि ज्वरः ।
ताः संतापरुजः स चाङ्गजडिमा साहर्निशं जागरा
त्यय्याश्लेषरसेन जीवति पुनस्त्यक्तोन्यथा हस्तकः ॥ ५ ॥
कस्यचित् ।

## ३२ विरहिणीचेष्टा ।

त्वां चिन्तापरिकल्पितं सुभग सा संभाव्य रोमाञ्चिता
शून्यालिङ्गनसंचलद्भुजयुगेनात्मानमालिङ्गति ।
किं चान्यद्विरहव्यथाप्रणयिनीं संप्राप्य मूर्छां चिरा-
त्प्रत्युज्जीवति कर्णमूलपठितैस्त्वन्नाममन्त्राक्षरैः ॥ १ ॥
अच्छिन्नं नयनाम्बु बन्धुषु कृतं चिन्ता गुरुभ्योर्पिता
दत्तं दैन्यमशेषतः परिजने तापः सखीष्वाहितः ।
अद्य श्वः परिनिर्वृतिं व्रजति सा श्वासैः परं खिद्यते
विस्रब्धो भव विप्रयोगजनितं दुःखं विभक्तं तया ॥ २ ॥
कस्यचित् ।

पुनरुक्तावधिवासरमेतस्याः कितव पश्य गणयन्त्याः
इयमिव करजः क्षीणस्त्वमिव कठोराणि पर्वाणि ॥ ३ ॥
धरणीधरस्य ।

अत्रैव स्वयमेव चित्रफलके कम्पस्खलल्लेखया
संतापार्तिविनोदनाय कथमप्यालिख्य सख्या भवान् ।
बाष्पव्याकुलमीलितः सपुलकं चूतांकुरैरर्चितो
मूर्ध्ना च प्रणतः सखीषु मदनव्याजेन चापह्नुतः ॥ ४ ॥
वाक्कूटस्य ।

दूर्वाश्यामरुचोपि चन्दनरसैर्यत्ते लिखत्याकृतिं
सोढुं तापमनीश्वरा यदपि च ग्रीष्मागमं वाञ्छति ।
यत्पुष्णाति निरस्य विभ्रमशुकान्बाला चकोरीकुलं
मूढस्तत्र सखीजनः स्फुरति किं सुस्थस्य ते चेतसि ॥ ५ ॥

## ३३ संतापकथनम् ।

सा धैर्याम्बुमरुस्थली विसृमरज्वालः स तापानल-
स्ते मुक्तामणयः कठोरतरुणज्वालामुचः शर्कराः ।
कर्पूरस्य रजांसि वालुकमसावस्यास्तु जीवाध्वगः
क्वापि क्वाप्युपयाति मुह्यति मुहुः क्वापि क्वचिन्मूर्छति ॥ १ ॥
महादेवस्य ।

मृगशिशुदृशस्तस्यास्तापं कथं कथयामि ते
दहनपतिता दृष्टा मूर्तिर्मया न हि वैधवी ।
इति तु नियतं नारीरूपः स लोकदृशां प्रिय-
स्तव शठतया शिल्पोत्कर्षो विधेर्विघटिष्यते ॥ २ ॥ वाचस्पतेः ।

एतस्याः स्मरसंज्वरः करतलस्पर्शैः परीक्ष्योद्य न
स्निग्धेनापि जनेन दाहभयतः प्रस्थंपचः पाथसाम् ।
निर्बीजीकृतचन्दनौषधविधौ तस्मिंश्चटत्कारिणो
लाजस्फोटममी स्फुटन्ति मणयो विश्वेपि हारस्रजाम् ॥ ३ ॥
योगेश्वरस्य ।

स्नाता निष्पतयालुलोचनपयः पुण्यस्रवन्तीजलै-
रध्यास्ते नवचन्दनार्द्रनलिनीसंवर्तिकावेदिकाम् ।
प्रत्येकं स्मरजातवेदसि निजान्यङ्गानि हुत्वा क्षणा-
दिन्दोरभ्युदयेन दास्यति पुनः सा प्राणपूर्णाहुतिम् ॥ ४ ।
धर्मयोगेश्वरस्य ।

माल्यं मृणालवलयानि जलं जलार्द्रा
कर्पूरहारहरिचन्दनचर्चितानि ।
तस्या नवेन्दुकिरणाश्च न तापशान्त्यै
त्वत्सङ्गसाध्यविरहज्वरजर्जरायाः ॥ ५ ॥ पुरुषोत्तमदेवस्य ।

## ३४ तनुताख्यानम्।

दोलालोलाः श्वसनमरुतश्चक्षुषी निर्झराभे
तस्याः शुष्यत्तगरसुमनःपाण्डुरा गण्डभित्तिः।
तद्गात्राणां किमिव हि बहु ब्रूमहे दुर्बलत्वं
येषामग्रे प्रतिपदुदिता चन्द्रलेखाप्यतन्वी ॥ १ ॥ राजशेखरस्य।

आरब्धा मकरध्वजस्य धनुषेतस्यास्तनुर्वेधसा
त्वद्विश्लेषविशेषदुर्बलतया जाता न तावद्धनुः।
तत्संप्रत्यपि रे प्रसीद किमपि प्रेमामृतस्यन्दिनीं
दृष्टिं नाथ विधेहि सा रतिपतेः शिञ्जापि संजायताम् ॥ २ ॥
धोयिकस्य।

तस्यास्त्वदेकमनसः स्मरबाणवृष्टैः
कार्श्यं वपुः शठ बिभर्ति यथा यथैव।
स्तोकायिताश्रयतयेव तथा तथैव
कान्तिर्घनीभवति लोलविलोचनायाः ॥ ३ ॥ तस्यैव।

स्पृशन्त्याः क्षामत्वं मदनशरटङ्कव्यतिकरा-
त्कुरङ्गाक्ष्यास्तस्याः शृणु सुभग कौतूहलमिदम्।
अपूर्वेति त्रस्ता परिहरति तां केलिहरिणी
न विश्वस्याश्वासं दधति गृहलीलाशकुनयः ॥ ४ ॥ कस्यचित्।

अभवदभिनवप्ररोहभाजां छविपरिपाटिषु यः पुराङ्कुरानाम्।
अहह विरहवैकृते स तस्याः कृशिमनि संप्रति दूर्वया विवादः ॥५॥
तैलपाटीयगाङ्गोकस्य।

## ३५ उद्वेगकथनम्।

सौधादुद्विजते त्यजत्युपवनं द्वेष्टि प्रभामैन्दवीं
द्वारात्त्रस्यति चित्रकेलिसदसो वेषं विषं मन्यते।
आस्ते केवलमब्जिनीकिसलयप्रस्तारिशय्यातले
संकल्पोपनतत्वदाकृतिवशायत्तेन चित्तेन सा ॥ १ ॥
राजशेखरस्य।

सोद्वेगा मृगलाञ्छने मुखमपि स्वं नेक्षते दर्पणे
त्रस्ता कोकिलकूजितादपि गिरं नोन्मुद्रयत्यात्मनः।
इत्थं दुःसहदाहदायिनि धृतद्वेषापि पुष्पायुधे
मुग्धा सा सुभगे त्वयि प्रतिमुहुः प्रेमाधिकं पुष्यति ॥ २ ॥
शृङ्गारस्य।

विषं चन्द्रालोकः कुमुदवनवातो हुतवहः
क्षतक्षारो हारः स खलु पुटपाको मलयजः ।
अये किञ्चिद्वक्रे त्वयि सुभग सर्वे कथममी
समं जातास्तस्यामहह विपरीतप्रकृतयः ॥ ३ ॥

अचलनृसिंहस्य ।

न क्रीडागिरिकन्दरीषु रमते नोपैति वातायनं
दूरादुद्विजते गुरूंश्चिरस्यति लतागारे विहारस्पृहाम् ।
आस्ते सुन्दर सा सखीप्रियगिरामाश्वासनैः केवलं
प्रत्याशां दधती तया च हृदयं तेनापि च त्वां पुनः ॥ ४ ॥

धोयीकस्य ।

हारं पाशवदाच्छिनत्ति दहनप्रायां न रत्नावलीं
धत्ते कण्टकशङ्किनीव कलिकातल्पे न विश्राम्यति ।
स्वामिन्संप्रति सान्द्रचन्दनरसात्पङ्कादिवोद्वेगिनी
सा बाला विसवल्लरीवलयतो व्यालादिव त्रस्यति ॥ ५ ॥

उमापतिधरस्य ॥

## ३६ निशावस्थाकथनम् ।

अस्मिंश्चन्द्रमसि प्रसन्नमहसि व्याकोषकुन्दत्विषि
प्राचीनं खमुपेयुषि त्वयि मनाग्दूरं गते प्रेयसि ।
श्वासः कैरवकोरकीयति मुखं तस्याः सरोजीयति
क्षीरोदीयति मन्मथो दृगपि च द्राक् चन्द्रकान्तीयति ॥ १ ॥

कस्यचित् ।

अम्भोरुहं वदनमम्बकमिन्दुकान्तः
पाथोनिधिः कुसुमचापभृतो विकारः ।
प्रादुर्बभूव सुभग त्वयि दूरसंस्थे
चण्डालचन्द्रधवलासु निशासु तस्याः ॥ २ ॥ चण्डालचन्द्रस्य ।

तापोन्तः प्रसृतिंपचः प्रचयवान्बाष्पः प्रणालोचितः
श्वासा नर्तितदीपवर्तिलतिकाः पाण्डिम्नि मग्नं वपुः ।
किं चान्यत्कथयामि रात्रिमखिलां त्वद्वर्त्मवातायने
हस्तच्छत्रनिरुद्धचन्द्रमहसस्तस्याः स्थितिर्वर्तते ॥ ३ ॥

राजशेखरस्य ।

बाष्पैर्निष्पतयालुभिः कलुषिता गण्डस्थली चिन्तया
चेतः कातरितं तरङ्गितमुरः श्वासोर्मिभिः पीवरैः ।
इत्थं त्वद्विरहे तदीयविपदं देवी त्रियामैव वा
तल्पं वा परितापखिन्नमथवा जानाति पुष्पायुधः ॥ ४ ॥ शरणस्य ।

निष्पत्रं सरसीरुहां वनमिदं निश्चन्दना मेदिनी
निष्पङ्कानि पर्यास्यपल्लवपुटा वृक्षाः सखीभिः कृताः ।
नीयन्ते सुभग त्वया रहितया सोत्कण्ठकोकीकुला-
क्रन्दाकर्णनजागरूककुमुदामोदास्तया रात्रयः ॥ ५ ॥
कस्यचित् ।

३७ वासकसज्जा ।

तल्पं कल्पितमेव कल्पयति सा भूयस्तनुं मण्डितां
भूयो मण्डयति स्वयं रतिपतेरङ्कीकरोत्यर्चनाम् ।
गच्छन्त्यां निशि मन्यते क्षतिमिव द्वारं चिरं सेवते
लीलावेश्मनि सा करोति मदनक्लान्ता वराकी न किम् ॥ १ ॥
आचार्यगोपीकस्य ।

दृष्ट्वा दर्पणमण्डले निजमुखं भूषां मनोहारिणीं
दीपार्चिःकपिशं च मोहनगृहं त्रस्यत्कुरङ्गीदृशा ।
एवं नौ सुरतं भविष्यति चिरादद्येति सानन्दया
मन्दं कान्तदिदृक्षयातिललितं द्वारे दृगारोपिता ॥ २ ॥
रुद्रटस्य ।

अलसवलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः
क्षणमभिमुखैर्लज्जालोलैर्निमेषपराङ्मुखैः ।
हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः
कथय सुकृती कोऽयं मुग्धे त्वयाद्य विलोक्यते ॥ ३ ॥ अमरोः ।

अङ्गेष्वाभरणं तनोति बहुशः पत्रेऽपि संश्चारिणि
प्राप्तं त्वां परिशङ्कते वितनुते शय्यां चिरं ध्यायति ।
इत्याकल्पविकल्पतल्परचनासंकल्पलीलाशत-
व्यासक्तापि विना त्वया वरतनुर्नैषा निशां नेष्यति ॥ ४ ॥
जयदेवस्य ।

अरतिरियमुपैति मां न निद्रा गणयति तस्य गुणान्मनो न दोषान् ।
विरमति रजनी न संगमाशा व्रजति तनुस्तनुतां न चानुरागः ॥ ५ ॥
प्रवरसेनस्य ।

३८ स्वाधीनभर्तृका ।

लिखति कुचयोः पत्रं कण्ठे नियोजयति स्रजं
तिलकमलिके कुर्वन्नाराददुदस्यति कुन्तलान् ।
इति चटुशतैर्वारं वारं प्रियां परितः स्पृश-
न्विरहविधुरो नास्याः पार्श्वं विमुञ्चति वल्लभः ॥ रुद्रटस्य ।

स्वामिन्भंगुरयालकं सतिलकं भालं विलासिन्कुरु
प्राणेश त्रुटितं पयोधरतटे हारं पुनर्योजय ।
इत्युक्त्वा सुरतावसानसमये व्याघूर्णमानेक्षणा
स्पृष्टा तेन तथैव जातपुलका प्राप्ता पुनर्मोहनम् ॥ २ ॥ तस्यैव ।

यावकं तरुणपङ्कजप्रभे योषितश्चरणपङ्कजद्वये ।
तुल्यरागमपि स न्यपातयच्चाटुमात्रकरणप्रयोजनः ॥ ३ ॥

कस्यचित् ।

एतांस्ते भ्रमरैर्घनीलकुटिलान्बध्नामि किं कुन्तला-
न्किं न्यस्यामि मधूकपाण्डुमधुरे गण्डेत्र पत्रावलीम् ।
किं चास्मिन्व्यपनीय बन्धनमिदं पङ्केरुहाणां दल-
त्कोषश्रीमुषि सर्वं चित्तहरिणस्यारोपयामि स्तने ॥ ४ ॥

सूर्यधरस्य ।

अगणितगुरुर्याच्ञालोलः पदान्तसदातिथिः
समयमविदन्मुग्धः कालासहो रतिलम्पटः ।
कृतककुपितं हस्ताघातं त्रपारुदितं हठा-
दपरिगणयन्लज्जायां मां निमज्जयति प्रियः ॥ ५ ॥

आचार्यगोपीकस्य ।

## ३६ विप्रलब्धा ।

दृष्टोयं विषवत्पुरा परिजनो दृष्टायतिर्वारय-
न्पौर्वापर्यविदां त्वया न हि कृताः कर्णे सखीनां गिरः ।
हस्ते चन्द्रमिवावतार्य सरले धूर्तेन धिग्वञ्चिता
तत्किं रोदिषि किं विषीदसि किमुन्निद्रासि किं दूयसे ॥ १ ॥

कस्यचित् ।

ज्ञातं ज्ञातिजनैः प्रघुष्टमयशो दूरं गता धीरता
त्यक्ता ह्रीः प्रतिपादितोप्यविनयः साध्वीपदं प्रोज्झितम् ।
लुप्ता चोभयलोकसाधुपदवी दत्तः कलङ्कः कुले
भूयो दूति किमन्यदस्ति यदसावद्यापि नागच्छति ॥ २ ॥

कस्यचित् ।

सखि स विजितो लीलाद्यूते कयापि परस्त्रिया
पणितमभवत्ताभ्यां तस्मिन्निशालालितं ध्रुवम् ।
कथमितरथा शेफालीषु स्खलत्कुसुमास्वपि
स्थितवति नभोमध्येपीन्दौ प्रियेण विलम्ब्यते ॥ ३ ॥ रुद्रटस्य ।

सोत्कण्ठं रुदितं सकम्पमसकृद्ध्यातं सबाष्पं चिरं
चक्षुर्दिक्षु निवेशितं सकरुणं सख्या समं जल्पितम् ।
नागच्छत्युचितेऽपि वासकविधौ कान्ते समुद्विग्नया
तत्तत्किंचिदनुष्ठितं मृगदृशा नो यत्र वाचां गतिः ॥ ४ ॥ तस्यैव ।
यत्संकेतगृहं प्रियेण गदितं संप्रेष्य दूतीं स्वयं
तच्छून्यं सुचिरं निषेव्य सुदृशा पश्चाच्च भग्नाशया ।
स्थानोपासनसूचनाय विगलत्सान्द्राञ्जनैरश्रुभि-
र्भूमावक्षरमालिकेव लिखिता दीर्घं रुदत्या शनैः ॥५॥ तस्यैव ।

४० कलहान्तरिता ।

कर्णे यन्न कृतं सखीजनवचो यन्नादृता बान्धवा
यत्पादे निपतन्नपि प्रियतमः कर्णोत्पलेनाहतः ।
तेनेन्दुर्दहनायते मलयजालेपः स्फुलिङ्गायते
रात्रिः कल्पशतायते बिसलताहारोऽपि भारायते ॥ १ ॥ अमरोः ।
मया तावद्गोत्रस्खलितहतकोपान्तरितया
न रुद्धो निर्गच्छन्नयमतिविलक्षः प्रियतमः ।
अयं त्वाकूतज्ञः परिणतिपरामर्शकुशलः
सखीलोकोऽप्यासील्लिखित इव चित्रेण किमिदम् ॥२॥ बिम्बोकस्य ।
पदोपान्ते कान्ते लुठति तमनादृत्य भवनाद्
द्रुतं निष्क्रामन्त्या किमपि न मयालोचितमभूत् ।
अये श्रोणीभार स्तनभर युवां निर्भरगुरू
भवद्भ्यामप्यत्र क्षणमपि विलम्बो न विहितः ॥ ३ ॥ गङ्गाधरस्य ।
यत्पादप्रणतः प्रियः परुषया वाचा स निर्वाहितो
यत्सख्या न कृतं वचो जडतया यन्मन्युरेको धृतः ।
पापस्यास्य फलं तदेतदधुना यच्चन्दनेन्दुद्युति-
प्रालेयाम्बुसमीरपङ्कजबिसैर्गात्रं मुहुर्दह्यते ॥ ४ ॥ रुद्रटस्य ।
दहति विरहेष्वङ्गानीर्ष्यां करोति समागमे
हरति हृदयं दृष्टः स्पृष्टः करोत्यवशां तनुम् ।
क्षणमपि सुखं यस्मिन्प्राप्ते गते च न लभ्यते
किमपरमतश्चित्रं यन्मे तथापि स वल्लभः ॥ ५ ॥ अमरोः ।

४१ कलहान्तरितावाक्यम् ।

सखि स सुभगो मन्दस्नेहो मयीति न मे व्यथा
विधिविरचितं यस्मात्सर्वो जनः सुखमश्नुते ।

मम तु मनसः संतापोयं जने विमुखेपि य-
त्कथमपि हतव्रीडं चेतो न याति विरागिताम् ॥ १ ॥ अमरोः ।

निश्वासा वदनं दहन्ति हृदयं निर्मूलमुन्मूल्यते
निद्रा नैति न दृश्यते प्रियमुखं नक्तंदिवं रुद्यते ।
अङ्गं शोषमुपैति पादपतितः प्रेयान्न संभाव्यते
सख्यः कं गुणमाकलय्य दयिते मानं वयं कारिताः ॥ २ ॥

कस्यचित् ।

ज्योतिर्भ्यस्तादिदं तमः समुदितं जातोयमद्भ्यः शिखी
पीयूषादिदमुत्थितं विषमयं छायातजन्मातपः ।
कोनामास्य विधिः प्रशान्तिषु भवेद्गाढं द्रढीयानयं
ग्रन्थिर्यत्प्रियतोपि विप्रियमिदं सख्यः कृतं सान्त्वनैः ॥ ३ ॥

कस्यचित् ।

तन्नाद्यालिपिलाञ्छितादपि मुखादिन्दुः स किं दुःसहः
संतापाय पिकध्वनिः किमु मृषावाचां प्रपञ्चादपि
किं तस्य प्रणयावधीरणपराधीनादपि प्रेक्षणा—
दुन्मीलन्ति सखि प्रसूनधनुषो मर्मच्छिदः सायकाः ॥ ४ ॥

जलचन्द्रस्य ।

कथाभिर्देशानां कथमपि च कालेन बहुना
समायाते कान्ते सखि रजनिरर्धं गतवती ।
ततो यावल्लीलाकलहकुपितास्मि प्रियतमे
सपत्नीव प्राची दिगियमभवत्तावदरुणा ॥ ५ ॥ कस्यचित् ।

## ४२ कलहान्तरितासखीवचनम् ।

अनालोच्य प्रेम्णः परिणतिमनादृत्य सुहृद-
स्त्वया कान्ते मानः किमिति सरले प्रेयसि कृतः ।
समाकृष्टा ह्येते विरहदहनोड्डामरशिखाः
स्वहस्तेनाङ्गारास्तदलमधुनारण्यरुदितैः ॥ १ ॥

मया प्रागेवोक्तं कलहवति मा त्याजय गुणं
भयेस्तु प्रेयांस्ते स्वकरवशगं मुञ्चसि मुधा ।
अवाप्तो वैलक्ष्यं शर इव पुनर्नैति तदयं
स्वयं गत्वानेयः प्रियसखि कराकर्षविधिना ॥ २ ॥

आचार्यगोपीकस्य ।

श्रवसि न कृतास्ते तावन्तः सखीवचनक्रमा-
श्चरणपतितोङ्गुष्ठाग्रेणाप्ययं न हतो जनः ।

कठिनहृदये मिथ्या मौनव्रतव्यसनादयं
परिजनपरित्यागोपायो न मानपरिग्रहः ॥ ३ ॥ कस्यचित्।
जघनमुन्नतमाकुलमेखलं मुखमपाङ्गविसर्पिततारकम्।
इदमपास्य गतो यदि निर्घृणो ननु वरोरु स एव हि वञ्चितः ॥४॥
कस्यचित्।

सखि न गणिता मानोन्मेषात्प्रियप्रणयक्षतिः
परमिह सखीवर्गस्येदं वचो न पुरस्कृतम्।
उदयशिखरारूढेनायं कलानिधिना बलात्
किमिति शिथिलो मानग्रन्थिः करैर्न करिष्यते ॥ ५ ॥
कस्यचित्।

## ४३ गोत्रस्खलितम्।

पुरस्तस्या गोत्रस्खलनचकितोऽहं नतमुखः
प्रवृत्तो वैलक्ष्यात्किमपि लिखितुं दैवहतकः।
स्फुटो रेखान्यासः कथमपि स तादृक् परिणतो
गता येन व्यक्तिं पुनरवयवैः सैव तरुणी ॥ १ ॥ अमरोः।

कृथा मैवं चेतः कथमपि मनागस्खलदितः
प्रमादाद्वाणीयं किमिह करवाणि प्रणयिनि।
वृथैवायं ग्रन्थिर्भणभणितमञ्जीररणितं
ततस्त्वत्पादाब्जं यदिदमवतंसो भवतु मे ॥ २ ॥ नरसिंहस्य।

अर्द्धोक्ते भयमागतोसि किमिदं कण्ठश्च किं गद्गद-
श्चाटोरस्य न च क्षणोयमनुपक्षितयमास्तां कथा।
ब्रूहि प्रस्तुतवस्तु संप्रति महत्कर्णे सखीनां सुखं
तृप्तिनिर्भरमेभिरक्षरपदैः प्रागेव मे संभृता ॥ ३ ॥ अभिनन्दस्य।

कथमपि कृतप्रत्यासत्तौ प्रिये स्खलितोत्तरे
विरहकृशया कृत्वा व्याजं प्रकल्पितमश्रुतम्।
असहनसखीश्रोत्रप्राप्तिप्रमादससंभ्रमे
विचलितदृशा शून्ये गेहे समुच्छ्वसितं ततः ॥ ४ ॥ कस्यचित्।

दूरादेत्य दृशा निवार्य च सखीरुत्क्षिप्तदोःकङ्कण-
श्रेणिः सप्रणया पिधाय नयनद्वन्द्वं तवावस्थिता।
ज्ञातासीति विपक्षनाम गदता संभाविता सा त्वया
जीवत्येव यदि त्वरां त्यज ननु त्वामेव याचिष्ते ॥ ५ ॥
आचार्यगोपीकस्य।

## ४४ मानिनी ।

बाले नाथ विमुञ्च मानिनि रुषं रोषान्मया किं कृतं
खेदोऽस्मासु न मेऽपराध्यति भवान्सर्वेऽपराधा मयि ।
तत्किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते
नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते ॥ १ ॥
अमरोः ।

एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद्दूरत-
स्ताम्बूलानयनच्छलेन रभसाश्लेषोऽपि संविघ्नितः ।
आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्या तया
कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः ॥ २ ॥ तस्यैव ।
आशंक्य प्रणतिं पटान्तपिहितौ पादौ करोत्यादरा-
द्व्याजेनागतमावृणोति हसितं स्पष्टं समुद्वीक्षते ।
मय्यालापवति प्रकोपपिशुनं सख्या सहाभाषते
तन्व्यास्तिष्ठतु निर्भरप्रणयिता मानोऽपि रम्योदयः ॥ ३ ॥ तस्यैव ।
धूमायते मनसि मूर्छति चेष्टितेषु
संदीप्यते वपुषि चेतसि जाज्वलीति ।
वक्त्रे परिस्फुरति वाचि विजृम्भतेऽस्याः
कान्तावमानजनितो बहुमानवह्निः ॥ ४ ॥ कस्यचित् ।
बाष्पासारः कथयति भृशं गण्डयोः पाण्डिमानं
श्वासो भूम्ना स्तनकलसयोः पीनतामातनोति ।
चित्तौत्सुक्यं किमपि कुरुते क्षाममङ्गं तदस्या-
स्तारुण्यस्य प्रसरमधिकं मन्युराविष्करोति ॥ ५ ॥ कस्यचित् ।

## ४५ उदात्तमानिनी ।

न मन्दो वक्त्रेन्दुः श्रयति न ललाटं कुटिलतां
न नेत्राब्जं रज्यत्यनुषजति न भ्रूरपि भिदाम् ।
इदं तु प्रेयस्याः प्रथयति रुषोऽन्तर्विलसितं
शतेऽपि प्रश्नानां यदभिदुरमुद्रोऽधरपुटः ॥ १ ॥ वैद्यधनस्य ।
ईर्ष्याप्रस्फुटिताधरोष्ठरुचिरं वक्त्रं न मे दर्शितं
साधिक्षेपपदा मनागपि गिरो न श्राविता मुग्धया ।
मद्दोषैः सरसैः प्रतापितमनोवृत्त्यापि कोपोनया
काञ्च्या गाढतरावबद्धवसनग्रन्थ्या समावेशितः ॥ २ ॥
काश्मीरनारायणस्य ।

भ्रूभेदो न कृतः कृता मुखशशिच्छायापि नान्यादृशी
कालुष्येण न लम्भिताः कलगिरः कोपस्त्वतो लक्ष्यते।
यत्प्रागल्भ्यमपास्य सम्प्रति नवीभूतं पुनर्लज्जया
यश्चायं विनयादरः प्रणयितां मुक्त्वा महान्वर्त्तते ॥३॥ कस्यचित्।

आमृद्यन्ते श्वसितमरुतो यत्कुचोत्सेधकम्पै-
रन्तर्ध्यानात्त्रुटति च दृशोर्यद्गुहिर्लक्ष्यलाभः।
पक्ष्मोत्क्षेपव्यतिकरहतो यश्च बाष्पस्तदेते
भावाश्चण्डि त्रुटितहृदयं मन्युमावेदयन्ति ॥ ४ ॥ कस्यचित्।

यद्यपि श्रियमाधत्ते भूषणानादरस्तव।
तथाप्यन्तर्गतं मन्युमयं कथयतीव मे ॥ ५ ॥ कस्यचित्।

## ४६ अनुरक्तमानिनी।

वलतु तरला धृष्टा दृष्टिः खला सखि मेखला
स्खलतु कुचयोरुत्कम्पान्मे विदीर्यतु कञ्चुकम्।
तदपि न मया सम्भाव्योऽसौ पुनर्दयितः शठः
स्फुटति हृदयं मौनेनान्तर्न मे यदि तत्क्षणात् ॥ १ ॥ अमरोः।

भ्रूभेदे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते
रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते।
कार्कश्यं गमितेऽपि चेतसि तनूरोमाञ्चमालम्बते
दृष्टे निर्वहणं भविष्यति कथं मानस्य तस्मिञ्जने ॥ २ ॥ तस्यैव।

भ्रूभेदो रचितश्चिरं नयनयोरभ्यस्तमामीलनं
रोद्धुं शिक्षितमादरेण हसितं मौनेऽभियोगः कृतः।
धैर्यं कर्तुमपि स्थिरीकृतमिदं चेतः कथञ्चिन्मया
बद्धो मानपरिग्रहे परिकरः सिद्धिस्तु दैवे स्थिता ॥ ३ ॥
धर्म्मकीर्तेः।

तद्वक्त्राभिमुखं मुखं विनमितं दृष्टिः कृता चान्यत-
स्तस्यालापकुतूहलाकुलतरे श्रोत्रे निरुद्धे मया।
हस्ताभ्यामपि वारितः सपुलकः स्वेदोद्गमो गण्डयोः
सख्यः किं करवाणि यान्ति सहसा यत्कञ्चुके सन्धयः ॥ ४ ॥
अमरोः।

स्फुटतु हृदयं कामः कामं करोतु तनुं तनुं
न सखि चटुलप्रेम्णा कार्यं पुनर्दयितेन मे।
इति सरभसं मानाटोपादुदीर्य वचस्तया
रमणपदवी सारङ्गाक्ष्या सशङ्कितमीक्षिता ॥ ५ ॥ कस्यचित्।

## ४७ नायके मानिनीवचनम् ।

किं पादान्ते पतसि विरम स्वामिनो हि स्वतन्त्राः
कंचित्कालं क्वचिदसि रतस्तेन कस्तेऽपराधः ।
आगस्कारिण्यहमिह मया जीवितं त्वद्वियोगे
भर्तृप्राणाः स्त्रिय इति ननु त्वं मयैवानुनेयः ॥ १ ॥ भावदेव्याः ।

तथाऽभूदस्माकं प्रथममविभिन्ना तनुरियं
ततो नु त्वं प्रेयानहमपि हताशा प्रियतमा ।
इदानीं नाथस्त्वं वयमपि कलत्रं किमपरं
मयाप्तं प्राणानां कुलिशकठिनानां फलमिदम् ॥ २ ॥ अमरोः ।

भवतु विदितं भव्यालापैरलं प्रिय गम्यतां
तनुरपि न ते दोषोस्माकं विधिस्तु पराङ्मुखः ।
तव यदि तथाभूतं प्रेम प्रपन्नमिमां दशां
प्रकृतिचपले का नः पीडा गते हतजीविते ॥ ३ ॥ तस्यैव ।

कोपो यत्र भ्रुकुटिरचना निग्रहो यत्र मौनं
यत्रान्योन्यस्मितमनुनयो यत्र दृष्टिः प्रसादः ।
तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं
त्वं पादान्ते लुठसि न च मे मन्युमोक्षः खलायाः ॥ ४ ॥ तस्यैव ।

यदा त्वं चन्द्रोभूरविकलकलापेशलवपु-
स्तदार्द्रा जाताहं शशधरमणीनां प्रकृतिभिः ।
इदानीमर्कस्त्वं खररुचिसमुत्सारितरसः
किरन्ती कोपाग्नीनहमपि रविग्रावघटिता ॥ ५ ॥ अचलस्य ।

## ४८ मानिन्यां सखीप्रबोधः ।

कियन्मात्रं गोत्रस्खलनमपराद्धं चरणयो-
श्चिरं लोठत्येष ग्रहवति न मानाद्विरमसि ।
रुषं मुञ्चामुञ्च प्रियमनुगृहाणायतिहितं
शृणु त्वं यद्ब्रूमः प्रियसखि न माने कुरु मतिम् ॥ १ । मनोकस्य ।

असद्वृत्तो नायं न च सखि गुणैरेष रहितः
प्रियो मुक्ताहारस्तव चरणमूले निपातितः ।
गृहाणैनं मुग्धे व्रजतु तव कण्ठप्रणयिता-
मुपायो नास्त्यन्यो हृदयपरितापापनयने ॥ २ ॥ कस्यचित् ।

लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो
निराहाराः सख्यः सततरुदितोच्छूननयनाः ।

परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-
स्तवावस्था चेयं विसृज कठिने मानमधुना ॥ ३ ॥ अमरोः ।
यदेतत्ते मौनं स्मितमुदयते यन्न वदने
यदव्यक्ता दृष्टिर्यदभिमुखवामः स्थितिरसः ।
उपास्यानामीदृग्विमतिषु हतप्रश्रयतया
हृदा दूरं याति प्रियसखि नवीनः परिजनः ॥४॥ उमापतिधरस्य ।
पाणौ शोणतले तनूदरि दरक्षामा कपोलस्थली
विन्यस्ताञ्जनदिग्धलोचनजलैः किं म्लानिमानीयते ।
मुग्धे चुम्बतु नाम चञ्चलतया भृङ्गः क्वचित्कन्दली-
मुन्मीलन्नवमालतीपरिमलः किं तेन विस्मार्यते ॥ ५ ॥ पाणिनेः ।

## ४६ अनुनयः ।

रम्भोरु क्षिप लोचनार्धमभितो बाणान्वृथा मन्मथः
सन्धत्तां धनुरुज्झतु क्षणमितो भ्रूवल्लिमुल्लासय ।
किं चान्तर्निहितानुरागमधुरामव्यक्तवर्णक्रमां
मुग्धे वाचमुदीरयास्तु जगतो वीणासु भेरीभ्रमः ॥ १ ॥
भेरीभ्रमकस्य ।

किमिति कबरी यादृक् तादृग्दृशौ किमनञ्जने
मृगमदमसीपत्त्रन्यासः स किं न कपोलयोः ।
अयमसमयं किं च क्लाम्यत्यसंस्मरणेन ते
शशिमुखि सखीहस्तन्यस्तो विलासपरिच्छदः ॥ २॥ अमरोः ।
प्रिये मौनं मुञ्च श्रुतिरमृतधारां पिबतु मे
दृशावुन्मील्येतां भवतु जगदिन्दीवरमयम् ।
प्रसीद प्रेमापि प्रशमयतु निःशेषमधृती-
रभूमिः कोपानां ननु निरपराधः परिजनः ॥ ३ ॥ डिम्बोकस्य ।
यदि विनिहिता शून्या दृष्टिः किमु स्थिरकौतुका
यदि विरचितो मौने यत्नः किमु स्फुरितोऽधरः ।
यदि नियमितं ध्याने चक्षुः कथं पुलकोद्गमः
कृतमभिनयैर्दृष्टो मानः प्रसीद विमुच्यताम् ॥ ४ ॥ अमरोः ।
कपोले पत्त्राली करतलनिरोधेन मृदिता
निपीतो निःश्वासैरयममृतहृद्योऽधररसः ।
मुहुः कण्ठे लग्नस्तिरयति च बाष्पः स्तनतटं
प्रियो मन्युर्जातस्तव निरनुरोधो न तु वयम् ॥ ५ ॥ कस्यचित् ।

## ५० मानभङ्गः ।

दृष्टे लोचनवन्मनाङ्मुकुलितं पार्श्वस्थिते वक्त्रव-
न्न्यग्भूतं बहिरासितं पुलकवत्स्पर्शे समातन्वति ।
नीवीबन्धवदागतं शिथिलतां संभाषमाणे ततो
मानेनापसृतं ह्रियेव सुदृशः पादस्पृशि प्रेयसि ॥ १ ॥ कस्यचित् ।

चेतस्यंकुरितं विसारिणि दृशोर्द्वन्द्वे द्विपत्रायितं
प्रायः पल्लवितं वचस्युपचितं प्रौढं कपोलस्थले ।
तत्तत्कोपविचेष्टिते कुसुमितं पादानते तु प्रिये
मानिन्यां फलितं नु मानतरुणा पर्यन्तवन्ध्यायितम् ॥ २ ॥
राजशेखरस्य ।

एकस्मिन्शयने पराङ्मुखतया वीतोत्तरं ताम्यतो-
रन्योन्यस्य हृदि स्थितेप्यनुनये संरक्षतोर्गौरवम् ।
दम्पत्योः शनकैरपाङ्गवलनामिश्रीभवच्चक्षुषो-
र्भग्नो मानकलिः सहासरभसव्यासक्तकण्ठग्रहः ॥ ३ ॥ अमरोः ।

दूरादुत्सुकमागते विकसितं संभाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने कोपाञ्चितभ्रूलतम् ।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥ ४ ॥ तस्यैव ।

सुतनु जहिहि कोपं पश्य पादानतं मां
न खलु तव कदाचित्कोप एवंविधोभूत् ।
इति निगदति नाथे तिर्यगामीलिताक्ष्या
नयनजलमनल्पं मुक्तमुक्तं न किं चित् ॥ ५ ॥ तस्यैव ।

## ५१ प्रवसद्भर्तृका ।

दृष्टः कातरनेत्रयातिसुचिरं बद्ध्वाञ्जलिं याचितः
पश्चादंशुकपल्लवे च विधृतो निर्व्याजमालिङ्गितः ।
इत्याक्षिप्य यदा समस्तमघृणो गन्तुं प्रवृत्तस्तदा
पूर्वं प्राणपरिग्रहो दयितया मुक्तस्ततो वल्लभः ॥ १ ॥ कस्यचित् ।

संरुद्धाः कथमप्यमङ्गलभयात्पक्ष्मान्तरव्यापिनो-
ऽप्युत्तानीकृतलोचनं निपुणया बाष्पाम्भसां बिन्दवः ।
न्यस्यन्त्याः सहकारपल्लवमथ व्यानम्य पत्युः पुरो
धारावाहिभिरेव लोचनजलैर्धाराघटः पूरितः ॥ २ ॥ धोयीकस्य ।

मुग्धे प्रेषय यामि यान्ति पथिकाः कालावधिः कथ्यता-
मुद्विग्ना किमकाण्ड एव भवती तूष्णीं किमेवं स्थिता ।

पूर्वोक्त्योपरतां प्रियेण दयितामाश्लिष्य तत्तत्कृतं
दत्तो येन समस्तपान्थनिवहप्राणान्तिको डिण्डिमः ॥३॥ कस्यचित् ।
आपृष्टासि विनिर्गतोऽध्वगजनस्तन्वङ्गि गच्छाम्यहं
स्वल्पैरेव दिनैः समागम इति ज्ञात्वा शुचं मा कृथाः ।
इत्याकर्ण्य वचः प्रियस्य सहसा तन्मुग्धया चेष्टितं
येनाकाण्डसमाप्ततीव्रविरहक्लेशः कृतो वल्लभः ॥ ४ ॥ कस्यचित् ।
आतर्वाष्प मुहुर्विमुञ्च नयनं यावत्तिरोधीयते
नायं निष्करुणः पुरा निरवधिर्भावी तवैवोदयः ।
इत्याकर्ण्य वियोगमुग्धमनसः स्वप्नोपनीतं वचः
संजाता दयितस्य योजनशतं शय्योपकण्ठस्थली ॥ ५ ॥
जलचन्द्रस्य ।

## ५२ यात्राक्षेपः ।

कान्ते कत्यपि वासराणि गमय त्वं मीलयित्वा दृशौ
स्वस्ति स्वस्ति निमीलयामि नयने यावन्न शून्या दिशः ।
आयाता वयमागमिष्यथ सुहृद्वर्गस्य भाग्योदयैः
संदेशो वद कस्तवाभिलषितस्तीर्थेषु तोयाञ्जलिः ॥ १ ॥ अमरोः ।
गन्तुं वाञ्छसि गच्छ पिच्छिलममी यावन्न कुर्वन्ति ते
पन्थानं मृदुमर्दलध्वनिमुचो धाराभिरम्भोधराः ।
एतस्यास्तव तानि तानि रहसि प्रेमाक्षराणि ध्रुवं
ध्यायन्त्यास्तु विपद्विनोदनसखी मूर्छैव संपत्स्यते ॥ २ ॥
कस्यचित् ।
यास्यामीति गिरः श्रुता अवधिरप्यालम्बितश्चेतसा
गेहे यत्नवती भविष्यसि सदेत्येतत्समाकर्णितम् ।
मुग्धे मा शुच इत्युदीरितवतः पत्युर्निरीक्ष्याननं
निश्वस्य स्तनपायिनि स्वतनये दृष्टिश्चिरं पातिता ॥ ३ ॥
भदन्तधीरनागस्य ।
आयास्यस्यवधावपर्यवसिते गत्वेति संभाव्यते
संप्राप्ते त्वयि यानि तान्यपि सुखान्यस्याः परोक्षाणि न ।
किं त्वज्ञातवियोगवेदनमिदं सद्यस्त्वयि प्रस्थिते
चेतः किं नु करिष्यतीत्यविदितं सम्यङ्न निश्चीयते ॥ ४ ॥
कस्यचित् ।
लोलैर्लोचनवारिभिः सशपथैः पादप्रणामैः परै-
रन्यास्ता विनिवारयन्ति कृपणाः प्राणेश्वरं प्रस्थितम् ।

पुण्याहं व्रज मङ्गलं सुदिवसं प्रातः प्रयातस्य ते
यत्स्नेहोचितमीहितं प्रिय मया तन्निर्गतः श्रोष्यसि ॥ ५ ॥

कस्यचित् ।

## ५३ प्रेषितभर्तृका ।

मध्येवेश्म समुद्गता तदनु च द्वारान्तरालं गता
निर्याताथ कथंचिदङ्गणभुवं प्रेयांस्तु नालोकितः ।
हंहो वायस राजहंस शुक हे हे सारिके कथ्यतां
का वार्त्तेति मृगीदृशो विजयते वाष्पाम्बुगर्भं वचः ॥ १ ॥

महोदधेः ।

अस्तव्यस्तसमीरकम्पिततया दृष्टेस्तिरस्कारिणीं
हस्तेनालकवल्लरीमकुटिलामानीय कर्णान्तिकम् ।
उद्वीक्ष्य प्रियमार्गमध्वगवधूरस्तं गते भास्वति
च्छिन्नाशा स्वनिवेशमेति शनकैः स्वप्नेक्षणाशंसिनी ॥ २ ॥

कस्यचित् ।

अभ्यासस्थितचूतषण्डगहनस्थानादितो गेहिनि
ग्रामं कंचिदवृक्षकं विरहिणी तूर्णं वधूर्नीयताम् ।
अत्रायान्त्यचिरेण कोकिलकुलव्याहारझंकारिणः
पान्थस्त्रीजनजीवितैकहरणप्रौढाः पुरो वासराः ॥ ३ ॥ कस्यचित् ।

सौख्ये गते प्रवसता दयितेन सार्द्धं
नेत्रद्वये दयितमार्गगमान्निवृत्ते ।
व्रीडावती बत कृता हतजीवितेन
निर्याय यन्न पदमात्रमपि प्रयातम् ॥ ४ ॥ कस्यचित् ।

वत्से माधवि मुग्धिकासि बलवद्वन्यौकसो देवताः
पान्तु त्वामयमस्तमञ्चति रविर्यातोवधिस्ते पितुः ।
शान्तं पापममङ्गलं परमतः शान्त्या न कल्याणि मे
कल्यन्नन्यमधुव्रताय तु मधून्युद्दिश्य मे दास्यसि ॥ ५ ॥

कस्यचित् ।

## ५४ प्रोषितभर्तृकावचनम् ।

प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुनः ।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवितप्रियसुहृत्सार्थः किमु त्यज्यते ॥ १ ॥

आयाता मधुयामिनी विजयते कान्तप्रयाणोत्सवः
प्राणा यान्तु यियासवो यदि पुनर्जन्मग्रहोऽभ्यर्थये।
व्याधाः कोकिलबन्धने विधुपरिध्वंसे च राहोर्गणाः
कन्दर्पे हरनेत्रपावककणाः प्राणेश्वरे मन्मथाः ॥ २ ॥

इन्द्रशिवस्य।

यात्रामङ्गलसंविधानरचनाव्यग्रे सखीनां गणे
वाष्पाम्भःपिहितेक्षणे गुरुजने तद्वत्सुहृन्मण्डले।
प्राणेशस्य मदीक्षणार्पितदृशः कृच्छ्रादतिक्रामतः
किं व्रीडाहतया मया भुजलतापाशो न कण्ठेऽर्पितः ॥ ३ ॥

कस्यचित्।

किं चूतैर्न विजृम्भितं स्तबकितं किं तैर्न कङ्केल्लिभिः
सिन्दूरैरिव मुद्रितास्तत इतो जाता न किं किंशुकाः।
विस्मृत्यापि न कोकिलैः किमु रुतं किं दाक्षिणात्यानिलै-
र्यातं तत्र न निर्वृतैकहृदयो यत्रास्ति मे वल्लभः ॥ ४ ॥ कस्यचित्।

मया बद्धा वेणी निवसितमशुक्लं च वसनं
श्रुताः शोचन्तीनां परिजनसखीनां किल गिरः।
निवृत्तास्ते दृष्टा गतमनु गता येऽस्य सुहृद-
स्तथाप्येते प्राणा दयितमनु याता न कृपणाः ॥ ५ ॥ कस्यचित्।

## ५५ सखीं प्रति प्रोषितभर्तृकावचनम्।

अवधिदिवसः सोऽयं प्राप्तस्तनोर्विरहस्य वा
रविरयमुपैत्यस्तं सख्यो ममेव मनोरथः।
तदलमफलैराशाबन्धैः प्रसीद नमोऽस्तु ते
हृदय सहसा पाकोत्पीडां विडम्बय दाडिमीम् ॥ १ ॥ अभिमन्योः।

गर्जत्येकः परभृतयुवा पञ्चमध्वानगर्भं
वाति स्वैरं मलयपवनो दूरतो जीवितेशः।
एह्यालिङ्ग प्रियसखि पुनः कावयोर्दर्शनं स्या-
त्प्रत्यासन्नं मरणमसवः कण्ठदेशे लुठन्ति ॥ २ ॥ कस्यचित्।

अवधिदिवसः सोऽयं नात्रागतः किमियत्क्षणं
वितर नयने पश्यैतन्मे पुरः सखि साहसम्।
इयमियमहं रूढज्वालाकरालितरोदसीं
मलयजरसाभ्यक्तैरङ्गैः पताम्यभि कौमुदीम् ॥ ३ ॥ गोसोकस्य।

दृष्टं केतकधूलिधूसरमिदं व्योम क्रमाद्वीक्षिताः
कच्छान्ताश्च शिलीन्ध्रकन्दलभृतः सोढाः कदम्बानिलाः।

सख्यः संवृणुताश्रु मुञ्चत भयं कस्मान्मुधैवाकुला
एतानप्यधुनापि वज्रघटिता नूनं सहिष्ये घनान् ॥ ४ ॥ रुद्रटस्य ।
प्रसर शिशिरामोदं कौन्दं समीर समीरय
प्रकटय शशिन्नाशाः काम प्रपञ्चय दुःस्थताम् ।
अवधिदिवसः पूर्णः सख्यो विमुञ्चत तत्कथां
हृदयमधुना किंचित्कर्तुं ममान्यदिहेच्छति ॥ ५ ॥ तस्यैव ।

## ५६ प्रोषितभर्तृकाप्रियसंवादः ।

द्वारस्तम्भनिषण्णया दयितया वक्रीकृतग्रीवया
नासाग्रागतवारिबिन्दुविसरैः संसिच्यमानाङ्गया ।
मन्युस्तम्भितकण्ठगद्गदगिरा प्रोच्चारितार्धाक्षरं
संदिष्टं तव कान्तया पथिक तद्वक्तुं न यत्पार्यते ॥ १ ॥
तुतातितस्य ।
नावस्था वपुषो ममेयमवधेरुक्तस्य नातिक्रमो
नोपालम्भपदानि वाप्यकरुण तत्राभिधेयानि ते ।
प्रष्टव्यः शिवमालि केवलमसौ कश्चिद्भवद्गोचरे
नायातं मलयानिलैर्मुकुलितं कच्चिन्न चूतैरिति ॥ २ ॥ वाक्कूटस्य ।
कुटज-कटवो घ्राता वाताः श्रुतं घनगर्जितं
निशि निशि मुहुः स्वल्पे तल्पे कृतः शयनश्रमः ।
अवधिगणनारेखापूर्णाः कृता गृहभित्तयो ।
न तव सविधं प्राणाः प्राप्ता न वा त्वमिहागतः ॥ ३ ॥ कस्यचित् ।
विज्ञप्तिरेषा मम जीवबन्धो तत्रैव नेया दिवसाः कियन्तः ।
सं प्रत्ययोग्यस्थितिरेष देशः करा हिमांशोरपि तापयन्ति ॥ ४ ॥
विद्यायाः ।
गन्तासि चेत्पथिक हे मम यत्र कान्त-
स्तत्त्वं वचो हर शुचौ जगतामसह्यः ।
तापः सगर्जगुरुवारिनिपातभीत-
स्त्यक्त्वा भुवं विरहिणीहृदयं विवेश ॥ ५ ॥ लडहचन्द्रस्य ।

## ५७ प्रोषितभर्तृकावस्था ।

अविरलपतद्बाष्पोत्पीडप्रसिक्तकपोलया
वचनविषयः संदेशोऽन्यस्तया विहितो न ते ।
मनसि किमपि ध्यायन्त्या तु क्षणं तव कान्तया
पथिक निहिता दृष्टिः कष्टं नवे करुणांकुरे ॥ १ ॥ धर्मपालस्य ।
पक्ष्माग्रस्खलिताश्रुधौतवलया निष्पन्दतारेक्षणा
बिभ्राणा करपल्लवेन सततं क्षामं कपोलस्थलम् ।

सद्यानीं लिखितेव कामपि गताचस्थां सखीभिश्चिरा-
दासन्नावधिवासरप्रकटितप्रत्याशया श्वास्यते ॥ २ ॥ कस्यचित् ।

विच्छिन्नेऽवधिवासरे क्षणमथ त्वद्वर्त्मवातायनं
वारंवारमुपेत्य निर्घृणतया निश्चित्य किंचित्ततः ।
संप्रत्येव निवेद्य केलिकुररीः सास्रं सखीभ्यः शिशो-
र्माधव्याः सहकारकेण करुणः पाणिग्रहः कल्पितः ॥ ३ ॥

कस्यचित् ।

निपतति शयने तव स्मरन्ती पथिक वधूरवधूतजीविताशा ।
जलधरसमयस्य केतुभूतां वकुललतामवलोक्य पुष्पिताग्राम् ॥ ४ ॥

कस्यचित् ।

आदूरात्प्रतिपान्थमाहितदृशः प्रत्याशयोन्मीलति
ध्वान्ते स्वान्तमहर्व्ययेऽपि न परावृत्तं कुरङ्गीदृशः ।
तस्या निःसहबाहुवल्लि विगलद्धम्मिल्लवद्भंगुर-
ग्रीवं दीर्घमजीवदप्रियसखीवर्गेण नीतं वपुः ॥ ५ ॥ कस्यचित् ।

## ५८ वर्त्मावलोकिनी ।

पाण्डुक्षामकपोलपालिलुठितां त्रस्तैणशावेक्षणा
हस्तेन श्लथकङ्कणेन कबरीमुल्लासयन्ती मुहुः ।
द्वारोपान्तविलम्बिनी प्रियपथं तन्वङ्गि यद्वीक्षसे
तन्मन्ये विकटैरिवाश्नसि पुरः पन्थानमिन्दीवरैः ॥ १ ॥

कस्यचित् ।

पर्यस्तो दिवसस्तटीमयमटत्यस्ताचलस्यांशुमान्
संप्रत्यंकुरितान्धकारपटलैर्लम्बालका द्यौरपि ।
पक्षान्तर्विश वेश्मनः शशिमुखि द्वारस्थलीतोरणे
स्तम्भालम्बितबाहुवल्लि रुदती किं त्वं पथः पश्यसि ॥ २ ॥

धर्मयोगेश्वरस्य ।

उत्क्षिप्यालकमालिकां विलुलितामापाण्डुगण्डस्थला-
द्विश्लिष्यद्वलयप्रपातभयतः प्रोल्लास्य किंचित्करौ ।
द्वारस्तम्भनिषण्णगात्रलतिका केनापि पुण्यात्मना
मार्गालोकनदत्तदृष्टिरबला तत्कालमालिंग्यते ॥ ३ ॥ रुद्रटस्य ।

आजन्म व्यवसायिना क्रतुशतैराराध्य पुष्पायुधं
केनाकारि पुरातनूदरितनुत्यागः प्रयागद्रुमे ।
यस्यार्थे सखि लोलनेत्रनलिनीनालायमानस्खल-
द्वाष्पाम्भःपतनान्तरालवलितग्रीवं पथः पश्यसि ॥ ४ ॥

धोयीकस्य ।

आदृष्टिप्रसरात्प्रियस्य पदवीमुद्वीक्ष्य निर्विण्णया
विश्रान्तेषु पथिष्वहःपरिणतौ ध्वान्ते समुत्सर्पति।
यान्त्यैव स्वनिवेशनं प्रतिपथं पान्थस्त्रियास्मिन्क्षणे
माभूदागत इत्यमन्दवलितग्रीवं मुहुर्वीक्षितम्॥ ५॥ सिद्धोकस्य।

## ५९ काकः।

गतोऽस्तं तिग्मांशुर्व्रज सहचरीनीडमधुना
सुखं भ्रातः सुप्याः स्वजनसदृशं वायस कृतम्।
मयि स्नेहाद्बाष्पस्थगितरुचिदृष्टौ सकरुणं
रुदत्यां यो यातस्त्वयि स विलपत्येष्यति कथम्॥ १॥ कस्यचित्।
दत्तं पिण्डं नयनसलिलक्षालनाधौतगण्डं
द्वारोपान्ते गतदयितया संगमान्वेषणाय।
वक्रग्रीवश्चलनतशिराः पार्श्वसंचारिनेत्रः
पाशाशङ्की गलितवलयाक्रान्तमश्नाति काकः॥ २॥ कस्यचित्।
वारंवारमलीक एव हि भवान्कि व्याहरत्यागत-
मित्युद्भ्रम्य सुमन्दबाहुलतिकामुत्थापयन्त्या रुषा।
संक्रान्तैर्वलयैरलंकृतगलो युष्मद्वियोगोचितां
तन्वंग्याः प्रकटीकरोति तनुतामङ्के भ्रमन्वायसः॥ ३॥ कस्यचित्।
यत्पुष्णासि पिकानकारणरिपूनध्वन्यवामभ्रुवां
यच्चाच्छिद्य बलिं विलुम्पसि करात्सर्वं सहिष्ये तव।
हंहो मद्वचनादितस्त्वयि गते शाखान्तरं वायस
क्षेपेणाद्य समागमिष्यति स चेत्कान्ताश्चिरं प्रोषितः॥ ४॥
धोयीकस्य।
उल्लासो विरुतेन मङ्गलबलिग्रासेन विश्वासनं
संचारेण कृतो विलोचनयुगे बाष्पोद्गमावग्रहः।
यातोऽस्तं रविरेष संप्रति पुरः स्वस्त्यस्तु ते गम्यता-
मेते त्वामनुयान्तु संप्रति मम प्राणाः प्रियान्वेषिणः॥ ५॥
जलचन्द्रस्य।

## ६० प्रोषितसंभेदः।

आयाते दयिते मरुस्थलभुवामुत्प्रेक्ष्य दुर्लङ्घ्यतां
गेहिन्या परितोषबाष्पतरलामासज्ज्य दृष्टिं मुखे।
दत्त्वा पीलुशमीकरीरकवलान्स्वेनाञ्चलेनादरा-
दामृष्टं करभस्य केसरसटाभाराग्रलग्नं रजः॥ १॥ केशटस्य।

केयूरीकृतकङ्कणावलिरसौ कर्णावतंसीकृत-
व्यालोलालकपद्धतिः पथि पुरोबद्धाञ्जलिः पृच्छति ।
यावत्किंचिदुदन्तमात्मकमितुस्तावत्स एवेत्यथ
व्रीडावक्रितकण्ठनालमबला कैः कैर्न भिन्ना रसैः ॥ २ ॥
राजशेखरस्य ।

निद्रे भद्रमवस्थितासि कुशलं संवेदने किं तव
क्षेमं ते सखि निर्वृते ननु समं कान्तेन यूयं गताः ।
किं चान्यत्प्रियसंगमेन चलितो गच्छन्विपद्वत्सलो
मूर्छाविस्मृतिवेदनापरिजनो दृष्टोस्मदीयो न वा ॥ ३ ॥
अरविन्दस्य ।

प्राग्यामिनि प्रियवियोगविपत्तिकाले
त्वय्येव वासरशतानि लयं गतानि ।
दैवात्कथं कथमपि प्रियसंगमेद्य
चण्डालि किं त्वमसि वासर एव लीना ॥ ४ ॥ कस्यचित् ।

प्रत्युद्गम्य तनूरुहोद्गतिवशात्खेदस्खलच्चेष्टया
दत्त्वा स्वेदलवैः स्वहस्तगलितैः प्रक्षालनं पादयोः ।
किञ्चित्स्मेरमुखप्रकीर्णदशनस्वच्छांशुपुष्पोज्ज्वलै-
रानन्दाश्रुभिरर्चितो दयितया पान्थश्चिरादागतः ॥ ५ ॥ कस्यचित् ।

## ६१ अभिसारारम्भः ।

पतिर्दुर्वञ्चोयं विधुरमलिनो वर्त्म विषमं
जनश्छिद्रान्वेषी प्रणयिवचनं दुष्परिहरम् ।
अतः काचित्तन्वी रतिविहितसंकेतगतये
गृहाद्द्वारं वारं निरसरदथ प्राविशदथ ॥ १ ॥ कस्यचित् ।

मन्दं निधेहि चरणौ परिधेहि नीलं
वासः पिधेहि वलयावलिमञ्चलेन ।
मा जल्प साहसिनि शारदचन्द्रकान्त-
दन्तांशवस्तव तमांसि समापयन्ति ॥ २ ॥ नालस्य ।

उत्क्षिप्तं सखि वर्तिपूरितमुखं मूकीकृतं नूपुरं
काञ्चीदाम निवृत्तघर्घररवं क्षिप्तं दुकूलान्तरे ।
सुप्ता पञ्जरसारिकाः परिजनोप्याघूर्णितो निद्रया
शून्यो राजपथस्तमांसि निविडान्येह्येहि निर्गम्यताम् ॥ ३ ॥
योगेश्वरस्य ।

सखी निर्वैलक्ष्या स च सहचरोत्यन्तचपलः
कृतो मुग्धे दुग्धे किमिति वृषदंशः प्रहरिकः ।

सुवर्णं स्वं चक्षुः फलति न विलम्बस्व कुलटा-
कुलोत्पातः शातक्रतवमचलं चुम्बति शशी ॥ ४ ॥ मित्रस्य ।
मुञ्चत्याभरणानि दीप्तमुखराण्युत्तंसमिन्दीवरैः
कुर्वाणा दधती मुहुर्मृगमदक्षोदानुलिप्तं वपुः ।
कालिन्दीजलवेणिनीलमसृणं चीनांशुकं बिभ्रती ।
मुग्धे त्वं प्रकटीकरोष्यविनयारम्भं वृथा निह्नवः ॥ ५ ॥
लक्ष्मणसेनस्य ।

## ६२ अभिसारिका ।

निबिडय कुचयोर्निचोलबन्धं ।
रचय लघूनि कियन्ति चिरपदानि ।
निजपतिचिरभोगपातकाना-
मुपशमतीर्थमयं स ते निकुञ्जः ॥ १ ॥ चूडामणेः ।
अभिसरणरसः कृशाङ्ग्यष्टेरयमपरत्र न वीक्षितः श्रुतो वा ।
अहिमपि यदियं निरास नांघ्रेर्निबिडितनूपुरमात्मनीनबुद्ध्या ॥ २ ॥
धूर्जटेः ।

उरसि निहितस्तारो हारः कृता जघने घने
कलकलवती काञ्ची पादौ रणन्मणिनूपुरौ ।
प्रियमभिसरस्येवं मुग्धे त्वमाहतडिण्डिमा
किमिदमपरं त्रासोत्कम्पं दिशो मुहुरीक्षसे ॥ ३ ॥ अमरोः ।
किं न्यावृणोषि कबरीं सखि किं नु काञ्चीं
बध्नासि वर्मयसि किं कुचयोर्निचोलम् ।
सोत्कण्ठकान्तसुभगाध्युषितोपकण्ठा
प्राप्ता पुरः सुरतसंगररङ्गभूमिः ॥ ४ ॥ धर्मयोगेश्वरस्य ।
वस्त्रप्रोतदुरन्तनूपुरमुखाः संयम्य नीवीमणी-
नुद्गाढांशुकपल्लवेन निभृतं दत्ताभिसारक्रमाः ।
एताः कुन्तलमल्लिकापरिमलव्यालोलभृङ्गावली-
झङ्कारैर्विकलीकृताः पथि वत व्यक्तं कुरङ्गीदृशः ॥ ५ ॥ कस्यचित् ।

## ६३ दिवाभिसारिका ।

अवलोक्य नर्तितशिखण्डिमण्डलै-
र्नवनीरदैर्निचुलितं नभस्तलम् ।
दिवसेपि वञ्जुलनिकुञ्जमित्वरी
विशति स्म वल्लभवतंसितं रसात् ॥ १ ॥ सुभटस्य ।

सान्द्रेषु चम्पकघनेषु विनिद्रपुष्प-
पंक्तिप्रकाशितपरागपिशङ्कितेषु ।
मध्यंदिनेपि रमणी रमणाभिसार-
बुद्धिं बभार कनकाभरणं भजन्ती ॥ २ ॥ तस्यैव ।

दिवापि जलदोदयादुपचितान्धकारच्छटा-
जटालिततटीमिमां विशति विस्मरन्ती भयम् ।
तमालतरुमण्डितावटनिरस्तभानुद्युतिं
धृताभिसरणव्रता शबरसुन्दरी कन्दरीम् ॥ ३ ॥ कालिदासस्य ।

मध्याह्नाद्विगुणार्कदीधितिदलत्संभोगवीथीपथ-
प्रस्थानव्यथितारुणांगुलिदलं राधापदं माधवः ।
मौलौ स्रक्शबले मुहुः समुदितस्वेदे मुहुर्वक्षसि
न्यस्य प्राणयति प्रकम्पविधुरैः श्वासोर्मिवातैर्मुहुः ॥ ४ ॥
आचार्यगोपीकस्य ।

दिवसेपि धूममहिषीवाद्योत्सवदुर्दिनेषु मिलितायाः ।
नाकृतपुण्यः पश्यति रहसि मुदा वदनमेणाक्ष्याः ॥ ५ ॥
उमापतिधरस्य ।

## ६४ तिमिराभिसारिका ।

खद्योतोत्करदन्तुरान्धतमसोत्सङ्गेन मा गाः सखि
स्वैरं नूपुरजागरूकचरणौ दुःशिक्षिते रोपय ।
न्यञ्चल्लोलचलाचलेन तरले हारस्रजं निष्पिधाः
प्राप्तः पुत्रि स एष नीलनिचुलक्रीडालतामण्डपः ॥ १ ॥
पायीकस्य ।

मौलौ श्यामसरोजदाम नयनद्वन्द्वेञ्जनं कर्णयो-
स्तापिच्छप्रसवः कपोलफलके कस्तूरिकापल्लवः ।
विश्वालोकविलोपि निन्दितमपि प्रेयोभिसाराशया
दृष्याद्भिः स्मरदुर्विनीतवनितास्तोमैस्तमो मन्यते ॥ २ ॥
उमापतिधरस्य ।

वासोबर्हिणकण्ठमेदुरमुरो निष्पिष्टकस्तूरिका-
पत्रालीमयमिन्द्रनीलवलयं दोर्वल्लिरासेवते ।
निर्यान्ती च लघुस्खलत्पदमिदं ध्वान्तं न यन्मन्यसे
तन्नूना मदिराक्षि केन सुचिरादाराधि पुष्पायुधः ॥ ३ ॥
आवन्तिकजह्नोः ।

प्रयासि यत्कुण्डलचक्रधारया विपाटयन्तीव घनं निशातमः ।
तदद्य कर्णायितलोलनीलोत्पले फलेग्रहिः कस्य मनोरथद्रुमः ॥ ४ ॥
धोयीकस्य ।

इह निशि निविडनिरन्तरकुचकुम्भद्वितयदत्तहृदयभरा ।
रमणगुणकृष्यमाणा संतरति तमस्तरङ्गिणीं कापि ॥ ५ ॥ अमरोः ।

### ६५ ज्योत्स्नाभिसारिका ।

शशधरकरस्पर्धामुग्धं विधाय विभूषणं
किमिति वलितग्रीवं मुग्धे मुधैव विलोक्यते ।
कृतमपि कृतं नेदं दूति प्रतीहि न मामियं
सहजमलिना देहच्छाया विमुञ्चति वैरिणी ॥ १ ॥
केशवकोलीयनाथोकस्य ।

मलयजपङ्कलिप्ततनवो नवहारलताविभूषिताः
सिततरदन्तपत्रकृतवक्त्ररुचो रुचिरामलांशुकाः ।
शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गताः
प्रियवसतिं व्रजन्ति सुखमेव मिथो निरस्तभियोऽभिसारिकाः ॥२॥
बाणस्य ।

मौलौ मौक्तिकदाम केतकदलं कर्णे स्फुटत्कैरवं
ताडङ्कः करिदन्तजः स्तनतटी कर्पूररेणूत्करा ।
कण्ठे निस्तलतारहारवलयी शुभ्रं तनीयोऽशुकं
ज्योत्स्नायामभिसारसंपदमिमां पञ्चेषुरप्यञ्चति ॥ ३ ॥ कस्यचित् ।

नवधौतधवलवसनाश्चन्द्रिकया सान्द्रया तिरोगमिताः ।
रमणभवनान्यशङ्कं सर्पन्त्यभिसारिकाः सपदि ॥ ४ ॥ कस्यचित् ।

इतः प्रालेयांशुः प्रलयमकरोत्कैरवकुल-
क्लमच्छेदोत्सेकैः किरणनिकरैरेष तमसाम् ।
इतोऽप्याज्ञावज्ञां सखि न सहते दुःसहतर-
प्रतापः पञ्चेषुस्तदिह शरणं साहसरसः ॥ ५ ॥ सुभटस्य ।

### ६६ दुर्दिनाभिसारिका ।

पङ्के नूपुरशिञ्जितस्य गरिमा मग्नः क्वणन्मेखला-
जल्पाकी जघनस्थली जलमुचां नादैर्निषिद्धाधिकम् ।
दोर्वल्लीवलयांशवश्च शमिताः सौदामिनीविभ्रमै-
र्वर्षारात्रिविभूतिभिस्तव सखि क्षीणोऽन्तरायः क्षणात् ॥ १ ॥
सुभटस्य ।

असूर्यासंचारे तमसि नभसि स्निग्धजलद-
ध्वनिप्राज्ञंमन्ये पतति पृषतानां च निचये ।

इदं सौदामन्याः कनकरमणीयं विलसितं
करालम्बं दूराद्विनयवतीनां वितनुते ॥ २ ॥ तस्यैव ।
धावति चेतो न तनुर्धारा-धौतोधरो हृदि न रागः ।
इह रमणमभिसरन्त्याः स्खलति गतिर्न त्ववष्टम्भः ॥ ३ ॥ अमरोः ।
प्राणेशमभिसरन्ती मुग्धा पथि पङ्किले स्खलन्तीव ।
अवलम्बनाय वारां धारासु करं प्रसारयति ॥ ४ ॥ धरणीधरस्य ।
मत्पाणावपसव्यमर्पय करं सव्यञ्च काञ्च्यां कुरु
प्रोत्कुञ्च्याग्रममू निधेहि चरणावुत्पङ्किले वर्त्मनि ।
मा पुत्रि त्रस पश्य वर्त्म कति चिद्दृष्टिस्फार्य चक्षुःक्षणा-
न्यावल्गेढि तडिल्लता तत इतः पिण्डावलेह्यं तमः ॥ ५ ॥
चन्द्रज्योतिषः ।

## ६७ स्वैरिणीप्रलापः ।

देवो रविर्वा प्रणिपत्य याच्यः कालक्रमान्मण्डलमागतस्य ।
परःसहस्राः शरदो विधेयास्त्वयातिथेर्या मृगलाञ्छनस्य ॥ १ ॥
कस्यचित् ।
शीतमधुरमपि गलितं वमति विधुं व्याधिना येन ।
शमयति यस्तं राहोः सखि भिषजस्तस्य दासी स्याम् ॥ २ ॥
धर्मपालस्य ।
अस्मिन्करीन्द्रकरनिर्गलितारविन्द-
कन्दानुकारिणि चिरं रुचिचक्रवाले ।
कस्मै फलाय कुलटाकुलकोटिहोमं
हंहो मृगाङ्क कुरुषे करुणामपास्य ॥ ३ ॥ सुभटस्य ।
निष्पीयांशु पयः पयोरुहरिपोश्चकुश्चकोरा इमे
यन्नाद्यापि कलङ्कपङ्किलकलाकङ्कालशेषं वपुः ।
सैषा किं कविकल्पना सखि किमु स्वैराङ्गनादुष्कृतै-
रेभ्यः कान्तिकपालपानपटिमव्युत्पत्तिरुल्लासिता ॥ ४ ॥ तस्यैव ।
यन्मृत्युंजयमौलिरत्नममृतप्रस्यन्दिसान्द्रच्छवि-
र्ज्यायान्मन्त्रविदां महार्णवमसिश्रेणीसकुल्याग्रणीः ।
प्रेयानोषधिमण्डलस्य वहति क्षीणं वपुर्यः क्षणा-
त्तत्रैते विलसन्ति पुत्रि कुलटासत्कर्मणां मूर्तयः ॥ ५ ॥ जलचन्द्रस्य ।

## ६८ स्त्रीरूपम् ।

यत्त्रैलोक्यमनोरथस्य परमं पात्रं मनोजन्मना
यच्चास्त्रं हरनिर्जितेन जगतीं जेतुं चिरादर्जितम् ।

यन्मे श्रोत्ररसायनं कथमहो प्राप्तं तदेतन्मया
रूपं लोचनपीयमानविगलल्लावण्यपूरं वपुः ॥ १ ॥ कालिदासस्य ।
दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः
संक्षिप्तं निविडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव ।
मध्यः पाणिमितो नितम्बि जघनं पादावुदग्रांगुली
छन्दो नर्तयितुर्यथैव मनसः सृष्टं तथास्या वपुः ॥ २ ॥ तस्यैव ।
विम्बोष्ठाय नमस्करोति चकिता बन्धूकपुष्पद्युतिः
कार्पण्यं तनुते न किं स्मरधनुर्दीनं भ्रुवोरग्रतः ।
आज्ञां मूर्धभिरुद्वहन्ति कमलान्यक्ष्णोर्मृगाद्याः स्फुटं
किंचान्यद्वदनस्य धावति पुरो बद्धाञ्जलिश्चन्द्रमाः ॥ ३ ॥
पुरुषोत्तमदेवस्य ।
लावण्यद्रविणव्ययो न गणितः क्लेशो महान्स्वीकृतः
स्वच्छन्दं वसतो जनस्य हृदये चिन्ताज्वरो निर्मितः ।
एषापि स्वगुणानुरूपरमणाभावाद्वराकी हता
कोर्थश्चेतसि वेधसा विनिहितस्तन्व्यास्तनुं तन्वता ॥ ४ ॥
धर्मकीर्तेः ।
लावण्यद्रवकल्पमेव कनकं वक्त्रस्य नीराजना-
पिण्डश्रीः शशभृद्दृगेव नयनद्वन्द्वस्य नीलोत्पलम् ।
भ्रूवल्ली किमुदाहरामि यदवच्छेदो धनुर्मान्मथं
तत्पीयूषभुजामरोचकचमत्कारि स्मितं सुभ्रुवः ॥ ५ ॥
करञ्जमहादेवस्य ।

## ६६ भ्रूः

असंगतेनोन्नतिमागतेन चलेन वक्रेण मलीमसेन ।
सा दुर्जनेनेव समस्तमेतत्प्रबाधते भ्रूयुगलेन लोकम् ॥ १ ॥
यक्षघोषस्य ।
अकौसुमी मन्मथचापयष्टिरनंशुका विभ्रमवैजयन्ती ।
ललाटरङ्गाङ्गणनर्तकीयमनञ्जना भ्रूरनुयाति दृष्टिम् ॥ २ ॥
राजशेखरस्य ।
विरमतु रतिजाने लोलरोलम्बकीट-
व्रणविवरसहस्रक्षुण्णमेतद्धनुस्ते ।
यदिह कुसुमकेतो भ्रूलता कापि यूना-
मुपरि जयपताका सुभ्रुवो विश्वजेत्री ॥ ३ ॥
वासुदेवज्योतिषः ।

इन्दोः कान्तिं जडतरकरान्मत्तनागाद्गतिं वा
अस्ताश्चेत्त्वं हरसि हरिणाक्षच्च किं नाम चित्रम् ।
एतच्चित्रं पुनरिह जगज्जैत्रकन्दर्पचाप-
श्रीसर्वस्वं यदपहरसि प्रेयसि भ्रूविलासैः ॥ ४ ॥ नान्यदेवस्य ।
भ्रूलेखायुगलं भाति तस्याश्चटुलचक्षुषः ।
पत्रद्वयीव हरिता नासावंशस्य निर्गता ॥ ५ ॥ विल्हणस्य ।

## ७० नयनम् ।

नलिनं मलिनं विवृण्वती पृषतीमस्पृशती तदीक्षणे ।
अपि खञ्जनमञ्जनाञ्चिते विदधाते रुचिगर्वदुर्विधम् ॥ १ ॥
श्रीहर्षस्य ।
निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता कापि ।
नीलोत्पलेपि विमृशति करमर्पयितुं कुसुमलावी ॥ २ ॥
धरणीधरस्य ।
नीराजयामि नयने तव यन्मृगाक्ष्य-
मिन्दीवरैः स्मरमबद्धमुखाः करं ते ।
अद्यापि शाम्यति न ते वत पार्वणेन्दु-
बिम्बोपमा सखि मुखाम्बुजार्किवदन्ती ॥ ३ ॥ पीताम्बरस्य ।
अक्षिभ्यां कृष्णशाराभ्यामस्याः कर्णौ न बाधितौ ।
शङ्के कनकताडङ्कपाशत्रासवशादिव ॥ ४ ॥ वङ्गालस्य ।
मृगीसम्बन्धिनी दृष्टिरसौ यदि न सुभ्रुवः ।
धावति श्रवणोत्तंसलीलादूर्वाङ्कुरे कुतः ॥ ५ ॥ विल्हणस्य ।

## ७१ कर्णः ।

त्यक्तादरो धनुषि सौमनसे वरोरु
नीराजितः सुतनु नैष निजैः पृषत्कैः ।
बध्नन्नभूत्रयनकालमृगानिदानीं
त्वत्कर्णपाशयुगवागुरिको मनोभूः ॥ १ ॥ गोपीकस्य ।
अहह किमधुना मुधैव बध्नास्यनुचितकारिणि कर्णदन्तपत्रम् ।
ननु तव चटुलभ्रु कर्णपालिर्भुवनविलोचनकालसारपाशः ॥ २ ॥
तस्यैव ।
किंपत्रभङ्गरुचिजालमिदं कपोले
त्वत्कर्णयोः सुदति सारित एष पाशः ।

काश्चित्स्ववत्यपि किमुत्पतितोनितम्बा-
स्त्वन्मध्यदेशादवमीक्षणकालसारः ॥ ३ ॥ तस्यैव ।
स्मरशरौघनिकाशं कर्णपाशं कृशाङ्गी
रयविगलितार्डीपत्रताडङ्कमेकम् ।
वहति हृदयचोरं कुंकुमन्यासगौरं
वलयितमिव नालं लोचनेन्दीवरस्य ॥ ४ ॥ कस्यचित् ।
संभोग एष ताडङ्कः कर्णस्तस्य विराजते ।
नेत्रनीलोत्पलस्येव नालकं द्विगुणीकृतम् ॥ ५ ॥
विक्रमादित्यकालिदासयोः ।

## ७२ अधरः

अयमक्षुण्णकान्तश्रीरधरो हरिणीदृशः ।
प्रवालपद्मरागादेरुपरि प्रतिगर्जति ॥ १ ॥ धर्माशोकदत्तस्य ।
अभिनवजपापुष्पस्पर्धी तवाधरपल्लवो
हसितकुसुमोन्मेषच्छायादरच्छुरितान्तरः ।
नयनमधुपश्रेणीं यूनामनारतमाहरं-
स्तरुणि तनुते तारुण्यश्रीविलासवतंसताम् ॥ २ ॥ जलचन्द्रस्य ।
अयं ते विद्रुमच्छायो मरुदेश इवाधरः ।
करोति कस्य नो मुग्धे पिपासाकुलितं मनः ॥ ३ ॥ कस्यचित् ।
विभाति विम्बाधरवल्लिरस्याः
स्मरस्य बन्धूकधनुर्लतेव ।
विनापि बाणेन गुणेन येयं
यूनां मनांसि प्रसभं भिनत्ति ॥ ४ ॥ जयदेवस्य ।
स्याद्बन्धुजीवनिवहैर्यदि पञ्चबाण-
चापश्चलत्कुसुमकेशरचामराङ्कः ।
स्यादेव तेन तुलना तरुणि त्वदीय-
विम्बाधरस्य मधुरस्मितभावितस्य ॥ ५ ॥ शङ्करदेवस्य ।

## ७३ वदनम् ।

यदपि विबुधैः सिन्धोरन्तः कथंचिदुपार्जितं
तदपि सकलं चारुस्त्रीणां मुखेषु विलोक्यते ।
सुरमनसः श्वासामोदे शशी च कपोलयो-
रमृतमधरे तिर्यग्भूते विषं च विलोचने ॥ १ ॥ लक्ष्मीधरस्य ।
जनानन्दश्चन्द्रो भवतु न कथं नाम सुकृती
प्रयातोवस्थाभिस्तिसृभिरपि यः कोटिमियतीम् ।

भ्रुवोर्लीलां बालः श्रियमलिकपट्टस्य तरुणो
मुखेन्दोः सर्वस्वं हरति हरिणाक्ष्याः परिणतः ॥ २ ॥ मुरारेः ।
तपस्यतीव शीतांशुस्त्वन्मुखेन्दुजिगीषया ।
कृशः शम्भुजटाजूटतटिनीतटमाश्रितः ॥ ३ ॥ कस्यचित् ।
प्रत्यासन्नविदूरवर्तिविषयेमुष्मिन्द्विचन्द्रभ्रमे
मुख्या चन्द्रमतिर्मुखे तव निरालम्बैव तु व्योमनि ।
भंक्त्वासौ हरिणः सदा जनभयात्तत्रैव लीनः प्रिये
नैवं चेत्कथमेव यस्य जठरे तस्यैव लोले दृशौ ॥ ४ ॥
शब्दार्णवस्य ।
कोषः स्फीततरः स्थितानि परितः पत्राणि दुर्गं जलं
मैत्रं मण्डलमुज्ज्वलं चिरमधो नीतास्तथा कण्टकाः ।
इत्याकृष्टशिलीमुखेन रचनां कृत्वा तदत्यद्भुतं
यत्पद्मेन जिगीषुणापि न जितं मुग्धे तवेदं मुखम् ॥ ५ ॥ कस्यचित् ।

७४ वचनम् ।

कलक्वाणे वीणे विरम रणितात्कोकिल सखे
सखेदो माभूस्त्वं द्रुहिणविहितस्ते परिभवः ।
सुधे मुञ्च स्पर्धामधरमधुसंसर्गसरसाः
स्फुटन्त्येता वाचः किमपि कमनीया मृगदृशः ॥ १ ॥ सूर्यधरस्य ।
नैवोदञ्चय पञ्चमं पिक रुतं मा शारिके सारय
त्वं धीरो भव कीर वल्लकि वरात्तन्त्रीमतन्त्रीं कुरु ।
उन्मीलद्युवभावसंभृतरसप्रत्युन्मिषद्वक्रिम-
प्रक्रान्तस्मितकौमुदीसहभुवो वाचः श्रुताः सुभ्रुवः ॥ २ ॥
सिन्दूभस्य ।
तिर्यक्तयैव परपुष्टवधूरपात्रं
वीणाप्यमानुषगुणा गणना कुतोस्याः ।
वाचां न किञ्चिदनुकारि मृगायताक्ष्या
माधुर्यसीमनि सुधां पुनरालिखामि ॥ ३ ॥
कालिदासनन्दिनः ।
तन्व्या मनोज्ञस्वरनैपुणेन विनिर्जितो रोषविलोहिताक्षः ।
प्रसक्तचिन्ताहितमन्यपुष्टः शोकेन कार्ष्ण्यं वहतीति मन्ये ॥ ४ ॥
कुमारदासस्य ।
शिरीषपुष्पादपिकोमलाया वेधा विधायाङ्गमशेषमस्याः ।
प्राप्तप्रकर्षः सुकुमारसर्गे समापयद्वाचि मृदुत्वतत्त्वम् ॥ ५ ॥
कविपण्डितश्रीहर्षस्य ।

## ७५ बाहुः ।

इमां विधातुं भुजवल्लिमुज्ज्वलां
गृहीतसारं विधिना नतभ्रुवः ।
कठोरभावप्रियमेव केवलं
मृणालमन्तस्तरलं कुतोऽन्यथा ॥ १ ॥ दूनोकस्य ।

किं स्यात्फलं स्फुटमधूकमयेन दाम्ना
का वार्थिता विकचचम्पकमालया मे ।
धिक्तां च काञ्चनसरोजमृणालनालां
लीलाभुवो भुजलता ललितास्तु सैव ॥ २ ॥ कविकुसुमस्य ।

दयिताबाहुपाशस्य कुतोयमपरो विधिः ।
जीवयत्यर्पितः कण्ठे मारयत्यपवर्जितः ॥ ३ ॥
कश्मीरकश्यामलस्य ।

सरले एवदोर्लेखे यदि चञ्चलचक्षुषः ।
अमुग्धाभ्यो मृणालीभ्यः कथमाजह्रतुः श्रियम् ॥ ४ ॥ विह्लणस्य ।

बाहू तस्याः कुचाभोगनिषिद्धान्योन्यदर्शनौ ।
मन्त्रितं कथमेताभ्यां मृणालीकीर्तिलुण्ठनम् ॥ ५ ॥ तस्यैव ।

## ७६ स्तनः ।

एतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डुर-
प्रान्तं हन्त पुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते ।
तत्पल्लीपतिपुत्रि कुञ्जरकुलं कुम्भाभयाभ्यर्थना
दीनं त्वामनुनाथति स्तनयुगं पत्रांशुकैर्मापिधाः ॥ १ ॥ बल्लणस्य ।

विलसतु फलजातं चारु हृद्यं तरूणां
तरुणि न पदवीं तद्यास्यति श्रीफलस्य ।
असमनिजमहिम्ना येन ते तन्वि तुङ्ग-
स्तनकलशजिगीषासाहसेनार्जिता श्रीः ॥ २ ॥
तालहडीयरङ्कस्य ।

अयं लोलन्मुक्तावलिकिरणमालापरिकरः
स्फुटस्येन्दोर्लक्ष्मीं क्षपयितुमलं — ˘ ˘ ˘ — ।
विशालः श्यामायाः स्थगितघननीलांशुकवृतः
स्तनाभोगः स्विद्यन्मसृणघुसृणालेपसुभगः ॥ ३ ॥
मनोविनोदकृतः ।

सजन्मानौ तुल्यावपि जनितुराजन्म च सह
प्रवृद्धौ नाम्ना च स्तन इति समानावुदयिनौ ।

मिथः सीमामात्रे यदिदमनयोर्मण्डलभृतो-
रपि स्पर्धा नूनं तदिह हि नमस्या कठिनता ॥ ४ ॥ राजशेखरस्य ।
उद्भूतं किमिदं मनोभवनृपक्रीडारविन्दद्वयं
तत्सूतिः कथमेकतस्तनुवसद्रोमावलीनालतः ।
चक्रद्वन्द्वमपि क्षमं तदपि किं स्थातुं मुखेन्दोः पुरो
लावण्याम्बुधिमग्नयौवनगजस्यावैमि कुम्भद्वयम् ॥ ५ ॥ कस्यचित् ।

## ७७ रोमावली ।

रोमावली कनकचम्पकदामगौर्या
लक्ष्मीं तनोति नवयौवनसंभृतश्रीः ।
त्रैलोक्यलब्धविजयस्य मनोभवस्य
सौवर्णपट्टलिखितेव जयप्रशस्तिः ॥ १ ॥ कस्यचित् ।
रोमावली सत्रिवलीतरङ्गनाभीह्रदस्योपरि राजतेस्याः ।
मुखेन्दुभीतस्तनचक्रवाकवक्त्रच्युता शैवलमञ्जरीव ॥ २ ॥
धोयीकस्य ।
दग्धे मनोभवतरौ बालाकुचकुम्भसंभृतैरमृतैः ।
त्रिवलीकृतालवाला जाता रोमावलीवल्ली ॥ ३ ॥ भासस्य ।
उद्वृत्तः स्तनभार एष तरले नेत्रे चले भ्रूलते
रागाधिष्ठितमोष्ठपल्लवमिदं कुर्वन्तु नाम व्यथाम् ।
सौभाग्याक्षरमालिकेव लिखिता पुष्पायुधेन स्वयं
मध्यस्थापि करोति तापमधिकं रोमावली केन मे ॥ ४ ॥
कस्यचित् ।
हरति रतिपतेर्नितम्बबिम्बस्तनतटचंक्रमसंक्रमस्य लक्ष्मीम् ।
त्रिवलिभवतरङ्गनिम्ननाभीह्रदपदवीमधिरोमराजिरस्याः ॥ ५ ॥
जयदेवस्य ।

## ७८ मध्यम् ।

निहिता मणिमेखला नितम्बे
तरला हारलता कुचद्वये च ।
अनयाहमलंकृतो न कस्मा-
दिति तस्यास्तनुतामियाय मध्यः ॥ १ ॥ कुञ्जस्य ।
अहं तनीयानतिकोमलश्च स्तनद्वयं वोढुमलं न तावत् ।
इतीव तत्संवहनार्थमस्या वलित्रयं पुष्यति मध्यभागः ॥ २ ॥
धोयीकस्य ।
लावण्यपुण्यसलिलौघमहार्घतीर्थे
तस्या वलित्रयतरङ्गिणि मध्यभागे ।

निर्वाणमृच्छति मनः सहजैकतान-
मस्मिन्मुहुः किमनुभावयतीव दृष्टिः ॥ ३ ॥ हरेः ।
तनुत्वरमणीयस्य मध्यस्य च भुजस्य च ।
अभवन्नितरां तस्या वलयः कान्तिवृद्धये ॥ ४ ॥ कस्यचित् ।
कुचकलशमहिम्ना श्रोणिभारप्रथिम्ना
विहितनिविडपीडास्तां द्वयीमु द्विषन्तः ।
चिरमुदरतरङ्गश्रेणिमार्गेण यासां
भ्रुकुटिमिव वहन्ते क्रोधतो मध्यभागाः ॥ ५ ॥ राजशेखरस्य ।

## ७९ नायिकाक्रीडनम् ।

अमन्दमणिनूपुरप्रचुरचारुचारक्रमं
झणज्झणितमेखलास्खलिततारहारच्छदम् ।
इदं तरलकङ्कणावलिविशेषवाचालितं
मनो हरति सुभ्रुवः किमपि कन्दुकक्रीडितम् ॥ १ ॥ राजशेखरस्य ।
अस्याः स्वेदाम्बुबिन्दुच्युत तिलकतया व्यक्तवक्त्रेन्दुकान्तेः
पर्यायात्कन्दुकस्य प्रहणनगणनाकेलिवाचालितायाः ।
उत्पातोत्तालतालक्रमनमितदृशस्ताडनोत्तालताली-
लीलाख्यामौनिताः स्मः प्रतिपदममुना कन्दुकक्रीडितेन ॥ २ ॥
तस्यैव ।
— — ⏑ — ⏑ ⏑ ⏑ — ⏑ ⏑ ⏑ — ⏑ काण्डै-
र्वेणीगुणेन च बलाद्वलयीकृतेन ।
स्वेच्छाहितभ्रमरयभ्रमिमण्डलीभि-
रन्यं रसं रचयतीव चिरं नतभ्रूः ॥ ३ ॥ तस्यैव
शिखा[illegible]रणस्तिर[illegible] मेदिनी-
मितो गलति गुम्फनात्तरल — ⏑ — — ⏑ — ।
⏑ — ⏑ ⏑ ⏑ — ⏑ — टितहारमुक्ताफलै-
रितः श्रवणपाशतः कमलपत्रमास्ते च्युतम् ॥ ४ ॥ तस्यैव ।
च्युतकर्णशिरोरुहावतंसैर्निविडस्वेदजलार्द्रगण्डलेखैः ।
असकृन्मणिकुट्टिमोदरे सा दिवसं कन्दुककेलिभिर्निनाय ॥ ५ ॥
मुञ्जस्य ।

## ८० अनुकूलनायकः ।

सदा चाटूञ्जल्पन्सततमुपहारार्पितमना
मुखं पश्यन्नित्यं सततमविभिन्नाञ्जलिपुटः ।

अनिच्छन्निच्छन्वा क्षणमपि न पार्श्वं त्यजति यः
स किं कामी स्त्रीणामयमशरणो भृत्यपुरुषः ॥ १ ॥
श्रीमल्लक्ष्मणसेनस्य।

सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम्।
साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम् ॥ २ ॥
अमरोः।

सालक्तकेन नवपल्लवकोमलेन पादेन नूपुरवता मदनालसेन।
यस्ताड्यते दयितया प्रणयापराधात्सोऽङ्गीकृतो भगवता मकरध्वजेन ॥३॥
तस्यैव।

सामन्तमौलिमणिरञ्जितपादपीठ-
मेकातपत्रमवनेर्न तथा प्रभुत्वम्।
अस्याः सखे चरणयोरहमद्य कान्त-
माज्ञाकरत्वमधिगम्य यथा कृतार्थः ॥ ४ ॥ कस्यचित्।

हारो यत्र व्यवधिरचना त्वं तु येनापराधो ?
रोमोद्भेदोऽप्यशिथिलतरालिङ्गनेष्वन्तरायः।
यस्मिन्वाञ्छा विरमति मिथो नार्धनारीश्वरत्वे
तद्दांपत्यं विभजतु कथंकारमन्या मृगाक्षी ॥ ५ ॥ गोवर्धनस्य।

## ८१ दक्षिणनायकः।

सैवास्य प्रणतिस्तदेव वचनं ता एव केलिक्रिया-
भीतिः सैव तदेव नर्ममधुरं पूर्वानुरागोचितम्।
कान्तस्याप्रियकारिणीति भवती तं वक्ति दोषाविलं
किं स्यादित्थमहर्निशं सखि मनो दोलायते चिन्तया ॥ १ ॥
रुद्रटस्य।

स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसु-
र्द्यूतैरात्रिरियं जिता कमलया देवी प्रसाद्याद्य च।
इत्यन्तःपुरसुन्दरीभिरसकृद्विज्ञापितेन क्षमा-
द्वेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः ॥ २ ॥
कस्यचित्।

रम्यं द्वेष्टि यथा पुरा प्रकृतिभिर्न प्रत्यहं सेव्यते
शय्याप्रान्तविवर्तनैर्विगमयत्युन्निद्र एव क्षपाः।

दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा
गोत्रेषु स्खलितस्तदा भवति च व्रीडाविलक्षश्चिरम् ॥ ३ ॥
कालिदासस्य ।

प्रणयि वचनं दीना दृष्टिः शिरोनिहितोऽञ्जलि-
श्चरणपतनं देव्याः सन्ति प्रसादनहेतवः ।
कुसुमविशिखज्वालातापस्फुटन्मृदुमानसा
वरतनुरसौ येन प्राप्या स एव तु नास्ति मे ॥ ४ ॥ उमापतिधरस्य ।

वाचः परं भजन्त्येता देवि प्रणयचातुरीम् ।
हृदयस्य तु सर्वस्वं त्वमेवैकप्रिया मम ॥ ५ ॥ तस्यैव ।

## ८२ शठनायकः

दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः ।
ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकं धूर्तोऽपरां चुम्बति ॥ १ ॥ अमरोः ।

कोपात्कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं
नीत्वा केलिनिकेतनं दयितया सायं सखीनां पुरः ।
भूयो मैवमिति स्खलन्मृदुगिरा संसूच्य दुश्चेष्टितं
धन्यो हन्यतएव निह्नुतिपरः प्रेयान्रुदत्या हसन् ॥ २ ॥ तस्यैव ।

एकप्रियाचरणपद्मपरीष्टिजातक्लेशस्य मे हृदयमुत्तरलीचकार ।
उद्भिन्ननिर्भरमनोभवभावमुग्धनानाङ्गनावदनचन्द्रमसां दिदृक्षा ॥ ३ ॥
लक्ष्मणसेनस्य ।

कोपात्किंचिदुपानतोपि रभसादाकृष्य केशेष्वलं
नीत्वा मोहनमंदिरं दयितया हारेण बद्ध्वा दृढम् ।
भूयो यास्यसि तद्गृहानिति मुहुः कण्ठार्धरुद्धाक्षरं
जल्पन्त्या श्रवणोत्पलेन सुकृती कश्चिद्रहस्ताड्यते ॥ ४ ॥ तस्यैव ।

सा बाढं भवतेक्षितेति निविडं संयम्य बाह्वोः स्रजा
भूयो द्रक्ष्यसि तां शठेति परुषं संतर्ज्य संतर्ज्य च ।
आलीनां पुर एव निह्नुतिपरः कोपाद्रणन्नूपुरं
मानिन्याश्चरणप्रहारविधिना प्रेयानशोकीकृतः ॥ ५ ॥
कस्यचित् ।

## ८३ धृष्टनायकः ।

शतं वारानुक्तः प्रियसखि वचोभिः स परुषैः
सहस्रं निर्धूतश्चरणपतितः पार्ष्णिहतिभिः ।

किंयत्कृत्वोबद्धाः पुनरिह न वेद्मि भ्रुकुटय-
स्तथापि क्लिश्यन्मां क्षणमपि न धृष्टो रहयति ॥ १ ॥

वाचो वाग्मिनि किं तवाद्य परुषाः सुभ्रु भ्रुवोर्विभ्रमै-
र्विश्रान्तं कुत एव लोलनयने शून्ये च किं लोचने ।
स्वेदः किं नु घनस्तनि स्तनतटे मुक्ताफलानां तुलां
धत्ते मुञ्च रुषं ममात्र दयिते लेशोऽपि नास्त्यागसः ॥ २ ॥

कस्यचित् ।

जल्पन्त्याः परुषं रुषा मम बलाच्चुम्बत्यसावाननं
मृद्गात्याशु करं करेण बहुशः संताड्यमानोऽपि सन् ।
आलीनां पुरतो दधाति शिरसा पादप्रहारांस्ततो
नो जाने सखि सांप्रतं प्रणयिने कुप्यामि तस्मै कथम् ॥ ३ ॥

रुद्रटस्य ।

दृष्टा मुष्टिभिराहता हृदि नखैराचोटिता पार्श्वयो-
राकृष्टा कवरीषु गाढमधरे शीत्कुर्वती खण्डिता ।
त्वत्कृत्यं त्वदगोचरेऽपि हि कृतं सर्वं मयैवाधुना
मामाज्ञापय किं करोमि सरले भूयः सपत्न्यास्तव ॥ ४ ॥

कस्यचित् ।

दासे कृतागसि भवेदुचितः प्रभूणां
पादप्रहार इति मानिनि नातिदूये ।
उद्यत्कठोरपुलकांकुरकण्टकाग्रै-
र्यत्खिद्यते तव पदं ननु सा व्यथा मे ॥ ५ ॥ सत्यबोधस्य ।

## ८४ ग्राम्यनायकः ।

स्वैरं कीकटदारकः परिसरे गुन्द्रालतो पाहित-
त्वक्खर्बर्चरको विरूढलशुनश्यामः परिक्रामति ।
विश्रान्तं मुषलैः स्थितं तितउभिर्विश्रब्धमम्भोघटै-
र्निर्वाणं ज्वलनैर्मुखैर्विवलितं ग्रामेयिकाणां पुरः ॥ १ ॥

योगेश्वरस्य ।

धावति तरुमारोहति कूपं लङ्घयति शकटमुत्क्षिपति ।
तिनवति तिनवति गायति दृष्ट्वा परयोषितं विङ्गः ॥ २ ॥ तस्यैव ।

व्रीहिः स्तम्बकरिः प्रभूतपयसः प्रत्यागता धेनवः
प्रत्युज्जीवितमिक्षुणा भृशमिति ध्यायन्नपेतान्यधीः ।
सान्द्रोशीरकुटुम्बिनीस्तनभरव्यालुप्तघर्मक्लमो
देवे नीरमुदारमुज्झति सुखं शेते निशां ग्रामणीः ॥ ३ ॥ तस्यैव ।

परिचुम्बनाय घटते पामरमिथुनं निशासु चैत्रीषु ।
कवलितपलाण्डुपरिमलसंवलदन्योन्यनिश्वासम् ॥ ४ ॥ शुभाङ्कस्य ।

व्यावृत्त्या शिथिलीकरोति वसनं जाग्रत्यपि व्रीडया
स्वप्नभ्रान्तिपरिप्लुतेन मनसा गाढं समालिङ्गति ।
दत्त्वाङ्गं स्वपिति प्रियस्य रतये व्याजेन निद्रां गता
तन्वंग्या विफलं विचेष्टितमभूद्भावानभिज्ञे जने ॥ ५ ॥ अमरोः ।

## ८५ मानिनायकः ।

स्मृतस्वप्नावासत्वदखिलविलासैकमनसा
तया तावत्तावत्त्वदनुनययत्नः शिथिलितः ।
अयं तु द्रष्टव्यस्तव सुभग गर्वस्य गरिमा
स्मृतौ वा स्वप्ने वा यदि भवसि वामः कथमपि ॥ १ ॥ कस्यचित् ।

चरणपतनप्रत्याख्यानात्प्रसादपराङ्मुखे
निभृतकितवाचारेत्युक्त्वा रुषा परुषीकृते ।
व्रजति रमणे निश्वस्योच्चैः स्तनस्थितहस्तया
नयनसलिलच्छन्ना दृष्टिः सखीषु निवेशिता ॥ २ ॥ अमरोः ।

विरहविषमः कामो वामः करोति तनुं तनुं
दिवसगणनादक्षश्चायं व्यपेतघृणो यमः ।
त्वमपि वशगो मानव्याधेर्विचिन्तय नाथ हे
किसलयमृदुर्जीवेदेवं कथं प्रमदाजनः ॥ ३ ॥ तस्यैव ।

कृत्वा नूपुरमूकतां चरणयोः संयम्य नीवीमणी-
नुद्दामध्वनिपण्डितान्परिजने किंचिच्च निद्रायति ।
तस्मिन्कुप्यति यावदस्मि चलिता तावद्विधिप्रेरितः
काश्मीरीकुचकुम्भविभ्रमकरः शीतांशुरभ्युद्गतः ॥४॥ कस्यचित् ।

मुक्तो मानपरिग्रहः सह सखीसार्थेन तत्कर्मणा
शक्ता त्वच्चरणप्रसादरहिता नाहं क्षणं प्राणितुम् ।
पश्य त्वं कृशकं शरीरकमिदं यां यामवस्थां गतं
सैषाहं तव पादयोर्निपतिता नाथ प्रसीदाधुना ॥५॥ कस्यचित् ।

## ८६ प्रोषितः

देशैरन्तरिता शतैश्च सरितामुर्वीभृतां काननै-
र्यत्नेनापि न याति लोचनपथं कान्तेति जानन्नपि ।
उद्ग्रीवश्चरणार्धरुद्धवसुधः कृत्वाश्रुपूर्णां दृशं
तामाशां पथिकस्तथापि किमपि ध्यायंश्चिरं वीक्षते ॥ १ ॥
अमरोः (श्रीहर्षस्य)

हारो नारोपितः कण्ठे मया विश्लेषभीरुणा।
इदानीमावयोर्मध्ये सरित्सागरभूधराः ॥ २ ॥ धर्मपालस्य।
भद्रात्र ग्रामके त्वं वससि परिचयस्तेन जानासि वार्ता-
मस्मिन्नध्वन्ययोषित्तरुणिमवयसि ध्याय काचिद्विपन्ना।
इत्थं पान्थः प्रवासावधिदिनगणनापायशङ्की प्रियायाः
पृच्छन्वार्तां समीपस्थितनिजभवनं व्याकुलो नोपयाति ॥ ३ ॥
कस्यचित्।

वसन्ताग्नौ मग्ना चिरविरहरुग्णा सहचरी
यदि प्राणान्मुञ्चेत्तदिह वधभागी भवतु कः।
वयो वा स्नेहो वा कुसुमसमयो वेति विमृशं-
स्तुहीति प्रव्यक्तं पिकनिकरझंकारमशृणोत् ॥ ४ ॥ पिकनिकरस्य।
सव्याधेः कृशता क्षतस्य रुधिरं दष्टस्य लालास्रवः
सर्वं नैतदिहास्ति तत्कथमसौ पान्थस्तपस्वी मृतः।
आ ज्ञातं मधुलम्पटैर्मधुकरैरारब्धकोलाहले
नूनं साहसिकेन चूतमुकुले दृष्टिः समारोपिता ॥ ५ ॥
राजशेखरस्य।

## ८७ पथिकः

सुप्ते ग्रामे नदति जलदे शान्तसंपातरम्यं
पान्थेनात्मव्यसनकरुणोदस्रु गीतं निशीथे।
स्फीतोत्कण्ठापरिगतधिया प्रोषितस्त्रीजनेन
ध्यानावेशस्तिमितनयनं श्रूयते रुद्यते च ॥ १ ॥ कस्यचित्।
मा गाः पान्थ पथामुना यदि तव भ्रातः प्रियं जीवितं
यच्चूताकृतिरत्र तिष्ठति महारौद्रः पुरो राक्षसः।
येनोद्यन्मकरन्दमुग्धमधुपव्याहारझंकारिणा
पान्थानामधुनैव निर्घृणधिया सार्थो हतः श्रूयते ॥ २ ॥ कस्यापि।
उपपरिसरं गोदावर्याः परित्यजताध्वगाः
सरणिमपरो मार्गस्तावद्भवद्भिरपेक्ष्यताम्।
इह हि विहितो रक्ताशोकः कयापि हताशया
चरणनलिनन्यासोदञ्चन्नवांकुरकञ्चुकः ॥ ३ ॥ कस्यचित्।
कस्मात्त्वं क नु दृश्यते सुखमुखं कास्तेन्धकारः परं
क स्त्रीषु स्मरधूमकेतुरुदितो दृष्टा युवानः क ते।
गन्ता क क च पञ्चमः क गणकृत्कात्संकुरोनिहृतः?
कानन्दैकरसोदयः क नु सती कैवाध्वगस्तत्कथा ॥ ४ ॥ कस्यचित्।

ग्रामेऽस्मिन्पथिकाय पान्थ वसतिर्नैवाधुना दीयते
पश्यात्रैव विहारमण्डपतले पान्थः प्रसुप्तो युवा ।
तेनोद्गीय खलेन गर्जति घने स्मृत्वा प्रियां तत्कृतं
येनाद्यापि करङ्कदण्डपतनाशङ्की जनस्तिष्ठति ॥ ५ ॥ कस्यचित् ।

## ८८ वर्षापथिकः ।

तावद्वाचः प्रयुक्ता मनसि विनिहिता जीविताशापि ताव-
न्निक्षिप्तौ तावदङ्घ्री पथि पथिकजनैर्लङ्घितास्तावदाशाः ।
नृत्यद्धाराकदम्बस्तवककवलयिता यावदेते न दृष्टा-
निर्मुक्तव्यालनीलद्युतिनवजलदव्याकुला विन्ध्यपादाः ॥ १ ॥
योगेश्वरस्य ।

लीलाम्भोजतमालकज्जलजलश्रीकण्ठकण्ठद्युते
भ्रातर्मेघ महेन्द्रचापरुचिरं व्यासज्य कण्ठे गुणम् ।
स्वैरं गर्ज मुहूर्तकं कुरु दयां सा बाष्पपूर्णेक्षणा
बाला बालमृणालकोमलतनुस्तन्वी न सोढुं क्षमा ॥ २ ॥

जलधरमुदितं विलोक्य दूरा-
दहह पदात्पदमेष न प्रयाति ।
अविरतनयनाम्बुदीर्घमुष्णं
श्वसिति कथं हतजीविनोऽध्वनीनः ॥ ३ ॥
कविचक्रवर्तिनः ।

निशीथे नलिनानां झटिति तडितां वीक्ष्य विषमं
घनानामाभोगं रसिकपथिकेनोन्मुखदृशा ।
न गीतं सोत्कण्ठं न च रुदितमुत्कम्पतरलं
न मुक्ता निश्वासाः स्फुटदनुमतं किं तु हृदयम् ॥ ४ ॥ वाह्लीकस्य ।

धीरं वारिधरस्य वारि किरतः श्रुत्वा निशीथे ध्वनिं
दीर्घोच्छ्वासमुदश्रुणा विरहिणीं बालां चिरं ध्यायता ।
अध्वन्येन विमुक्तकण्ठकरुणं रात्रौ तथा क्रन्दितं
ग्रामीणैर्व्रजतो जनस्य वसतिर्ग्रामे निषिद्धा यथा ॥ ५ ॥ अमरोः ।

## ८९ प्रोषितप्रियास्मरणम् ।

विवेकाद्स्माभिः परमपुरुषाभ्यासरसिकैः
कथं चिन्नीयन्ते रतिरमणवार्तैरपिहतैः ।
प्रियाया बालत्वदभिनववयोगोचरतनो-
र्न जानीमस्तस्या बत कथममी यान्ति दिवसाः ॥ १ ॥ कस्यचित् ।

आलम्ब्याङ्गणवाटिकापरिसरे स्वेच्छानतां शाखिकां
केयूरीभवदल्पशेषवलया बाला समस्तं दिनम् ।
सा दैवोपहृतस्य मूढमनसो भग्नावधेरद्य मे
पन्थानं विवृताश्रुणा वदनकेनालोक्य किं वक्ष्यति ॥ २ ॥

कस्यचित्

अनारब्धाक्षेपं परमकृतबाष्पव्यतिकरं
निगूढान्तस्तापं हृदयविनिपीतं व्यवसितम् ।
कृशाङ्ग्या यत्पापे व्रजति मयि नैराश्यपिशुनं
श्लथैरङ्गैरुक्तं हृदयमिदमुन्मूलयति तत् ॥ ३ ॥ कस्यचित् ।

उत्कम्पोऽपि सकम्प एव हृदये चिन्तापि चिन्तान्विता
निश्वासा अपि निश्वसन्त्यनिभृतं बाष्पोऽपि बाष्पायते ।
कान्तां संस्मरतो विदेशवसतेर्नक्तंदिवं कामिनः
प्ररोहा इव निष्पतन्ति मनसो दुःखानि दुःखान्वितात् ॥ ४ ॥

कस्यचित् ।

निरस्तालंकारां नयनजलसिक्ताधरपुटां
गवावस्तं याते द्विगुणतरखेदालसमुखीम् ।
अहो दूरस्थां तां करकमलविन्यस्तवदनां
प्रियां पश्यामीव स्मृतिशरणकुड्ये विलिखिताम् ॥ ५ ॥ कस्यचित् ।

## ६० प्रस्थानभङ्गः ।

प्रहरविरतौ मध्ये वाह्नस्ततोऽपि परेथ वा
किमुत सकले याते वाह्नि प्रिय त्वमिहैष्यसि ।
इति दिनशतप्राप्यं देशं प्रियस्य यियासतो
हरति गमनं बालालापैः सबाष्पगलज्जलैः ॥ १ ॥ अमरोः

लग्ना नांशुकपल्लवे भुजलता न द्वारदेशेऽर्पिता
नो वा पादयुगे मुहुर्निपतिता तिष्ठेति नोक्तं वचः ।
काले केवलमम्बुदालिमलिने गन्तुं प्रवृत्तः शठ-
स्तन्व्या बाष्पजलौघकल्पितनदीपूरेण रुद्धः प्रियः ॥ २ ॥ तस्यैव ।

मा याहीति निवारणं न च कृतं नैवावधिर्याचितो
नो बाष्पाम्बुकणावलीमलिनतां नीता कपोलस्थली ।
अर्घ्यव्याजमुपेतया दयितया संप्रस्थितस्याद्य मे
यात्राभङ्गकरी करे विनिहिता चौती नवा मञ्जरी ॥ ३ ॥

कस्यचित् ।

दूरं सुन्दरि निर्गतासि भवनादेष द्रुमः क्षीरवा-
नस्मादेव निवर्त्यतामिति शनैरुक्ताध्वगेन प्रिया ।

तस्या मन्युभरोच्छ्वसत्कुचयुगाभोगस्फुटत्कञ्चुकं
वीक्ष्योरस्थलमश्रुपूरितदृशा प्रस्थानभङ्गः कृतः ॥ ४ ॥
तरणिनन्दिनः ।

यामीत्युक्तवति व्रजेत्यभिहितं त्रस्तं विमुक्तासने
द्वित्राण्येव पदानि गच्छति गलद्बाष्पान्धमालोकितम् ।
निर्याते दयितेऽश्रुपूरितदृशा तन्मुग्धयानुष्ठितं
व्यासेधस्थितिपत्रकं प्रवसतां यज्जातमाजन्मनः ॥ ५ ॥ कस्यचित् ।

## ६१ विरही ।

प्रहर्ता क्वानङ्गः स च कुसुम बाणोऽल्पविशिख-
श्चलं सूक्ष्मं लक्ष्यं व्यवहितममूर्तं क्व च मनः ।
इतीमामुद्भूतां स्फुटमनुपपत्तिं मनसि मे
रुजामाविर्भावादनुभवविरोधः शमयति ॥ १ ॥
त्वं तस्यां यदि नाम रागविधुरं जातं विमुच्यैव मां
तत्केनाहमिदं किमप्यनुभवाम्यन्तः समुत्कण्ठितः ।
स्वस्थीभूय ननु क्षणं हृदय हे सद्भावमाचक्ष्व मां
किं संतापविखण्डितस्य भवतो वृत्तिर्द्विधा वर्तते ॥ २ ॥
अवन्तिवर्मणः ।

अप्येतद्रजनीमयं जगदथो निद्रामयी सा निशा
निद्रा स्वप्नमयी भवेदथ च स स्वप्नो मृगाक्षीमयः ।
सेयं मानमयी मम प्रियतमा तच्चाटुचेष्टामयो
मानः क्वेति समीहितैकविधये संकल्प तुभ्यं नमः ॥ ३ ॥
संगमविरहविकल्पे वरमिह विरहो न संगमस्तस्याः ।
संगे सैव तथैका त्रिभुवनमपि तन्मयं विरहे ॥ ४ ॥ धर्मकीर्तेः ।

विकल्परचिताकृतिं सततमेव तां वीक्षसे
सहासमभिभाषसे समुपगूहसे सर्वथा ।
प्रमोदमुकुलेक्षणं पिबसि चैतदस्या मुखं
तथापि च दिवानिशं हृदयं हे समुत्कण्ठसे ॥ ५ ॥ भर्वोः ।

## ६२ विरहिप्रियास्मरणम् ।

ललितललितस्निग्धालापास्मितस्नपिताधरं
दरमुकुलितापाङ्गद्रोणीतरङ्गितलोचनम् ।
इदमितइतः पश्यन्नेव प्रियामुखपङ्कजं
किमपि वदनाद्वैतं साक्षात्करोमि मृगीदृशः ॥ १ ॥ अभिमन्योः ।

मुखं ज्योत्स्नालोकप्रसरधवलार्द्रं क नु मया
पुनर्द्रष्टव्यं तत् स्मितमधुरमुग्धाल्पदशनम्।
क सा श्रव्या वाणी विजितकलकण्ठीकलरुता
विलासा वीक्ष्यन्तां क च सहभुवो धीरललिताः ॥ २ ॥
कर्णाटदेवस्य।

अपि स दिवसः किं स्याद्यत्र प्रियामुखपङ्कजे
मधु मधुकरीवास्मद्दृष्टिर्विकाशिनि पास्यति।
तदनु च मृदुस्निग्धालापक्रमाहितनर्मणः
सुरतसचिवैरङ्गैः सङ्गो ममापि भविष्यति ॥ ३ ॥ वार्तिककारस्य।

अश्यद्भिवह्नितमपस्खलदक्षरार्थ-
मुत्कम्पमानदशनच्छदमुच्छ्वसन्त्या।
अद्य स्मरामि परिमृज्य पटाञ्चलेन
नेत्रे तया किमपि यत्पुनरुक्तमुक्तम् ॥ ४ ॥ सोल्लोकस्य।

स्खलल्लीलापं विनिपतितकर्णोत्पलदलं
स्रवत्स्वेदक्लिन्नं सुरतविरतिक्षामनयनम्।
कचाकर्षक्रीडासरलधवलश्रोणिसुभगं
कदा तद्द्रष्टव्यं वदनमवदातं मृगदृशः ॥ ५ ॥ कस्यचित्।

## ६३ विलोकनम्

क्रमसरलितकण्ठं प्रक्रमोल्लासितारं
तरलितवलिलेखासूत्रसर्वस्वमस्याः।
स्थितमतिचिरमुच्चैरग्रपादांगुलीभिः
करकलितसखीकं मां दिदृक्षोः स्मरामि ॥ १ ॥ कालिदासस्य।

तत्तस्य निश्वासकृतानुयात्रैः सलीलमाकुञ्चितपक्ष्मपत्रैः।
नेत्रद्विरेफैर्वदनारविन्दमास्वादयन्त्यो लिलिहुस्तरुण्यः ॥ २ ॥
कस्यचित्।

भवनभुवि सृजन्तस्तारहारावतारान्
दिशि दिशि विदिशन्तः केतकानां कुटुम्बम्।
वियति च रचयन्त्यश्चन्द्रिकांमुग्धमुग्धां
प्रतिनयननिपाताः सुभ्रुवोविभ्रमन्ति ॥ ३ ॥ राजशेखरस्य।

तरत्तारं तावत्प्रथममथ चित्रार्पितमिव
क्रमादेवापाङ्गे सहजमिव लीलामुकुलितम्।
ततः किं चित्क्षुण्णं तदनु घनबाष्पाम्बुलहरी-
परिक्षामं चक्षुः पततु मयि तस्या मृगदृशः ॥४॥ वीर्यमित्रस्य।

यद्व्रीडाभरभुग्नमास्यकमलं विन्यस्य जानूपरि
प्रोद्यत्पद्मनिरीक्षितं विजयते सप्रेम वामभ्रुवः।
हास्यश्रीलवलाञ्छिता च यदसावस्याः कपोलस्थली
लोलल्लोचनगोचरं व्रजति स स्वर्गादपूर्वो विधिः ॥ ५ ॥
प्रद्युम्नस्य ।

## ६४ चित्रम् ।

प्रिया संनिहितैवेयं संकल्पस्थापिता पुरः ।
दृष्ट्वा दृष्ट्वा लिखाम्येनां यदि तत्कोत्र विस्मयः ॥ १ ॥
प्रभाकरदत्तस्य ।

रहसि सततोत्सङ्गन्यासादजस्र ⏑—⏑—
⏑ ⏑ ⏑ ⏑ ⏑ मर्षान्नित्यस्तनार्पणकेलिभिः ।
अनिशचरणोपान्तस्पर्शान्निरन्तरचुम्बनै-
रपिखलुतया — — लेख्यैः स चित्रपटीकृतः ॥ २ ॥
उमापतिधरस्य ।

मसीयं तूलीयं फलकमिदमेष त्वमधुना
जडोसि खिन्नोसि स्खलसि खलु पाणे कथमिव ।
अमुष्य प्रावीण्यं कलयसि न किं हन्त मनसो
विना यत्सामग्रीं सुभगशतमग्रे विलिखति ॥ ३ ॥ कस्यचित् ।
चित्रं चित्रगतोप्येष ममालि मदनोपमः ।
समुन्मूल्य बलाल्लज्जामुत्कण्ठयति मानसम् ॥ ४ ॥ रुद्रटस्य ।
तवालेख्ये कौतूहलतरल-तन्वी-विरचिते
निधायैका चक्रं रचयति सुपर्णासुतमपि ।
अथ स्विद्यत्पाणिस्खलितमपमृज्यैतदपरा
करे पौष्पं चापं मकरमुपरिष्टाच्च लिखति ॥ ५ ॥ कस्यचित् ।

## ६५ स्वप्नः ।

जाने सा गगनप्रसूनकलिकेवात्यन्तमेवासती
तत्संभोगरसाश्च तत्परिमलोल्लासा इवासत्समाः ।
स्वप्नेन छिषतेन्द्रजालमिव मे संदर्शिता केवलं
चेतस्तत्परिरम्भणाय तदपि स्फीतस्पृहं ताम्यति ॥ १ ॥
स्वप्नैर्नः प्रापितायाः प्रतिरजनि तव श्रीषु मग्नः कटाक्षः
श्रोत्रे गीतामृताब्धौ त्वगपि ननु तनूमञ्जरीसौकुमार्ये ।
नासा श्वासाधिवासेऽधरमधुनि रसज्ञा चरितेषु चित्तं
तन्नस्तन्वङ्गि कैश्चिन्न करणहरिणैर्वागुरा लङ्घितासि ॥ २ ॥
कविपंडितश्रीहर्षस्य ।

स्वप्न प्रसीद भगवन्क्षणमेकवारं
संदर्शय प्रियतमां क्षणमात्रमेव ।
दृष्ट्वा सती निविडबाहुनिबन्धलग्नं
तत्रैव मां नयति सा यदि वा न याति ॥ ३ ॥ कालिदासस्य ।
क पेयं ज्योत्स्नाम्भो वदत बिसवल्लीसरणिभि-
र्मृणालीतन्तुभ्यः सिचयरचना कुत्र भवतु ।
क वा पारीमेयो वत वकुलदाम्नां परिमलः
कथं स्वप्नः साक्षात्कुवलयदृशं कल्पयतु ताम् ॥ ४ ॥
राजशेखरस्य ।

तत्ताहक्कुचकुम्भभंगुरमुरस्तच्च त्रपामन्थरं
चक्षुः प्रेमगुरुर्मनोभवसमुद्भेदः स वामभ्रुवः ।
रे स्वप्न प्रसभापनीतदयितादोर्वल्लिबन्धस्य किं
सर्वं नीतवतोहमेव भवतो दैवादभूवं गुरुः ॥ ५ ॥
आचार्यगोपीकस्य ।

## ६६ नायकाभिलाषः ।

शिखरिणि क नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः ।
तरुणि येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः ॥ १ ॥
धर्मकीर्तेः ।

आर्यानङ्गमहाव्रतं विदधता विन्ध्यानिलैः पारणां
कृत्वा साङ्गमकारि केन मुरलाकूले कठोरं तपः ।
येनास्या रतिखेदमेदुरमृदुश्वासाधिवासस्पृशः
पीयन्तेधरसीधवो विहसितज्योत्स्नोपदंशं रहः ॥ २ ॥
योगेश्वरस्य ।

ध्यायन्किं दनुजद्विषं क्व नु महातीर्थे क्व पुण्ये क्षणे
कैर्वानिर्मलकर्मभिः करिपतिः प्राणव्ययं लम्भितः ।
धूते यद्दशनांशपाशकयुगं हाराभिरामोल्लस-
त्पुरन्ध्रस्तनमण्डलद्वयमिदं मृद्नन्ति मृद्नाति ते ॥ ३ ॥
आचार्यगोपीकस्य ।

अधीरादयाः पीनस्तनकलसमास्कन्दसि मुहुः
क्रमादूरुद्वन्द्वं कलयसि च लावण्यललितम् ।
भुजाश्लिष्टो हर्षादनुभवसि हस्ताहतिकला-
मये वीणादण्ड प्रकटय फलं कस्य तपसः ॥ ४ ॥ वाचस्पतेः ।
न नीलाब्जं चक्षुः सरसिरुहमेतन्न वदनं
न बन्धूकस्येदं मुकुलमधरस्तद्द्युतिधरः ।

ममाप्येषा भ्रान्तिः प्रथममभवद्भृङ्ग किमु ते
कृतं यत्तैरेभ्यो विरम विरमेत्यञ्जलिरयम् ॥ ५ ॥ राजशेखरस्य ।

## ९७ नायिकाभिलाषः ।

तिर्यग्वर्तितगात्रयष्टिविषमोद्वृत्तस्तनस्फालन-
त्रुट्यन्मौक्तिकमालया सपुलकस्वेदोल्लसद्गण्डया ।
दूरादेव विलोकयेत्यभिमते तद्वक्त्रदत्तेक्षणं
दुर्वारस्मरया तया सहचरी गाढं समालिङ्गिता ॥ १ ॥ रुद्रटस्य ।

अभिमुखगते यस्मिन्नेव प्रिये बहुशो वद-
न्यवनतमुखं तूष्णीमेव स्थितं मृगनेत्रया ।
अथ किल वलल्लीलालोलं स एष तथोक्षितः
कथमपि यथा दृष्ट्या मन्ये कृतं श्रुतिलङ्घनम् ॥ २ ॥ तस्यैव ।

व्याजृम्भणोन्नमितदन्तमयूखजाल-
व्यालम्बिमौक्तिकगुणं रमणे मुदेव ।
ऊर्ध्वं मिलद्भुजलतावलयप्रपञ्च
सत्तोरणं हृदि विशत्यपरा व्युदासे ॥ ३ ॥ तस्यैव ।

प्रविशति यथा गेहे तस्माद्बहिश्च विचेष्टते
वदति च यथा सख्या सार्धं सहासमिवोत्सुका ।
दयितनयनालोके मन्दं यथावनमत्यसौ
मृगदृशि तथैवास्यां शङ्के स्मरेण कृतं पदम् ॥ ४ ॥ तस्यैव ।

न जाने संमुखायाते प्रियाणि वदति प्रिये ।
सर्वाण्यङ्गानि मे यान्ति श्रोत्रतामुत नेत्रताम् ॥ ५ ॥ अमरोः ।

## ९८ तनुता ।

विगलन्तीं दधे यावद्दोष्णा जघनमेखलाम् ।
तावत्कलापवलयं विवेद गलितं न सा ॥ १ ॥ रुद्रटस्य ।

स्मरेण संतक्ष्य वृथैव बाणैर्लावण्यशेषां कृशतामनायि ।
अनङ्गतामप्ययमाप्यमानः स्पर्धां न सार्धं विजहाति तेन ॥ २ ॥
श्रीहर्षस्य ।

सर्वात्मना प्रहरतापि मनोभवेन
संदर्शितं परमकौशलमायताक्ष्याः ।
लावण्यविभ्रमविलासविचेष्टितानि
नो खण्डितानि गमिता च तनुस्तनुत्वम् ॥ ३ ॥ भासोकस्य ।

एकां कृत्वा तनुमनुपमां चन्द्रचूडेन सार्धं
यस्त्यक्तार्धः सततविरहक्लेशभागी भवान्या ।

तेनाङ्गानां रचितमुचितं संविभक्तेन कर्त्तु
नूनं दूनां तनुतनुलतां निर्ममे तां विरिञ्चिः ॥ ४ ॥ आचार्यगोपीकस्य ।
अपनिद्रमधूकपाण्डुरा सुदृशोऽदृश्यत गण्डमण्डली ।
गमिताश्रुजलप्लवैरिव कृशिमाकीर्णतयातिनिम्नताम् ॥ ५ ॥
बिल्हणस्य ।

## ९९ गुणकीर्तनम् ।

तद्वक्त्रं यदि मुद्रिता शशिकथा हा हेम सा चेद्द्युति-
स्तच्चक्षुर्यदि हारितं कुवलयैस्तच्चेत्स्मितं किं सुधा ।
धिक्कन्दर्पधनुर्भ्रुवौ च यदि ते किं वा बहु ब्रूमहे
यत्सत्यं पुनरुक्तवस्तुविमुखः सर्गक्रमो वेधसः ॥ १ ॥
दृष्टं चेन्मुखमुन्मुखेन शशिना धूमायिते लोचने
स्पृष्टा चेदिदमीयकान्तिकुलिशैः क्लिश्यन्ति हन्त त्वचः ।
जाताः स्मो बत वीणयापि बधिरास्तस्याः श्रुतं चेद्वचः
पीतश्चेदधरस्तदित्थमभजद्द्राक्षारसः क्षारताम् ॥ २ ॥
कस्यचित् ।
निर्माणनैपुणविधेरवधिर्विधातुरुद्दामधाममकरध्वजराजधानी ।
सा चन्द्रबिम्बवदना तरलायताक्षी साक्षादियं किमपि जन्म परिग्रहस्य ३
कस्यचित् ।
सा यैर्दृष्टा न वा दृष्टा मुषिताः सममेव ते ।
हृतं हृदयमेकेषामन्येषां चक्षुषः फलम् ॥ ४ ॥ कस्यचित् ।
आभरणस्याभरणं प्रसाधनविधेः प्रसाधनविशेषः ।
उपमानस्यापि सखे प्रत्युपमानं वपुस्तस्याः ॥ ५ ॥ कालिदासस्य ।

## १०० उद्वेगः

दुःखानि निष्पतत चिरं मम चित्तभूमौ
युष्माकमेव वसतिर्विधिना कृतेयम् ।
यद्दैवदुर्विलसितक्रकचप्रहारै-
श्छिन्नोपि न त्रुटति जीवनतन्तुबन्धः ॥ १ ॥ कस्यचित् ।
अग्न्यागारं कलयसि पुरश्चक्रवाकीव चन्द्रं
बद्धोत्कम्पं शिशिरमरुता दह्यसे पद्मिनीव ।
प्राणान्धत्से कथमपि बलाद्गच्छतःशल्यतुल्यां-
स्तत्केनासौ सुतनु जनितो मान्मथस्ते विकारः ॥ २ ॥ रुद्रटस्य ।
एते चूतमहीरुहोप्यविरलैर्धूमायिताः षट्पदै-
रेते प्रज्वलिताः स्फुटत्किसलयोद्भेदैरशोकद्रुमाः ।

एते किंशुकशाखिनोपि मलिनैरङ्गारिताः कुड्मलैः
कष्टं विश्रमयामि कुत्र नयने सर्वत्र वामो विधिः ॥ ३ ॥
वाक्कूटस्य ।

कान्तामुखं सुरतकेलिविमर्दखेद-
संजातघर्मकणविच्छुरितं रतान्ते ।
आपाण्डुरं तरलतारनिमीलिताक्षं
संस्मृत्य हे हृदय किं शतधा न यासि ॥ ४ ॥ कस्यचित् ।

चन्द्रोदञ्च चिरं मनोभवचमूचिह्नांशुकैरंशुभि-
र्मन्दं चन्दनशैलसौरभभरैश्चैत्रानिलाः सर्पत ।
उज्जृम्भस्व मधो मधुव्रतवधूवाचालवल्लीशतै-
श्चापंमण्डलयन्नयं विरहिणां प्राणैः स्मरः क्रीडतु ॥ ५ ॥
शान्त्याकरस्य ।

## १०१ विलापः

यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये तव मुखच्छायाभिरामः शशी ।
ये च त्वद्गमनानुकारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥ १ ॥
कालिदासस्य ।

दग्धा स्निग्धवधूविलासकदली वीणा समुन्मूलिता
पीता पञ्चमकाकली कवलिता शीतद्युतेः कौमुदी ।
प्लुष्टाः स्पष्टमनेकरत्ननिवहा नालं रतेः केवलं
कन्दर्पं हरता हरेण भुवनं निःसारमेतत्कृतम् ॥ २ ॥ रुद्रटस्य

स्निग्ध-श्यामलकान्तिलिप्तनियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।
कामं सन्तु दृढं कठोरहृदयो रामोस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ॥३॥ कस्यचित्

एह्येहि क्व गतासि मैथिलि मया प्राप्तो मृगः काञ्चनी-
मेतस्य त्वचमुच्चरामि कुचयोर्विन्यस्य वर्णांशुकम् ।
मत्सौभाग्यबुभुत्सयापि विपिनेष्वेकाकिनी मा स्म भू-
र्विद्विष्टा मयि सञ्चरन्ति सरले मायाविनो राक्षसाः ॥ ४ ॥
कस्यचित् ।

किं खिद्यसे भुज मुधाधर ताम्यसि त्वं
चक्षुर्विमुञ्च शुचमस्ति हृदि प्रियेयम् ।

आश्लेषचुम्बनविलोकनकेलयोऽपि
सेत्स्यन्ति यः स्फुटति मे हृदयं मुहूर्तात् ॥ ५ ॥ शान्त्याकरस्य

## १०२ चन्द्रोपालम्भः।

यस्तापः शमितो मृगाङ्क जगतां या म्लानिरुन्मूलिता
यामिन्या गगनस्य याः स्मृतिपथं नीतास्तमोवीचयः।
यत्क्षामत्वमपाकृतं जलनिधेर्यः कैरवाणां हृतो
मोहस्तत्कथमत्र दुःखिनि जने सर्वं समावेशितम् ॥ १ ॥
उमापतिधरस्य।

प्रियविरहमहौष्ण्यान्मुर्मुरामर्मलेखा
मयि हतक हिमांशो मा स्पृश क्रीडयापि।
इह हि तव लुठन्तः प्लोषभावं भजन्ते
दरजठरमृणालीकाण्डमुग्धा मयूखाः ॥ २ ॥ राजशेखरस्य।

सूतिर्दुग्धसमुद्रतो भगवतः श्रीकौस्तुभौ सोदरौ
सौहार्दं कुमुदाकरेषु किरणाः पीयूषधाराकिरः।
स्पर्धा ते वदनाम्बुजैर्मृगदृशां तत्स्थाणुचूडामणे
हंहो चन्द्र कथं नु मुञ्चसि मयि ज्वालामुचो वेदनाः ॥ ३ ॥
कस्यचित्।

मुखरय स्वयशो नवडिण्डिमं
जलनिधेः कुलमुज्ज्वलयाधुना।
अपि गृहाण वधूवधपौरुषं
हरिणलाञ्छन मुञ्च कदर्थनाम् ॥ ४ ॥ श्रीहर्षस्य।

आश्वासयति काकोऽपि दुःखितां पथिकाङ्गनाम्।
त्वं चन्द्रामृतजन्मापि दहसीति किमुच्यताम् ॥ ५ ॥
काश्मीरकमहामनुष्यस्य।

## १०३ मदनोपालम्भः।

नाथानङ्गनिदेशवर्तिनि जने कस्तेऽभ्यसूयारस-
श्चापारोपितसायकस्य भवतः को नाम पात्रं रुषः।
विश्राम्यन्तु शरा निषीदतु धनुः शिञ्जापि संयम्यतां
माकन्दांकुरकोमले मनसि नः को बाणमोक्षग्रहः ॥ १ ॥
गोवर्धनस्य।

देवेन प्रथमं जितोऽसि शशभृल्लेखाभृतानन्तरं
बुद्धेनोद्धतबुद्धिना स्मर ततः कान्तेन पान्थेन मे।

त्यक्त्वा तान्बत हंसि मामतिकृशां बालामनाथां स्त्रियं
धिक् त्वां धिक् तव पौरुषं धिगुदयं धिक्कार्मुकं धिक् शरान् ॥ २ ॥
विद्यायाः ।

आपुङ्खाग्रममी शरा मनसि मे मग्नाः समं पञ्च ते
निर्दग्धं विरहाग्निना वपुरिदं तैरेव सार्द्धं मम ।
कष्टं काम निरायुधोसि भवता जेतुं न शक्यो जनो
दुःखी स्यामहमेक एव सकलो लोकः सुखं जीवतु ॥ ३ ॥
राजशेखरस्य ।

हरसि हृदयं वेगादन्तः प्रविश्य शरीरिणा-
मथ जनयसि क्रीडाहेतोर्विकारपरम्पराम् ।
वितरसि मुहुर्मोहं पश्चान्निकृन्तसि जीवितं
कितव किमियं चेष्टा लोके तवार्यजनोचिता ॥ ४ ॥ गोशरणस्य ।

कष्टं हृदि ज्वलति शोकमयो ममाग्नि-
स्ते चक्षुषी च विरहज्वरजागरूके ।
एतन्मनो भ्रमति विष्वगसूंस्तथापि
त्वं पश्यतोहर इव स्मर हर्तुकामः ॥ ५ ॥ कस्यचित् ।

## १०४ मेघोपालम्भः ।

पाथोवाह किमम्बुभिः प्रियतमानेत्राम्बुसिक्ता मही
किं गर्जैः सुतनोरमन्दरुदितैरुज्जागरा भूरपि ।
वातैः शीकरिभिः किमिन्दुवदनाश्वासैः सबाष्पैरलं
सर्वं ते पुनरुक्तमेतदपुनःपूर्वा पुनर्मद्व्यथा ॥ १ ॥ देवबोधस्य ।

नो रुद्धं गगनं पयोदपटलैरुद्धं प्रियावाञ्छितं
नो शीर्णाः कमलाकराः कृशतनोः शीर्णा मनोवृत्तयः ।
नो पूरः सरितामपूरि दयितानेत्राम्बुकल्लोलिनी
धिग् धिङ्मारकदर्थितां व्यथयता पाथोभृता विं कृतम् ॥ २ ॥
तस्यैव ।

आक्रन्दाः स्तनितैर्विलोचनजलान्यश्रान्तधाराम्बुभि-
स्तद्विच्छेदभुवश्च शोकशिखिनस्तुल्यास्तडिद्विभ्रमैः ।
अन्तर्मे दयितामुखं तव शशी वृत्तिः समैवावयो-
स्तत्किं मामनिशं सखे जलधर त्वं दग्धुमेवोद्यतः ॥ ३ ॥
यशोधर्मणः ।

हंसानां गतयो हृता यदि तया कूजन्त्वमी सोत्सुका-
स्तत्केशैर्हृतबर्हकान्तय इमे नृत्यन्तु वा बर्हिणः ।

लावण्यं हृतमस्य दग्धशशिनस्तापं करोत्येष मे
यूयं गर्जथ यन्निरागसि मयीत्येतन्न युक्तं घनाः ॥४॥ कस्यचित् ।
दग्धा पूर्वमहं वसन्तसमये चूतांकुरैः कोकिलैः
प्रायः प्रावृषि गर्जितैः किमपरं कर्तव्यमद्य त्वया ।
दीना कान्तवियोगदुःखविधुरा क्षामा तनुर्वर्तते
क्षारं प्रक्षिपसि क्षते जलधर प्राणावशेषस्थितेः ॥ ५ ॥ कस्यचित् ।

## १०५ उन्मादः ।

अप्यामीलितपङ्कजां कमलिनीमप्युल्लसत्पल्लवं
वासन्तीमपि सौधभित्तिपतितामात्मप्रतिच्छायिकम् ।
मन्वानः प्रथमं प्रियेति पुलकस्वेदप्रकम्पाकुलं
प्रीत्यालिङ्गति नास्ति सेति च पुनः खेदोत्तरं मूर्च्छति ॥ १ ॥
कस्यचित् ।

नियमितमपि मानसं तपोभिः प्रविशति वैशसवारिधावगाधे ।
अयमपि चिरविस्मृतोपि धैर्यं व्यपनयतीव पुनर्मनोविकारः ॥२॥
कस्यचित् ।

व्याधूतं पवनेन पल्लवमिदं तस्याः क्व सा नाधरः
स्रंसन्ते कुसुमान्यमूनि न पुनर्बाष्पाम्भसां विप्रुषः ।
एषां झांकृतिराकुला मधुलिहामार्तो न मन्युध्वनि-
र्धिक् कष्टं द्रुमसंगता मृदुरियं वल्ली न मे वल्लभा ॥ ३ ॥
श्रीलक्ष्मणसेनस्य ।

क्वाकृत्यं शशलक्ष्मणः क्व च कुलं भूयोपि दृश्येत सा
दोषाणामुपशान्तये श्रुतमहो कोपेपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योधरं धास्यति ॥ ४ ॥
कालिदासस्य ।

अमी कारागारे निविडनलिनीनालनिवहै-
र्निबध्यन्तां हंसाः प्रथमबिसकन्दांकुरभिदः ।
नवे वासन्तीनामुदयिनि वने गर्भकलिका-
च्छिदो निर्धार्यन्तां परभृतयुवानो मदकलाः ॥ ५ ॥ कस्यचित् ।

## १०६ अनङ्गलेखः ।

ताडीदलं यदकठोरमिदं यदेषा मुद्रा स्तनाङ्कघनचन्दनपङ्कमूर्तिः ।
यद्बन्धनं बिसलतातनुतन्तुभिश्च कस्याश्चिदेष गलितस्तदनङ्गलेखः १॥
कस्यचित् ।

पाणिप्रेङ्खणतो विशीर्णशिरसः स्वेदाम्बुभग्नश्रिय-
स्तत्कृत्याकृतिलेशतो मनसि ते किंचित् प्रतीतिं गताः ।
वैचित्र्यापुनरुक्तलाञ्छनभृतः खण्डेन वामेन वा
व्याक्षेपं कथयन्ति पद्मलदृशो लेखाक्षरश्रेणयः ॥ २ ॥
राजशेखरस्य ।

कृतसरलमृणालीसूत्रसंतानबन्धः
कुचमुकुलमुखाङ्कश्चन्दनोपात्तमुद्रः ।
स्मरशबरशराणामेष लक्ष्यीभवन्तीं
कथयति ननु लेखस्तामनुद्घाटितोपि ॥ ३ ॥ कस्यचित् ।

तुल्यानुरागपिशुनं ललितानुबन्धं पत्त्रनिवेशितमुदाहरणं प्रियायाः ।
उत्पश्यतो मम सखे मदिरेक्षणायास्तस्याः समागतमिवाननमाननेन ४॥
कालिदासस्य ।

क्वापि स्वेदकणानिपातमसृणं कुत्रापि कम्पस्खल-
त्पाणिव्यस्तलिपि क्वचिद्घनपतद्बाष्पाम्बुलिप्ताक्षरम् ।
क्वापि श्वासमहोर्मिमर्मरमिदं ताडङ्कताडीदलं
वर्णैरेव विना व्यनक्ति सुदृशो भावैकतानं मनः ॥ ५ ॥
उमापतिधरस्य ।

## १०७ वनविहारः ।

उज्झन्त्यः स्वर्णकाञ्चीर्झणिति रशनया चम्पकन्यासमय्या
तन्वत्यस्तारहारान्विचकिलकलिकापंक्तिमुक्तावलीभिः ।
किंचाशोकप्रवालैररुणमणिमयान्संत्यजन्त्योवतंसा-
नुत्कीर्णाः कामबाणैरिव हृदि सुहृदो वल्लभानां बभूवुः ॥ १ ॥
राजशेखरस्य ।

दूरोदञ्चितबाहुमूलविलसच्चीनप्रकाशस्तना-
भोगव्यायतमध्यलम्बिवसनानिर्मुक्तनाभीह्रदा ।
आकृष्टोज्झितपुष्पमञ्जरिरजःपातावरुद्धेक्षणा
चिन्वत्याः कुसुमं धिनोति सुदृशः पादाग्रदुस्था तनुः ॥ २ ॥
उमापतिधरस्य ।

कङ्केल्लिरेष किमचेतन एव सत्यं
नम्रः स्वयं न कुसुमानि ददाति यस्ते ।
धूर्तोथवा नमति नायमुदस्तबाहु-
व्यक्तोन्नतस्तनतटान्तदिदृक्षयेव ॥ ३ ॥ तस्यैव ।

एतास्मिन्सुतनु लतागृहेतिरम्यं मालत्याः कुसुममनाचितं परेण ।
इत्युक्त्वा मृदुकरपल्लवं गृहीत्वा मुग्धाक्षीं रहसि निनाय कोपि धूर्तः ४॥
जयमाधवस्य ।

तासां पीनस्तनकलसयोः स्थूलमुक्ताभिरामा-
वेणीभूतास्त्रिवलिविषमे तिर्यगायामभाजः।
वक्त्रे लोलालकविलुलिताः केतकक्षोदलक्ष्मीं
प्राप्ताः क्रीडावनविहरणे विन्दवः स्वेदवाराम् ॥ ५ ॥ धोयीकस्य।

## १०८ जलक्रीडा।

आयासश्लथबाहुवल्लिरधिकस्मेरै ⏑ — — ⏑ —
लोलापाङ्गकपोलपालिरलिकस्तोमार्धलुप्तालका।
न्यस्यन्ती मदयत्यनावृत इव प्रच्छादनायाञ्चलं
मुग्धा स्वेदनिपीतसूक्ष्मसिचयव्यक्तस्तनी वक्षसि ॥ १ ॥
तुङ्गोकस्य।

अम्भोभिस्तनकुम्भयोस्तवघन — — ⏑ — — ⏑ —
— — — शुकरक्तिमप्रणयिनी सेयं न लुप्ता लिपिः।
किं चैतां कुसुमेषु कुञ्जरशिरोनक्षत्रमालां तिरो-
धित्सुर्निष्फलमेव मज्जसि नभःस्वच्छे सरोवारिणि ॥ २ ॥
धर्म्मशोकदत्तस्य।

मुग्धानना कापि सरोजपत्रे विलोलिताम्भःकणिकां विलोक्य।
प्रसारयामास जवेन पाणिं ससंभ्रमं मौक्तिकशङ्कयेव ॥ ३ ॥
वल्लभस्य।

विभ्राणास्तोयलग्नं वसनमरशनादामनि श्रोणिभारे
दूरादन्योन्यसाचिस्मितचतुरसखीकामिभिर्वीक्ष्यमाणाः।
उत्तेरुस्तीरलेखां विपुलकमलिनीपत्रमीषद्विलक्षा-
वक्षोजाग्रेषु कृत्वा हरिणशिशुदृशो वीतचीनांशुकेषु ॥ ४ ॥
धोयीकस्य।

मोक्तुं स्नानांशुकानि स्मररभसरसस्यानुकूलैर्दुकूलैः
संस्कर्त्तुं केशपाशानगुरुसुरभिणा धूपधूमोद्गमेन।
ताम्बूलोल्लेखरेखामपि विरचयितुं धौतपृष्ठेऽधरोष्ठे
तीरोत्तीर्णास्तरुण्यः क्षणमुपविविशुर्वल्लिकेलीगृहेषु ॥ ५ ॥
राजशेखरस्य।

## १०९ वेशः।

वक्त्रेन्दुर्मृगलाञ्छनेन वलितः पत्रावलीसंगमा-
त्कण्ठे कम्बुविडम्बिनि द्विगुणितास्तारापहारस्रजः।
दोर्वल्लीयुगले मृणालसुहृदि ग्रन्थिभ्रमायाङ्गदं
मन्ये भूषणमेव दूषणपदे तत्प्राप्य तस्या वपुः ॥ १ ॥ विरिञ्चेः।

कौसुम्भं कुचकुम्भयोर्निवसनं सौवर्णिकं कर्णयो-
स्ताडङ्कद्वयमाञ्जनी नयनयोरालेख्यलेखालिपिः ।
काश्मीरेण तमालपत्रमलिके हैमी करे कङ्कण-
श्रेणिः पाशयितुं जगन्त्यलमलंकाराः कुरङ्गीदृशः ॥ २ ॥

उमापतिधरस्य ।

दीर्घापाङ्गं नयनयुगलं भूषयत्यञ्जनश्री-
स्तुङ्गाभोगो प्रभवति कुचावर्चितुं हारयष्टिः ।
मध्यक्षामे वपुषि लभते स्थाम कूर्पासलक्ष्मीः
श्रोणीबिम्बे गुरुणि रशनादाम शोभां बिभर्त्ति ॥ ३ ॥ कस्यचित् ।

कण्ठे मौक्तिकमालिका स्तनतटे कार्पूरमर्घ्यं रजः
सान्द्रं चन्दनमङ्कके वलयिता पाणौ मृणालावली ।
तन्वी नक्तमियं चकास्ति शुचिनी चीनांशुके बिभ्रती
शीतांशोरधिदेवतेवं गलिता व्योमाग्रमारोहतः ॥ ४ ॥

राजशेखरस्य ।

इन्दोश्चन्दनविन्दुनैव दशनच्छायस्तदीयं मुखं
चक्रं लोचनभल्लमार्जनविधौ शाणस्य तत्कुण्डलम् ।
भिन्नानां कुचकन्दरा स्मितसुधाकुल्येव मुक्तावली
पादाब्जे ध्वनदिन्द्रनीलवलयं रोलम्बमालेव सा ॥ ५ ॥

शाण्डिल्यस्य ।

## ११० दूती-संवादः ।

उत्तिष्ठ यदि जीवन्तीं मामिच्छसि तमानय ।
अहं नेतुमशक्यापि सुदूरमिदमन्तरम् ॥ १ ॥ कस्यचित् ।

कामं निष्करुणं वेत्सि वेत्सि तं बहुवल्लभम् ।
दूति चूतांकुरखरा दिशो वेत्सि न वेत्सि किम् ॥ २ ॥ कस्यचित् ।

जीवितं जलतरङ्गविलोलं यौवनं त्रिचतुराणि दिनानि ।
शारद ⏑ ⏑ ⏑ — ⏑ ⏑ — — गच्छ दूति वद सत्वरमेतत् ॥ ३ ॥

कस्यचित् ।

यस्मिन्बाष्पतराङ्किताश्रुकलुषा दृष्टि ⏑ — — ⏑ —
नो हस्तेन विवर्तमानवलये — — ⏑ — — ⏑ — ।
येन स्त्रीहृदयस्य पद्ममृदुनः संभावितो नात्यय-
स्तं गत्वा हृदयं किमश्मसदृशं त्वं दूति वक्तुं क्षमा ॥ ४ ॥

कस्यचित् ।

दूति त्वं तरुणी युवा स चपलः श्यामास्तमोभिर्दिशः
संकेतः सरहस्य एष विपिने संकेतकावासकः ।

भूयो भूय इमे वसन्तमरुतश्चेतो नयन्त्यन्यथा
गच्छ क्षेमसमागमाय निपुणं रक्षन्तु ते देवताः ॥ ५ ॥
शीलाभट्टारिकायाः ।

## १११ स्त्रीविलोभनम् ।

प्रियतमभुजपञ्जरोपगूढा शशितिलकेषु विभावरीमुखेषु ।
अनुभव मदविभ्रमोपदिष्टान्यविनयदुर्ललितानि मन्मथस्य ॥ १ ॥
कस्यचित् ।

स्तनयुगवहनालसं च मध्यं चरणयुगं च नितम्बभारखिन्नम् ।
यदि वहसि विभर्षि किं वृथैकं हृदयमिदं दयितानुरागशून्यम् ॥ २ ॥
कस्यचित् ।

सुलभमनृजु जीवितान्यनित्यान्यतिसुभगे व्यतिपाति यौवनं च ।
अनुभव फलमात्मनो गुणानां दिवि सुखमस्ति न चापरोक्षमेतत् ॥३॥
कस्यचित् ।

यदि बृहज्जघनापघना तनुर्यदि च दीर्घविलोकितमाननम् ।
इदमुपैति रतेरविधेयतां वहति कस्य कृते मदनो धनुः ॥ ४ ॥
कस्यचित् ।

स्तनयुगमसिताक्षि सुन्दरीणां भवति ततः शुभमप्यबन्ध्यशोभम् ।
यदि किल लभते प्रियार्पितानां रसमुपगूहनपीडनामृतानाम् ॥ ५ ॥
कस्यचित् ।

## ११२ पुंविलोभनम् ।

स्मितमधुस्नपिताधरपल्लवामभिनवोल्लसितस्तनकुड्मलाम् ।
गुणफलां त्वमिमामबलालतां तरुरिवोद्वह पुष्पवतीं लताम् ॥ १ ॥
कस्यचित् ।

गृहीतं ताम्बूलं परिजनवचोभिः कथमपि
स्मरत्यन्तःशून्या सुभग विगतायामपि निशि ।
तथैवास्ते हस्तः कलितफणिवल्लीकिसलय-
स्तथैवास्यं तस्याः क्रमुकफलफालीपरिचितम् ॥ २ ॥ बिल्हणस्य ।

त्वं शीतलो नव्यजनानुरागी दूरान्तरस्तापवती च कान्ता ।
कामं न सक्ता शरदं विषोढुं स्थाने समाकाङ्क्षति साभिसर्तुम् ॥३॥
शब्दार्णवस्य ।

विकसिताधरमायतलोचनं पिब रहस्यभिराममिदं मुखम् ।
रुचिरपत्रविलम्बितकेशरं मधुकरः सरसीव सरोरुहम् ॥ ४ ॥
कस्यचित् ।

नागवल्लिरधिरोहतु पूगं रात्रिरेणतिलकेन समेतु ।
त्वामसौ भजति कोकिलकण्ठी वाचमर्चतु कवेः सुकृतोर्थः ॥ ५ ॥

## ११३ दूतिकोपालम्भः

निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥ १ ॥
सुविभोकस्य ।

स्वकार्यबुद्ध्यैव सदा मदर्थे दूति प्रवृत्तिं प्रतिपालयन्त्याः ।
त्वया फलेनैव विभावितोयं मया सहाभिन्नशरीरवादः ॥ २ ॥
छित्तोकस्य ।

अधरो वीतरागस्ते कषाये तव लोचने ।
विहारः कण्ठदेशस्ते दूति प्रव्रजितासि किम् ॥ ३ ॥ भिक्षोः ।
साधु दूति पुनः साधुकर्तव्यं किमतः परम् ।
यन्मदर्थे विलूनासि दन्तैरपि नखैरपि ॥ ४ ॥ तस्यैव ।
किं त्वं निगूहसे दूति स्तनौ वक्त्रं च पाणिना ।
सव्रणा एव शोभन्ते वीराधरपयोधराः ॥ ५ ॥ कस्यचित् ।

## ११४ नायिकागमनम् ।

शय्यागारं व्रजन्त्याश्चतुरसहचरीमुग्धमुग्धोक्तिमिश्रं
प्राणेशायाः स्मरज्यारणितमिव समाकर्ण्य मञ्जीरघोषम् ।
यामिन्याः पूर्वयामे विगलति विततौत्सुक्यमुज्जृम्भमाणो
धन्यो निद्राच्छलेन श्लथयति सुहृदां नर्मगोष्ठीप्रबन्धम् ॥ १ ॥
विक्रमादित्यस्य ।

नितम्बगुर्वी बहुशः श्रमेण विश्रम्य सोपानपदेषु काचित् ।
काञ्चीकरालम्बितवामपाणिरुत्थाय हर्म्यं कलमारुरोह ॥ २ ॥
राजशेखरस्य ।

एषाऽऽगतैव निबिरीसनितम्बबिम्ब-
भारेण पक्ष्मलदृशः क्रियते नु विघ्नः ।
यान्त्या इतीव दयितान्तिकमेणदृष्टे-
रग्रे जगाम गदितुं लघु चित्तवृत्तिः ॥ ३ ॥ रत्नाकरस्य ।
प्रकामं संपातं नयन तव संपन्नमभित-
स्तवाप्यासं चेतः फलमिह मनोराज्यलतया ।
स्मरायासप्रोषप्रशमविधिसिद्धौषधिरियं
स्फुरन्ती संप्राप्ता शशधरकलेव प्रियतमा ॥ ४ ॥ कस्यचित् ।

चेतः कातरतां जहीहि सपदि स्थैर्यं समालम्ब्यता-
मायाता स्मरमार्गणव्रणपरित्राणौषधिः प्रेयसी ।
यस्याः श्वाससमीरसौरभपतद्भृङ्गावलीवारण-
क्रीडाचञ्चलपाणिकङ्कणझणत्कारो मुहुर्मूर्छति ॥ ५ ॥ कस्यचित् ।

## ११५ नायकागमनम् ।

संकीर्णं शयनीयमर्पय कुरु द्वेधोपधानक्रिया-
मभ्यासे कुरु तालवृन्तकमिति व्यापारयन्त्या सखीम् ।
आयातस्य पुनर्विलासभवनं कन्दर्पदीक्षागुरो-
रभ्युत्थानमपि प्रमोदजडया नाविष्कृतं सुभ्रुवा ॥ १ ॥

जलचन्द्रस्य ।

द्वारागतं काप्यवगम्य कान्तमुन्नम्य वक्त्रं सिचयाञ्चलेन ।
विमुञ्चती मत्त(ण्)डन कर्मदीर्घं यथायथात्मानमलंचकार ॥ २ ॥

राजशेखरस्य ।

काप्यागतं वीक्ष्य मनोधिनाथं समुत्थिता सादरमासनाय ।
करेण शिञ्जद्वलयेन तल्पमास्फालयन्ती कलमाजुहाव ॥ ३ ॥

तस्यैव ।

प्रियतममवलोक्य स्वाश्रयादुत्पतन्त्याः
सरभसमपरस्याः पादमूले सलीलम् ।
अपतदथ कराग्रादुच्छ्रत्नात्मदर्शः
शशधर इव वक्त्रच्छायया निर्जितश्रीः ॥ ४ ॥ कस्यचित् ।

द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसारश्रिया
प्रोल्लास्योरुयुगं परस्परसमासक्तं समापादितम् ।
आनीतं पुरतः शिरोंशुकमधः क्लृप्ते चले लोचने
वाचस्तत्र निवारितं प्रसरणं संकोचिते दोर्लते ॥ ५ ॥ कस्यचित् ।

## ११६ वाद्यम् ।

पुरन्ध्रीणां पीनैस्तुलितपरिणाहस्तनतटै-
र्द्रुतं संमृज्यन्तां करकिसलयैर्झर्झरपुटाः ।
कलं गुञ्जन्मुग्धं पिबतु मधुदिग्धाधरदलं
मुखं नीलो वेणुः कमलमिव माला मधुलिहाम् ॥ १ ॥

विशाखदत्तस्य ।

धत्ते व्यक्तिं रसितमसकृज्जर्जरं झर्झराणां
स्तोकोत्तुङ्गध्वनितलहरी — ˘ — — ˘ — — ।
— — स्निग्धैः करकिसलयैराहताः किन्नराणां
शब्दायन्ते नवघनघटामन्द्रनादं मृदङ्गाः ॥ २ ॥ उमापतिधरस्य ।

नान्तः कर्षन्ति केषां कृतपदरचनैः पामरग्रामनारी
वक्षोजोत्तुङ्गतुम्बीफलानिहतमृदूत्सर्पिगम्भीरशब्दैः ।
उद्गीताः शृङ्गकोटीस्थगितकरशिखालोलकल्लोलवीणा-
तन्त्रीक्वाणानुरूपध्वनिभिरभिनयव्याहृताः काव्यबन्धाः ॥ ३ ॥

कस्यचित् ।

वक्षोजाभोगगुर्वीमुखरयति युगं कांस्ययोः कापि कान्ता
प्रेयोदत्तव्रणालीविधुरितमधरं वेणवे कापि दत्ते ।
काचित्कृत्वाङ्गभङ्गं प्रसृतमुदमिव स्निग्धमुग्धप्रणादं
वारं वारं कराभ्यां प्रहरति मुरजं गीतसंवादरम्यम् ॥ ४ ॥

कालिदासनन्दिनः ।

वीणया च निनदेन च वेणोः केकया च कलकण्ठगिरा च ।
शीत्कृतैश्च रणितैश्च वधूनां भुञ्जते श्रुतिसुखानि युवानः ॥ ५ ॥

राजशेखरस्य ।

## ११७ नृत्यम् ।

रम्यं गायतु वा तरङ्गयतु वा व्यावर्तनैर्भ्रूलते
व्यालोलं नयनं च नर्तयतु वा क्षुण्णः स एष क्रमः ।
शृङ्गारं पुनरातनोति मधुरव्यावर्तना नर्तकी
प्रत्यङ्गं रसपेशलानि करणान्याधाय यन्नृत्यति ॥ १ ॥ प्रियंवदस्य ।

विलोला भ्रूवल्ली मसृणतरला दृष्टिरधरः
स्मितस्निग्धो धीरा गतिरलसमेवाङ्गचलनम् ।
स्वभावप्रव्यक्तोन्नतनतविभागा तनुलता
विभावो लास्येन स्फुरति कतरोऽस्या मृगदृशः ॥ २ ॥

उमापतिधरस्य ।

वामं सन्धिस्तिमितनयनं न्यस्य हस्तं नितम्बे
कृत्वास्याग्रे विटपसदृशं हस्तमुक्ताद्वितीयम् ।
पादांगुल्या लुलितकुसुमे कुट्टिमे पातिताङ्कं
नृत्यादस्याः स्थितमतितरां कान्तमत्यायतार्धम् ॥ ३ ॥

कालिदासस्य ।

अङ्गैरन्तर्निहितरचनैः सूचितः सम्यगर्थः
पादाण्न्यासो लयभवगतस्तन्मयत्वं रसेषु ।
शाखायोनिर्मृदुरभिनयः सत्त्वकम्पानुवृत्तौ
भावाभावं नुदति विषयाभागबन्धः स एव ॥ ४ तस्यैव ।

ननृतुरनतिखेदं कौशिकीवृत्तिचञ्च-
च्चटुलचरणचारी-चारुचित्राङ्गहावाः।
निजहृदयनिमज्जन्मारनाराचसाची-
कृतवदनविनिद्राम्भोजभाजो युवत्यः॥ ५॥ हरेः।

## ११८ गीतम्।

अलसमुकुलिताक्षं वक्त्रमालोक्य तस्या
मयि विलुलितचित्ते मूकभावं प्रपन्ने।
श्रवणकुवलयान्तश्चारिणा षट्पदेन
क्षणमनुगतनादं गीतमन्तः स्मरामि॥ १॥
श्रीमल्लक्ष्मणसेनस्य।

नाधन्यैः क्षणदाविराममधुराः किंचिद्विनीता रसैः
श्रोत्रैः — ⌣ ⌣ — ⌣ — ⌣ ⌣ ⌣ — — — ⌣ पेया नि च।
श्रूयन्ते मृदुपीतवक्त्रमरुतः पौराणरीतिक्रम-
व्यालोलाङ्गुरिरुद्धमुग्धसुषिर-श्रेणीरवा वेणवः॥ २॥
योगेश्वरस्य।

विलासमसृणोल्लसन्मुसललोलदोः कन्दलाः
परस्परपरिस्खलद्वलयनिः स्वनोद्धुरन्धुराः।
चलन्ति कलहुंकृतिप्रसभकम्पितोरस्थल-
त्रुटद्गमकसंकुलाः कलमकण्डनीगीतयः॥ ३॥ तस्यैव।
चिन्वानाभिर्मधूकं मधुरमधुकरध्वानिचूतांकुराग्र-
ग्रासव्यग्रान्यपुष्टध्वनितधृतजयारम्भसंरम्भणाभिः।
गीयन्ते वल्लवीभिः पथिकसहचरीप्राणयात्राप्रदीपाः
प्रातः प्रातर्वसन्तस्वररचितपदोद्गारिणो गीतिभेदाः॥ ४॥
विरिञ्चेः।

क्वचिन्मसृणमांसलं क्वचिदतीव तारं पदे
प्रसन्नसुभगं मुहुः सुरतरङ्गलीलान्वितम्।
इदं हि तव वल्लवीरणितानिर्गतैर्जल्पितं
मनो मदयतीव मे किमपि साधु संगीतकम्॥ ५॥ वामनस्य।

## ११९ द्यूतम्।

आश्लेषचुम्बनरतोत्सवकौतुकानि
क्रीडा दुरोदरपणः प्रतिभूरनङ्गः।
भोगः समयद्यपि जये च पराजये च
यूनोर्मनस्तदपि वाञ्छति जेतुमेव॥ १॥ मुरारेः।

आश्लेषप्रथमं क्रमेण विजिते कृत्ये धनस्यार्पणं
केलिद्यूतविधौ पणं प्रियतमे कान्तां पुनः पृच्छति ।
अन्तर्गाढविगूढमन्मथरसस्फारीभवद्गण्डया
स्वैरं शारिविसारणाय निहितः स्वेदाम्बुगर्भः करः ॥ २ ॥
योगेश्वरस्य ।

तथा गृहीतस्तन्वङ्ग्या विजयोपार्जितः करः ।
यथा धन्याधरोष्ठेन हारितेपि जितं मया ॥ ३ ॥ कस्यचित् ।
अक्षदेवनपणीकृतेधरे कान्तयोर्जयपराजये सति ।
अत्र वेत्ति यदि वक्ति मन्मथः कस्तयोर्जयति जीयतेपि वा ॥ ४ ॥
जयवर्द्धनस्य ।

सोत्कण्ठा च पराङ्मुखी च पुरतो बाला सखीकौशला-
दक्षद्यूतविधौ विजित्य मदनक्रीडापणं प्रेयसः ।
सानन्दा जयतोपि जृम्भितघनव्रीडापि संभोगतः
संत्यक्तुं न च याचितुं न च परिच्छेदे बभूव प्रभुः ॥ ५ ॥
जलचन्द्रस्य ।

## १२० दृष्टिः ।

निरवधिरकूपारः पीतः पुरा मुनिना मुहु-
र्निजकरपुटोत्सङ्गेनेदं मृषोद्यमभूदपि ।
यदि न विदुषां धैर्याम्भोधिं गभीरमवज्ञया
नयननलिनीनालाकृष्टं पिबन्ति मृगीदृशः ॥ १ ॥
धर्मयोगेश्वरस्य ।

प्रेयांसमीक्षितुमथेक्षणतारकस्य दूरादपाङ्गपदवीमभिधावतोस्याः ।
आनन्दबाष्पजलबिन्दुनिभेन सान्द्राः स्वेदाम्बुसीकरकणा इव संनिपेतुः
कस्यचित् ।

विस्फाराः प्रथमं कुतूहलवशादुत्क्षिप्तपक्ष्मश्रियो
जातव्रीडमथो विनम्रसरलाः किंचिद्विलोलास्ततः ।
अभ्यासं पुनराकलय्य कलया कान्तं कुरङ्गीदृशां
सिञ्चन्तीव सुधाच्छटाभिरनृजुप्रागल्भ्यगर्भा दृशः ॥ ३ ॥
वीर्यमित्रस्य ।

— — ˘ वान् ˘ ˘ ˘ — ˘ ˘ — ˘ दूत्यो-
वाग्देवतापि न सुखं यदपि व्यनक्ति ।
तत्कूटगर्वितदरस्फुटभावभाजो-
व्याकुर्वते मृगदृशां दृश एव तत्त्वम् ॥ ४ ॥
आश्चर्यस्तिमिताः क्षणं क्षणमथ प्रीतिप्रमीलत्पुटा
वातान्दोलित — ˘ — ˘ ˘ ˘ — पीयूषधारामुचः ।

एताः कस्य हरन्ति हन्त न मनः किंचित्त्रपामञ्जुल (चञ्चल)
प्रेमप्रेरणमत्र मुग्धमुरचत्तारोत्तरा दृष्टयः ॥ ५ ॥ शंकरधरस्य ।

## १२१ कटाक्षः ।

प्रणाली-दीर्घस्य प्रसृमरतरङ्गस्य सुहृदः
कटाक्षव्याक्षेपाः शिशुशफरफालप्रतिभुवः ।
सुधायाः सर्वस्वं कुसुमधनुषोस्मान्प्रति सखे
नवं नेत्राद्वैतं कुवलयदृशः संनिदधति ॥ १ ॥
तिष्ठन्त्या जनसंकुलेपि सुदृशा सायं गृहप्राङ्गणे
तत्कालं मयि निःसहालसतनौ वीथ्यां मृदु प्रेङ्खति ।
ह्रीनम्राननयैव लोलसरलं निश्वस्य तत्रान्तरे
प्रेमार्द्राः शशिखण्डपाण्डिममुषो मुक्ताः कटाक्षच्छटाः ॥ २ ॥
कस्यचित् ।
उपरि कवरीबन्धग्रन्थीनथ ग्रथितांगुली-
र्निजभुजतले तिर्यक्कृत्वा वितत्य विवृत्तया ।
विवृतविलसद्वामापाङ्गस्तनार्द्धकपोलया
कुवलयदलस्रक्संदिग्धश्रियः प्रहिता दृशः ॥ ३ ॥ परमेश्वरस्य ।
वैदग्ध्यक्रमवद्धमुग्धहसितज्योत्स्नावलिप्ताधरे
लब्धा किं नु कुरङ्गशावनयने दीक्षा त्वया मान्मथी ।
लीलानन्तरमन्मथाः शशिमुखि क्षिप्यन्त एताः कथं
कुन्देन्दीवरदीर्घदामतरलस्निग्धाः कटाक्षच्छटाः ॥ ४ ॥
भंगुरस्य ।
स्वच्छन्दं मीनकेतोर्युवजनमृगयाजातकौतूहलस्य
जातावन्धावगच्छत्याधिगतगरिमा कार्मुकोत्तंसलक्ष्मीम् ।
यावल्लोलाक्षि नायं प्रतिफलति वलच्चन्द्रिकाकर्बुरान्तः
कालिन्दीवीचिमैत्रीमवतरति तत्रागोत्रसाक्षी कटाक्षः ॥ ५ ॥
जलचन्द्रस्य ।

## १२२ नायिकाचाटुः ।

पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयो-
र्नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याधरे ।
लीयन्ते कवरीषु बान्धवजनव्यामोहमुग्धाशया
दुर्वारा मधुपाः कियन्ति तरुणि स्थानानिरक्षिष्यसि ॥ १ ॥
पाणिनेः ।
शोणस्तेधरपल्लवोमधुमती कान्तिर्गिरो नर्मदा
दृष्टिर्दिव्यतरङ्गिणीव वदनश्रीश्चन्द्रभागोपमा ।

गम्भीरा नलिनाक्षि नाभिरपि चेत्तद्देहदाहज्वर-
च्छेदाय क्षणमात्रमम्बुजमुखि त्वं बाहुदा मे भव ॥ २ ॥ दङ्कस्य ।

मुग्धे नार्जुनतां जहाति नयनं मध्ये तथा कृष्णतां
द्वे रूपे दधतामुना विरचितः कर्णेन ते विग्रहः ।
तत्कृष्णार्जुनकर्णविग्रहवती साक्षात्कुरुक्षेत्रतां
यातासि त्वदवाप्तिरेवतरुणि श्रेयःकिमन्यत्परम् ॥ ३ ॥
सत्यबोधस्य ।

तव नयनवन्नीलाम्भोजं तवाननवच्छशी
तवहसितवज्ज्योत्स्नाद्योतस्तवोदितवत्सुधा ।
सुभगमधुराभोगै — — ˘ — ˘ ˘ — ˘ —
प्रणयिनि जगत्संभाराणां त्वमित्युपमास्पदम् ॥ ४ ॥ प्रियंवदस्य ।

स्वर्गे स्वर्गादपि समधिके साधनं बोधयन्तः
सन्तु प्रीत्यै मम पुनरमी तन्वि खेदाय वेदाः ।
येषां मध्ये कथयति न चेदीदृशः कोऽप्युपाय=
— — — — ˘ ˘ ˘ ˘ — प्रेष्यतां येन यामि ॥ ५ ॥ सागरस्य ।

## १२३ मधुपानम् ।

अर्धपीतमदिरा मणिपारी शोभतां(ते) कथमतीव तरुण्याः ।
चुम्बितैरधिकपाटलभासा पूरिताधरमयूखभरेण ॥ १ ॥
जयमाधवस्य ।

संक्रान्तमाननमवेक्ष्य मृगेक्षणायाः
पार्यां चलन्नयनमासवपूरितायाम् ।
सेन्दीवरं कमलमित्यवगम्य दूरा-
द्भृङ्गो ममज्ज सहसैव यथार्थनामा ॥ २ ॥
काश्मीरचण्डमाधवस्य ।

कान्ताननामृतरसाधरतृष्णयेव
विम्बं पपात शशिनो मधुभाजने यत् ।
निः शेषिते मधुनि लज्जिताचित्तवृत्ति
तत्तन्मुखाब्जजितकान्तितया विनष्टम् ॥ ३ ॥ विभाकरशर्मणः ।

पीतस्तुषारकिरणो मधुनैव सार्ध-
मन्तःप्रविश्य चषके प्रतिविम्बवर्ती ।
मानान्धकारमपि मानवतीजनस्य
नूनं बिभेद यदसौ प्रससाद सद्यः ॥ ४ ॥ रत्नाकरस्य ।

ललितकण्ठनिवेशितदोर्लतः करतलाकलितैकपयोधरः ।
मृगदृशो दशनच्छदवासितं मधु पपौ मदनोत्सवमीश्वरः ॥ ५ ॥
मुञ्जस्य ।

## १२४ शयनाधिरोहणम् ।

अथ रतिरभसादलीकनिद्रामधुराविघूर्णितलोचनोत्पलाभिः ।
शयनतलमशिश्रियन्वधूभिः सह मदमन्मथमन्थरा युवानः ॥ १ ॥

रत्नाकरस्य ।

प्रत्यङ्गं प्रतिकर्म नर्मपरया कृत्वाधिरूढं स्मरा-
दौत्सुक्यं प्रतिलोक्य मोहनविधौ चातुर्यमालोक्य च ।
सद्यो यावकमण्डनं न रचितं पादे कुरङ्गीदृशा
स्मेरान्ता विशदच्छदे च शयने दृष्टिः समारोपिता ॥ २ ॥

राजशेखरस्य ।

पर्यङ्काङ्कतलं गते रतिरसाव्यक्तक्रमं वल्लभे
तद्भावावगतौ तया प्रियतमे स्वच्चित्तमाविष्कृतम् ।
नात्तं यन्मणिकुण्डले परिहृतो हारः समं कङ्कणैः
काञ्चीदाम निराकृतं विचकिलैः क्लृप्तश्च को शेखरः ॥ ३ ॥

तस्यैव ।

काञ्च्या गाढतरं निबद्धवसनप्रान्ता किमर्थं पुन-
र्मुग्धाक्षी स्वपितीति तत्परिजनं स्वैरं प्रिये पृच्छति ।
मातः सुप्तमपीह वारयति मामित्याहितक्रोधया
पर्यस्य स्वपनच्छलेन शयने दत्तोवकाशस्तया ॥ ४ ॥ अमरोः ।

तत्र हंसधवलोत्तरच्छदं जाह्नवीपुलिनचारुदर्शनम् ।
अध्यशेत शयनं प्रियासखः शारदाभ्रमिव रोहिणीपतिः ॥ ५ ॥

कालिदासस्य ।

## १२५ आलिङ्गनम् ।

उद्भिन्नसात्त्विकविकारपरिप्लवानि सद्यस्तिरस्कृतमनोभववेदनानि ।
तन्वि त्वदङ्गपरिरम्भसुखामृतानि प्रादुर्भवन्तु पुनरागतजीवितानि १ ॥

कस्यचित् ।

समैव सर्वत्रचरित्रपद्धतिर्निजः परो वा गुणिनां न विद्यते ।
चकार हारः ⏑ ⏑ — ⏑ — ⏑ — ततः परीरम्भविधौ द्वयोरपि ॥ २ ॥

नारायणस्य ।

द्रष्टुं केतकगर्भपत्रसुभगामूरुप्रभामुत्सुक-
स्तत्संवाहनलीलया च शनकैरुत्क्षिप्तचण्डातकः ।
लज्जामुग्धविलोचनं स्मितसुधानिर्धौतबिम्बाधरं
किञ्चिद्विश्लथबाहुबन्धनमसावालिङ्गितो बालया ॥ ३ ॥

कस्यचित् ।

भयमुकुलितचक्षुः संततोत्कम्पनीवी
मणिमुखरितकाञ्चिः श्वासशुष्यन्मुखश्रीः ।
अशिथिलभुजबन्धन्यासनिःशङ्कलग्ना-
मम वपुषि विशन्तीवायताक्षी धिनोति ॥ ४ ॥ उमापतिधरस्य ।
आनन्दानतमीलिताक्षियुगलं किं त्वं मुधा तिष्ठसि
ज्ञातोसि प्रकटप्रकम्पपुलकैरङ्गैः स्थितं मुग्धया ।
मुञ्चैनां जड किं न पश्यसि गलद्बाष्पाम्बुधौताननां
सख्यैवं गदिते विमुच्य रभसात्कण्ठे विलग्नो मया ॥ ५ ॥ कस्यापि ।

## १२६ चुम्बनम् ।

रसवदमृतं कः संदेहो मधून्यपि नान्यथा
मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम् ।
सकृदपि पुनर्मध्यस्थः सन्रसान्तरविज्जनो
वदतु यदिहान्यत्स्वादु स्यात्प्रियारदनच्छदात् ॥ १ ॥ कस्यचित् ।
कियन्तंचित्कालं दशनपदभीताधरदलं
ललाटप्रस्वेदस्खलदलकमुत्तालनयनम् ।
निषेधानुज्ञातं पुलकितकपोलं प्रियतमो-
वधूवक्त्राम्भोजं रसयति च निर्वर्णयति च ॥ २ ॥ अभिनन्दस्य ।
फलमलघु किं लीलावल्ल्या गृहं नु गुणश्रिया-
ममृतमथवैकस्थं पिण्डीकृतं नु रसायनम् ।
निधिरुत रतेः सर्वस्वं वा विलासविधेः प्रियै-
रिति न ललनाबिम्बोष्ठानां रसः परिचिच्छिदे ॥ ३ ॥ शिवस्वामिनः ।
शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं-
लज्जामन्थरतारकेण सहसा बाला चिरं चुम्बिता ॥ ४ ॥ अमरोः ।
संदष्टाधरपल्लवा सचकितं हस्ताग्रमाधुन्वती
मामा मुञ्च शठेति कोपवचनैरानर्तितभ्रूलता ।
सीत्काराञ्चितलोचना सरभसं यैश्चुम्बिता मानिनी
प्राप्तं तैरमृतं मुधैव मथितो मूढैः सुरैः सागरः ॥ ५ ॥ तस्यैव ।

## १२७ अधर-खण्डनम् ।

दृशा सपदि मीलितं दशनरोचिषा निर्गतं
करेण परिवेपितं वलयकैस्तथा क्रन्दितम् ।
प्रियैः सपदि योषितां नवे विखण्ड्यमानेधरे

परव्यसनकातराः किमिति कुर्वतां साधवः ॥ १ ॥ कस्यचित् ।
सलीलनिर्धूतकरारविन्द-सीत्कारसंधुक्षितमन्मथायाः ।
जग्राह बिम्बाधरमूढरागं रागं रमण्या हृदयं च कान्तः ॥ २ ॥
रत्नाकरस्य ।

यद्दन्तदष्टदशनच्छदना चकार
सीत्कारमाकुञ्चितनेत्रयुगा मृगाक्षी ।
मन्ये तदेतदधरामृतपानसेक-
निर्वाप्यमाणविरहज्वरवह्निशब्दम् ॥ ३ ॥ जयंकरस्य ।
नान्दीपदानि रतिनाटकविघ्नशान्ता-
वाशाक्षराणि परमाण्यथवा स्मरस्य ।
दष्टेऽधरे प्रणयिना विधुताग्रपाणेः
सीत्कारशुष्करुदितानि जयन्ति नार्याः ॥ ४ ॥ वामनस्य ।
संदष्टेऽधरपल्लवे प्रणयिना हस्ताम्बुजव्याधुति-
प्रेङ्खत्काञ्चनकङ्कणावलिकलव्याहारमिश्रश्रियः ।
सीत्कारा हृदयस्पृशो रतिरणक्रीडासु वामभ्रुवां
राजन्ते विजयोद्धुरस्मरचमूक्ष्वेडानिनादा इव ॥ ५ ॥
युवतीसंभोगकारस्य ।

## १२८ नखक्षतम् ।

राजन्ति कान्तनखरक्षतयो मृगाक्ष्या
लाक्षारसद्रवमुचः कुचयोरुपान्ते ।
अन्तःप्रवृद्धमकरध्वजपावकस्य
शङ्के विभिद्य हृदयं निरगुः स्फुलिङ्गाः ॥ १ ॥ कस्यापि ।
जयन्ति कान्तास्तनमण्डलेषु विटार्पितान्यार्द्रनखक्षतानि ।
लावण्यसंभारनिधानकुम्भे मुद्राक्षराणीव मनोभवस्य ॥ २ ॥
कस्यचित् ।

पीनतुङ्गकठिनस्तनान्तरे कान्तदत्तमबला नखक्षतम् ।
आवृणोति विवृणोति वीक्षते लब्धरत्नमिव निर्धनो जनः ॥ ३ ॥
कस्यचित् ।

नखक्षतं यन्नवचन्द्रसंनिभं स्थितं कृशाङ्गि स्तनमण्डले तव ।
इदं तरीतुं त्रिवलीतरङ्गिणीं विराजते पञ्चशरस्य नौरिव ॥ ४ ॥
कस्यचित् ।

काश्मीरपङ्कखचितस्तनपृष्ठताम्रपट्टावकीर्णदयितार्द्रनखक्षताली ।
एणीदृशः कुसुमचापनरेन्द्रदत्ता जैत्रप्रशस्तिरिव चित्रलिपिर्विभाति ५
दक्षस्य ।

## १२९ कण्ठकूजितम् ।

कान्ते विचित्रसुरतक्रमबद्धरागे संकेतकेपि मृगशावकलोचनायाः ।
उत्कूजितं किमपि येन तदीयतल्पं नाल्पैः परीतमनुशब्दितलावकौघैः१
रुद्रटस्य ।

कान्ते तथा कथमपि प्रथितं मृगाक्ष्या
चातुर्यमुद्धतमनोभवया रतेषु ।
तत्कूजितान्यनुवदद्भिरनेकवारं
शिष्यायितं गृहकपोतशतैर्यथास्याः ॥ २ ॥ कस्यापि ।

॥ ३ ॥

॥ ४ ॥

॥ ५ ॥

## १३० वस्त्राकर्षः ।

अंसाकृष्टदुकूलया सरभसं गूढौ भुजाभ्यां स्तना-
वाकृष्टे जघनांशुके कृतमधःसंसक्तमूरुद्वयम् ।
नाभीमूलनिबद्धचक्षुषि तया व्रीडानताङ्ग्या प्रिये
दीपः फूत्कृतिवातवेपितशिखः कर्णोत्पलेनाहतः ॥ १ ॥
कर्णोत्पलस्य ।

समाकृष्टं वासः कथमपि हठात्पश्यति तदा
क्रमादूरुद्वन्द्वं जरठशरगौरं मृगदृशः ।
तया दृष्टिं दत्त्वा महति मणिदीपे निपुणया
निरुद्धं हस्ताभ्यां झगिति निजनेत्रोत्पलयुगम् ॥ २ ॥ कस्यचित् ।

अम्बरं विनयतः प्रियपाणेर्योषितश्च करयोः कलहस्य ।
वारणामिव विधातुमभीक्ष्णं कक्षया च वलयैश्च शिशिञ्जे ॥ ३ ॥
माघस्य ।

॥ ४ ॥

॥ ५ ॥

## १३१ नवोढासंभोगः ।

दृष्टा दृष्टिमधो ददाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्य तिष्ठति बलादालिङ्गिता वेपते ।
निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते
जाता वामतयैव संप्रति मम प्रीत्यै नवोढा प्रिया ॥ १ ॥

श्रीहर्षदेवस्य ।

चुम्बनेषु परिवर्तिताधरं हस्तरोधि रशनाविघट्टने ।
विघ्नितेच्छमपि तस्य सर्वतो मन्मथेन्धनमभूद्वधूरतम् ॥ २ ॥

कालिदासस्य ।

पटालग्ने पत्यौ नमयति मुखं जातविनया
हठाश्लेषं वाञ्छत्यपहरति गात्राणि निभृतम् ।
न शक्नोत्याख्यातुं स्मितमुखसखीदत्तनयना
ह्रिया ताम्यत्यन्तः प्रथमपरिहासे नववधूः ॥ ३ ॥ अमरोः ।

हस्तं कम्पयते रुणद्धि रशनाव्यापारलोलाङ्गुली-
र्द्वौहस्तौ नयति स्तनावरणतामालिङ्ग्यमाना बलात् ।
पातुं पक्ष्मलनेत्रमुन्नमयतः साचीकरोत्याननं
व्याजेनाप्यभिलाषपूरणसुखं निर्वर्तयत्येव मे ॥ ४ ॥

कालिदासस्य ।

सखीनां शिक्षाभिः कथमपि गता वासभवनं
ततः प्रेमालापैः शयनमुपनीतापि विमुखी ।
मयि क्रीडारम्भप्रणयिनि परं वेपथुमती
तथापीयं बाला हृदयमधिकं सम्मदयति ॥ ५ ॥ शंकरधरस्य ।

## १३२ रतारम्भः ।

आनन्दोद्गमबाष्पपूरपिहितं चक्षुः क्षमं नेक्षितुं
बाहू सीदत एव कम्पविधुरौ शक्तौ न कण्ठग्रहे ।
वाणी साध्वसगद्गदाक्षरपदा संक्षोभलोलं मनो
यत्सत्यं प्रियसंगमोपि सुचिरादादौ वियोगायते ॥ १ ॥

कस्यचित् ।

अन्योन्यसंवलितमांसलदन्तकान्ति
सोल्लासमाविरलसंवलितार्धतारम् ।
लीलागृहे प्रतिकलं किलकिञ्चितेषु
व्यावर्तमानविनयं मिथुनं चकास्ति ॥ २ ॥ वामनस्य ।
समालिङ्गत्यङ्गैरपसरति यत्प्रेयासि वपुः

पिधातुं यद्दृश्यं घटयति घनालिङ्गनमपि ।
तपोभिर्भूयोभिः किमु न कमनीयं सुकृतिना-
मिदं रम्यं वाम्यं मदनविवशाया मृगदृशः ॥ ३ ॥ कस्यचित् ।

उन्मीलत्पुलकोङ्कुरेण निविडाश्लेषे निमिषेण च
क्रीडाकूतविलोकितेधरसुधापाने मुधा नर्मभिः ।
आनन्दाभिगमेन मन्मथकलायुद्धेपि यस्मिन्नभू-
त्प्रत्यूहः स तयोर्बभूव सुरतारम्भः प्रियंभावुकः ॥ ४ ॥

जयदेवस्य ।

हस्तस्वस्तिकलाञ्छितां कुचतटीं सोढः स्पृशन्मुग्धया
प्रस्विद्यद्वलिवल्लरीकमुदरं गच्छन्निरुद्धो मनाक् ।
ऊर्वोर्मूलमुपेयिवानथ शनैर्मामेति लज्जाजडं
जल्पन्त्या सुरतातिथिः किल रुषा पाणिस्तलेनाहतः ॥ ५ ॥

युवतीसंभोगकारस्य ।

## १३३ रतम् ।

क्लेशोल्लासितलोचनं श्लथपतद्दोर्वल्लि केलिस्खल-
द्धम्मिल्ल श्वसितोत्तरङ्गमपरिस्पन्दं वहन्ती वपुः ।
मुञ्चेति स्खलिताक्षरेण वचसा तन्वी यथा याचते
विश्रामाय तथाधिकं रतविधावाकूतमुन्मीलति ॥ १ ॥

कस्यचित् ।

भावोद्गाढमुपोढकम्पपुलकैरङ्गैः समालिङ्गितं
रागाच्चुम्बितमप्युपेत्य वदनं पीतञ्च वक्त्रामृतम् ।
जल्पन्त्यैव मुहुर्नेनेति निभृतं प्रस्तब्धचारित्रया
निःशेषेण समापितो रतविधिर्वाचा तु नाङ्गीकृतः ॥ २ ॥

कस्यचित् ।

अङ्गानि श्लथनिःसहानि नयने मुग्धालसे विभ्रम-
श्वासोत्कम्पितकोमलस्तनमुरः सायाससुप्ते भ्रुवौ ।
किं चान्दोलनकौतुकव्युपरतावास्येषु वामभ्रुवां
स्वेदाम्भःस्तपिताकुलालकलतेष्वावासितो मन्मथः ॥ ३ ॥

गोसोकस्य ।

साक्षेपं च सचाटुकं प्रलपतोः प्रेमालसं पश्यतो-
रुत्सूत्रं च ससूत्रमेव च परीरम्भोत्सवं कुर्वतोः ।
आकृष्यालकमाननं च पिबतोरुद्दामकण्ठध्वनि-
क्रीडाडम्बरयोर्जयत्यनुपमावस्थं रहः प्रेयसोः ॥ ४ ॥

युवतीसंभोगकारस्य ।

सोत्कण्ठं परिपश्यतोरपि मुहुः सोत्प्रासमाजल्पतोः
सानन्दं च सकौतुकं च मदनव्यापारमभ्यस्यतोः ।
दम्पत्योर्नवयौवनोज्ज्वलवपुःसौन्दर्यरम्यश्रियोः
शृङ्गारः कृतकृत्यएष मदनाधानैकहेतुः स्फुटम् ॥ ५ ॥

प्रियंवदस्य ।

## १३४ विपरीतरतम् ।

आलोलामलकावलिं विलुलितां बिभ्रच्चलत्कुण्डलं
किंचिन्मृष्टविशेषकं तनुतरैः स्वेदाम्भसां शीकरैः ।
तन्व्या यत्सुरतान्तनान्तनयनं वक्त्रं रतिव्यत्यये
तत्त्वां पातु चिराय किं हरिहरब्रह्मादिभिर्दैवतैः ॥ १ ॥ अमरोः ।

नाधन्यान्विपरीतमोहनरसप्रेङ्खन्नितम्बस्थली-
लोलद्भूषणकिङ्किणीकलरवव्यामिश्रकण्ठस्वनम् ।
संरम्भश्लथकेशबन्धविगलन्मुक्ताकलापत्रुट-
च्छ्रासच्छेदतरङ्गितस्तनयुगं प्रीणाति शृङ्गारिणी ॥ २ ॥

सोल्लोकस्य ।

विकीर्णो धम्मिल्लः श्रमसलिलविन्दुस्तवकितो
मुखेन्दुर्व्याकोषं श्वसितमिदमाः साधु सुभटे ।
अमुष्मिन्प्रारम्भे चलवलितमुक्तासरमुरः
परं तूष्णीमेते दधति रशनादाम्नि मणयः ॥ ३ ॥

केन्द्रनीलनारायणस्य ।

माराङ्के रतिकेलिसंकुलरणारम्भे तया साहस-
प्रायं कान्तजनाय किंचिदुपरि प्रारम्भि यत्संभ्रमात् ।
निष्पन्दा जघनस्थली शिथिलिता दोर्वल्लिरुत्कम्पितं
वक्षो मीलितमक्षि पौरुषरसः स्त्रीणां कुतः सिध्यति ॥ ४ ॥

जयदेवस्य ।

सोत्कम्पश्वसितोत्तरं सपुलकस्वेदार्द्रगण्डस्थली-
खेलत्कुण्डलमस्फुटस्मितमिलन्मन्दाक्षमुग्धेक्षितम् ।
संभेदेषु मिथो दृशां सुकृतिनः कस्यापि कान्तानन्नं
प्रभ्रश्यत्कवरीपरीतमुरसि स्मेरस्य विश्राम्यति ॥ ५ ॥

आवन्तिकजह्नोः ।

## १३५ विपरीतरताख्यानम् ।

रिपुः प्रेमारम्भे प्रथममभवन्नूपुररव-
स्तमाक्षेप्तुं पाणिः प्रसरति सवाचालवलयः ।

यदारब्धं किंचित्तदुपशमहेतोः सखि मया
तदा तद्वैगुण्यं द्विगुणयति काञ्चीकलकलः ॥ १ ॥ विरिञ्चेः ।

पर्यस्तस्तनकर्मकीर्णकवरीभारं समुन्मूलित-
स्रग्दाम स्वयमन्यदेव तदुपक्रान्तं मया साहसम् ।
संपन्नाः सखि तस्य केलिविधयः प्राच्याः परं दुर्वह-
श्रोणीभारभरान्मनीषितसहस्रांशोपि नासादितः ॥ २ ॥
शरणदेवस्य ।

पश्यास्त्रेपविशीर्णचन्दनरजःपुञ्जप्रकर्षादियं
शय्या संप्रति कोमलाङ्गि परुषेत्यारोप्य मां वक्षसि ।
गाढोष्ठग्रहपूर्वमाकुलतया पादाग्रसंदंशके-
नाकृष्याम्बरमात्मनो यदुचितं धूर्तेन तत्प्रस्तुतम् ॥ ३ ॥
विल्हणस्य ।

दाक्षिण्यादतिमानतो रसवशाद्विश्रामहेतोर्मम
प्रागल्भ्यात्तदनुष्ठितं मृगदृशा शक्यं न यद्योषिताम् ।
निर्व्यूढं न यदा तया तदखिलं खिन्नैस्तत्तारकैः
सव्रीडैश्च विलोकितैर्मयि पुनर्न्यस्तः समस्तो भरः ॥ ४ ॥
महाकवेः ।

पुरारूढप्रेमप्रबलरसरागेण हृतया
समारब्धं कर्तुं न हि यदबलाभावसदृशम् ।
अनिर्व्यूढे तस्मिन्प्रकृतिसुकुमाराङ्गलतया
पुनर्लज्जालोलं मयि विनिहितं लोचनयुगम् ॥ ५ ॥
कोङ्कस्य ।

## १३६ रतान्तः ।

आवृण्वाना झटिति जघनं मद्दुकूलाञ्चलेन
प्रेङ्खल्लीलालुलितकवरीबन्धनव्यग्रपाणिः ।
अर्द्धोच्छ्वासस्फुटनखपदालङ्कृताभ्यां स्तनाभ्यां
दृष्टा धाष्टर्यादवनतमुखी सा मया मोहनान्ते ॥ १ ॥
राजशेखरस्य ।

करकिसलयं धूत्वा धूत्वा विमार्गति वाससी
क्षिपति सुमनोमालाशेषं प्रदीपशिखां प्रति ।
स्थगयति करं पत्युर्नेत्रे विहस्य समाकुला
सुरतविरतौ रम्या तन्वी मुहुर्मुहुरीक्षते ॥ २ ॥ कस्यापि ।

छिन्नार्धोरुकमेखलं चरणयोः संक्रान्तलाक्षारसं
तल्पोपान्तमुदीक्ष्य सस्मितसखीवैलक्ष्यसंभ्रान्तया ।

तन्वङ्ग्या दृढदंशदन्तुरदरोच्छूनाधरोत्सङ्गया
क्षिप्ताः प्रेयसि कूटकोपकुटिलभ्रूविभ्रमा दृष्टयः ॥ ३ ॥
धर्मयोगेश्वरस्य ।

पर्यस्तालकपाङ्क्ति लुप्ततिलकं निष्पीतरागाधरं
श्वासोत्कम्पिपयोधरं श्रमभयस्वेदार्द्रगण्डस्थलम् ।
तन्वङ्ग्याः श्लथनीवि मुक्तकबरीभारं रतान्ते वपु-
र्दृष्टं मुग्धविलोकितस्मितमभूदानन्दनिस्यन्दि नः ॥ ४ ॥
श्रीकरस्य ।

नयनमलसं स्वेदाम्भोभिः करम्बितमाननं
स्खलितकबरीभारावंसौ श्लथा भुजवल्लरी ।
इति मृगदृशः संभोगान्ते विलोक्य वपुः श्रियं
व्रजति नियतं कन्दर्पोऽपि स्वबाणशरव्यताम् ॥ ५ ॥ शङ्करधरस्य ।

## १३७ उषसि प्रियादर्शनम् ।

सम्भ्रान्त्या गलितस्रजं स्तनतटव्यस्तस्खलद्वाससो
बध्नन्त्याः शिथिलां झणत्कृतिमतीं काञ्चीं नितम्बस्थले ।
कामिन्याः सरसं निशान्तसमये वक्रा विलुप्ताञ्जना
नाधन्ये निपतन्ति पाटलरुचो निद्रालसा दृष्टयः ॥ १ ॥
कस्यचित् ।

उषसि निविडयन्त्या (न्त) कुण्डलं केलिपर्या-
विलविगलितमन्तः कर्णपालि प्रियायाः ।
सरसहसिततिर्यग्भंगुरापाङ्गरीतिः
सुकृतिभिरवलीढा लोचनाभ्यां मुखश्रीः ॥ २ ॥ रुद्रनन्दिनः ।
प्रियायाः प्रत्यूषे गलितकबरीबन्धनविधा-
वुदञ्चद्दोर्वल्लीदरचलितचोलाञ्चलमुरः ।
घनाकूते पश्यत्यथ मयि समन्दाक्षहासितं
नमन्त्यास्तद्रूपं यदि लिखितुमीशो मनसिजः ॥ ३ ॥ धोयीकस्य ।

मसृणमसृणं प्रेयःप्रातर्निवार्य वपुः स्वकं
तदनु च तिरोधाय स्वैरं रतोत्सवमण्डनम् ।
त्रिचतुरपदं गत्वा तस्मान्निवर्तितकन्धरं
स्नपयति दृशा पुण्यात्मानं कम्प्युषसि प्रिया ॥ ४ ॥
शतानन्दस्य ।

अस्याः पाटलपाणिजाङ्कितमुरो निद्राकषाये दृशौ
निर्धौताधरशोणिमा विलुलितस्रस्तस्रजो मूर्धजाः ।

काञ्चीदाम दरश्लथाञ्चलमिति प्रातर्निखातैर्दृशो-
रेभिःकामशरैस्तदद्भुतमभूद्यन्मे मनः कीलितम् ॥ ५ ॥
जयदेवस्य ।

## १३८ नायिका-निष्क्रमणम् ।

विरामे यामिन्या उपकुचयुगोरूपजघनं
समालम्ब व्यस्ताञ्चलमलसमुत्थाय शयनात् ।
हसित्वा संमुग्धं मधुरमवलोक्याथ शिथिलै-
र्भुजैर्निर्यान्तीभिः सुदृढमुपगूढः प्रियतमः ॥ १ ॥
वासुदेवज्योतिषः ।

निद्रामीलितचक्षुषो रतिभरश्रान्तस्य पत्युर्भुजौ
स्वैरं कण्ठतटादपास्य शनकैराकृष्य वस्त्राञ्चलम् ।
उत्थाय क्लमनिःसहैरवयवैस्तिर्यक्चलल्लोचनं
व्यावृत्ता वदनेन वासभवनान्निर्यान्ति वामभ्रुवः ॥ २ ॥ कस्यापि ।

प्रत्यग्रदंशजनितश्वयथून्सलील-
मम्भोजकोमलकरांगुलि कोटिभागैः ।
बिम्बाधरान्मधुरसीत्कृति संस्पृशन्त्यः
कान्ताः प्रयान्ति दयितान्तिकतोऽधुनैताः ॥ ३ ॥ रत्नाकरस्य ।

विदलितकुचपाणिजाङ्कलेखादरभिदुरोरुभरालसा कृशाङ्गी ।
उषसि निधुवनोपभोगजिह्मा यदि गृहमेति सखी बलाबलेन ॥ ४ ॥
योगोकस्य ।

निर्यान्त्या रतिवेश्मनः परिणतप्रायां विलोक्य क्षपां
गाढालिङ्गनचुम्बनानि बहुशः कृत्वाप्यसंतुष्टया ।
एकं भूमितले निधाय चरणं तल्पे प्रकल्प्यापरं
तन्वङ्ग्या परिवर्तिताङ्गलतया प्रेयांश्चिरं चुम्बितः ॥ ५ ॥
कस्यापि ।

## १३९ रतप्रशंसा ।

यत्नात्संगममिच्छतोः प्रतिदिनं दूतीकृताश्वासयो-
रन्योन्यं परितुष्यतोरवसरप्राप्तिस्पृहां तन्वतोः ।
संकेतोन्मुखयोश्चिरात्कथमपि प्राप्ते क्रमाद्दर्शने
यत्सौख्यं नवरक्तयोस्तरुणयोस्तन्केन साम्यं व्रजेत् ॥ १ ॥
भट्टचूलितकस्य ।

स स्वर्गादपरो विधिः स च सुधासेकः क्षणान्नेत्रयो-
स्तत्साम्राज्यमखण्डितं तदपरं प्रेम्णः प्रतिष्ठास्पदम् ।

यद्बाला बलवन्मनोभवभयभ्रश्यत्त्रपं सत्रपा
तत्कालोचितनर्मकर्म दयितादभ्यासमभ्यस्यति ॥ २ ॥ कस्यापि ।
सव्रीडार्धनिरीक्षणं यदुभयोर्यद्दूतिकाप्रेषणं
चाद्यश्वो भविता समागम इति प्रीत्या प्रमोदश्च यः ।
प्राप्ते चैव समागमे सरभसं यच्चुम्बनालिङ्गना-
न्येतत्कामफलं तदेव सुरतं शेषः पशूनामपि ॥ ३ ॥ कस्यापि ।
सीत्कारवन्ति दरमीलितलोचनानि
रोमाञ्चमुञ्चि तनुघर्मकणावलीनि ।
एणीदृशां मकरकेतुनिकेतनानि
वन्दामहे सुरतविभ्रमचेष्टितानि ॥ ४ ॥ कस्यचित् ।
हारावली त्रुटति न प्रणयः प्रियाणा-
मारवण्ड्यतेऽधरदलं न मनोभवाज्ञा ।
यस्मिन्विलेपनमपैति न चानुराग-
स्तन्मोहनं न खलु मैथुनमन्यदस्मात् ॥ ५ ॥ केशटस्य ।

## १४० सखीनां मिथः कथा ।

कान्ते तल्पमुपागते विगलिता नीवी स्वयं बन्धना-
द्वासश्च श्लथमेखलागुणधृतं किञ्चिन्नितम्बे स्थितम् ।
एतावत्सखि वेद्मि केवलमहं तस्याङ्गसङ्गे पुनः
कासौ कास्मि रतं च कीदृशमिति स्वल्पापि मे न स्मृतिः ॥ १ ॥
विकटनितम्बायाः ।
धन्यासि यत्कथयसि प्रियसङ्गमेपि
नर्मस्मितं च वचनं च रसं च तस्य ।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः शपामि यदि किंचिदपि स्मरामि ॥ २ ॥ विद्यायाः ।
आक्षे वाससि रोद्धुमक्षमतया दोःकन्दलीभ्यां स्तनौ
तस्योरस्थलमुत्तरीयविषये सख्यो मया चिन्तितम् ।
श्रोणीं तस्य करेऽधिरोहति पुनर्व्रीडाम्बुधौ मामथो
मज्जन्तीमुदतारयन्मनसिजो देवः स मूर्छागुरुः ॥ ३ ॥ वल्लणस्य ।
हर्षाश्रुपूरितविलोचनया मयाद्य
किं तस्य तत्सखि निरूपितमङ्गमङ्गम् ।
रोमाञ्चकञ्चुकतिरस्कृतदेहया वा
ज्ञातानि तानि परिरम्भसुखानि किं वा ॥ ४ ॥
अचलदासस्य ।

मा गर्वमुद्वह कपोलतले चकास्ति
कान्तस्वहस्तलिखिता मम मञ्जरीति ।
अन्यापि किं न सखि भाजनमीदृशानां
वैरी न चेद्भवति वेपथुरन्तरायः ॥ ५ ॥ केशटस्य ।

## १४१ शुकोक्तिव्रीडा ।

प्रयच्छाहारं मे यदि तव रहोवृत्तमखिलं
माया वाच्यं नोच्चैरिति गृहशुके जल्पति शनैः ।
वधूर्वक्त्रं व्रीडाभरनमितमन्तर्विहसितं
हरत्यर्धोन्मीलन्नलिनमलिनावर्जितमिव ॥ १ ॥ डिम्बोकस्य ।

प्रत्यूषे गुरुसंनिधौ गृहशुके तच्चद्रहोजल्पितं
प्रस्तोतुं परिहासकारिणि पदैरर्धोदितैरुद्यते ।
क्रीडाशारिकया निलीप निभृतं त्रातुं भयार्तां वधूं
प्रारब्धः सहसैव संभ्रमकरो मार्जारगर्जारवः ॥ २ ॥
मार्जारस्य ।

त्वद्गण्डस्थलपाण्डु देहि लवलं देहि त्वदोष्ठारुणं
बिम्बं देहि नितम्बिनि त्वदलकश्यामं च मे जाम्बवम् ।
इत्यक्षुण्णमनोज्ञचाटुजनितव्रीडः पुरन्ध्रीजनो
धन्यानां भवनेषु पञ्जरशुकैराहारमभ्यर्थ्यते ॥ ३ ॥ वाक्कूटस्य ।

उषसि गुरुसमक्षं लज्जमाना मृगाक्षी
रतिरुतमनुकर्तुं राजकीरे प्रवृत्ते ।
तिरयति शिशुलीला-नर्तनच्छद्मताल-
प्रचलवलयमालास्फालकोलाहलेन ॥ ४ ॥ भवभूतेः ।

दम्पत्योर्निशि जल्पतोर्गृहशुकेनाकर्णितं यद्वच-
स्तत्प्रातर्गुरुसंनिधौ निगदतस्तस्योपहारं वधूः ।
कर्णालङ्कृतिपद्मरागशकलं विन्यस्य चञ्चूपुटे
व्रीडार्ता विदधाति दाडिमफलव्याजेन वाग्बन्धनम् ॥ ५ ॥
अमरोः ।

## १४२ प्रत्यूषः ।

क्षुण्णान्येव तमांसि किंतु दधति प्रौढिं न सम्यग्दशो-
र्वासः संवृतमेव किन्तु जहति प्राणेश्वरं नाबलाः ।
पारावारगतैश्च कोकमिथुनैरानन्दतो गद्गदं
साकूतं रुतमेव किन्तु सहसा झात्कृत्य नोड्डीयते ॥ १ ॥ वसुकल्पस्य ।

पत्यौ पात्रे कलानां व्रजति गतिवशादस्तमिन्दौ क्रमेण
क्रन्दन्ती पत्त्रिरावैर्विगलिततिमिरस्तोमधम्मिल्लभारा।
प्रभ्रंशिस्थूलमुक्ताफलनिकरपरिस्पर्धितारायबिन्दुः
प्रोन्मीलत्पूर्वसन्ध्याहुतभुजि रजनी पश्य देहं जुहोति ॥ २ ॥
योगेश्वरस्य।

उत्कण्ठाकुलचक्रवाकयुवतीनिश्वासदण्डाहतः
पीयूषद्युतिरच्छदर्पणतुलामारोहति प्रस्थितः।
कोकानां कृपयेव कुक्कुटरवैराहूयमाने रवौ
दिग्जाता नवधौतविद्रुममणिच्छाया च सौत्रामणी ॥ ३ ॥
शुभाङ्कस्य।

प्रालेयाम्भःशिशिरपवनापीयमानश्रमाणां
कण्ठोपान्तास्तिमितनमितैकैकदोःकन्दलीनाम्।
नानाक्रीडाजनितरजनीजागरेणोपनीतो
निद्राभोगः स्थगयति दृशौ सांप्रतं दम्पतीनाम् ॥ ४ ॥ सुरभेः।

ताराणां विरलोधुना परिकरः स्मेरं नभो वर्तते
मञ्जिष्ठारसपाटलेन महसाक्रान्ता च पूर्वा ककुम्।
किंचान्यत्स्मरजागरूकविहगद्वन्द्वस्य दुःखच्छिदो-
मित्रस्यागमनं व्यनक्ति बिसिनीनिद्रादरिद्रः क्षणः ॥ ५ ॥
कामदेवस्य।

## १४३ सूर्योदयः।

अयमुदयति मुद्राभञ्जनः पद्मिनीना-
मुदयगिरिवनालीबालमन्दारपुष्पम्।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्द-
न्कुपितकपिकपोलक्रोडताम्रस्तमांसि ॥ १ ॥ योगेश्वरस्य।

शक्यार्चनः सुचिरमीक्षणपङ्कजेन
काश्मीरपिण्डपरिपाटलमण्डलश्रीः।
ध्वान्तं हरन्नमरनायकपालितायां
देवोभ्युदेति दिशि वासरबीजकोषः ॥ २ ॥ विष्णुहरेः।

तेजोराशौ भुवनजलधेः प्लाविताशातटान्तं
भानौ कुम्भोद्भव इव पिबत्यन्धकारोत्कराम्भः।
सद्यो माद्यन्मकरकमठस्थूलमत्स्या इवैते
यान्त्यन्तस्थाः कुलशिखरिणो दृष्टिवर्त्म क्रमेण ॥ ३ ॥ शिवस्वामिनः।

अपास्तस्ताराभिर्विधन इव कामी युवतिभि-

मधुच्छत्रच्छायां स्पृशति शशलक्ष्मा परिणतः ।
अयं प्राचीकर्णाभरणरचनाशोककुसुम-
च्छटालक्ष्मीचौरः कलयति रविः पूर्वमचलम् ॥ ४ ॥ शतानन्दस्य ।
रतिश्रमपरिस्खलत्समदसिद्धसीमन्तिनी-
स्तनच्युतमिवांशुकं विशदपद्मरागद्युति ।
अयं दिशि शतक्रतोः कुवलयाक्षि विम्बारुण-
त्वदीयदशनच्छदच्छविरुदेति बालातपः ॥ ५ ॥ मुञ्जस्य ।

## १४४ मध्याह्नः ।

एतस्मिन्दिवसस्य मध्यसमये वातोऽपि चण्डातप-
त्रासेनेव न संचरत्यहिमगोर्विम्बे ललाटंतपे ।
किंचान्यत्परितप्तधूलिलुठनप्रोषासहत्वादिव
च्छाया दूरगतापि भूरुहतले व्यावृत्य संलीयते ॥ १ ॥
मलयराजस्य ।

धत्ते पद्मलतादलप्सुरुपरि स्वं कर्णतालं द्विपः
शष्पस्तम्बरसान्वियच्छति शिखी मध्येशिखण्डं शिरः ।
मिथ्या लेढि मृणालकोटिरभसाद्दंष्ट्रांकुरं शूकरो
मध्याह्ने महिषश्च वाञ्छति निजच्छायामहाकर्दमम् ॥ २ ॥
राजशेखरस्य ।

मध्याह्नार्कमरीचिदुःसहतया संत्यज्य दर्भाकुर-
ग्रासानाश्रितकन्दरद्रुमघनच्छायं मृगाः शेरते ।
सातङ्कः करशीकरैर्निजवशां सिञ्चञ्श्रमार्तो मुहु-
र्निष्क्रान्तो गहनाद्द्रुतोद्धतपदं पद्माकरे सर्पति ॥ ३ ॥
वसन्तदेवस्य ।

तापात्पिण्डितविग्रहेव विशतिच्छाया तरूणां तले
रुद्धः स्वाश्रयपक्षपातकृतिभिः पद्मैरपामातपः ।
अद्यान्तःपुरयोषितां मधुमदोत्सेकात्कपोलोदरे
छिन्नैः स्वेदलवैरुदञ्चितमहो सूर्यो ललाटं तपः ॥ ४ ॥
उत्पलराजस्य ।

वपुस्तिम्यत्क्षीनांशुकनिविडपीनोरुजघन-
स्तनानां निश्च्योतच्चिकुरपयसां पक्ष्मलदृशाम् ।
निमग्नोत्तीर्णानां प्रमदवनवापीतटजुषां
दिदृक्षाभिर्देवो रविरथ रथं मन्थरयति ॥ ५ ॥ गोवर्धनस्य ।

## १४५ अस्तमयः ।

याते भास्वति वृद्धसारसशिरःशोणस्तश्रृङ्गाश्रयं

व्यालिप्तं तिमिरैः कठोरवलिभुक्कण्ठातिनीलैर्नभः।
माहेन्द्री दिगपि प्रसन्नमलिना चन्द्रोदयाकाङ्क्षिणी
भात्येषा चिरविप्रयुक्तशवरीगण्डाभपाण्डुच्छविः॥ १॥
मलयराजस्य।

क्रमसंकुचितकुशेशयकोषान्तरनीयमानमधुपेन।
गरलमिव गलति नलिनी दिनकरविरहातिखेदेन॥ २॥
दत्तस्य।

करसादोम्बरत्यागस्तेजोहानिः सरागिता।
वारुणीसंगमावस्था भानुनाप्यनुभूयते॥ ३॥
काश्मीरकसुरमूलस्य।

व्रजति कलितस्तोकालोको नवीनजवारुण-
च्छवि रविरसौ विम्बं विन्दन् दिशं भृशमप्पतेः।
ककुभि ककुभि प्राप्ताहाराः कुलायमहीरुहां
शिरसि शिरसि स्वैरं स्वैरं पतन्ति पतत्त्रिणः॥ ४॥ कस्यचित्।

रुचिरजनितताराहारचौरस्य भूभृ-
च्छिखरतरुनिवेशोल्लम्बितस्योर्ध्वपादम्।
चिरमवनतमेतच्छोणितापूर्यमाणं
मुखमिव रविविम्बं रज्यते वासरस्य॥ ५॥ सङ्घश्रीमित्रस्य।

## १४६ सन्ध्या।

निशाकरकरस्पर्शहर्षोन्मीलिततारका।
अहो रागवती सन्ध्या जहाति स्वयमम्बरम्॥ १॥ युवराजस्य।

दिक्कामिनीवदनकुङ्कुमपङ्कचर्चा चक्राङ्गनाहृदयदावदवानलार्चिः।
सन्ध्या रराज गगनान्तरतोयराशिवालप्रबालविटपांकुरकन्दलश्रीः २॥
कस्यचित्।

कौसुम्भवसनरुचिरां सन्ध्यां परिणीय मन्दमनुयान्तीम्।
वासालयमिव जलधिं रागी पुरतो रविर्विशति॥ ३॥
उमापतिधरस्य।

आकृष्टश्चक्रवाकैर्नयनकलनया बन्धकीभिर्निरस्तो
नास्तं द्रागेति भानुर्निवसति नलिनीबोधनिद्रान्तराले।
सन्ध्यादीपप्ररोहं बहुलतिलरसव्याप्तपात्रान्तरालं
वासागारे दिशन्ती हसति नववधूक्रोधदृष्टा भुजिष्या॥ ४॥
तस्यैव।

अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः।
अहो दैवगतिश्चित्रा तथापि न समागमः॥ ५॥ कस्यचित्।

## १४७ अन्धकारः ।

अक्ष्णोर्मञ्जुलमञ्जनं चरणयोर्नीलाश्मजौ नूपुरा-
वङ्गे नीलपटः स्फुटं मृगमदन्यासः कपोलस्थले ।
यत्प्रीत्या परिशीलितं परदृशां रोधाय तत्सांप्रतं
नेपथ्यस्य विधावपीदमसतीजातस्य जातं तमः ॥ १ ॥

वार्पीकस्य ।

उत्सारितो हसितदीधितिभिः कपोला-
देकावलीभिरवधूत इव स्तनेभ्यः ।
अङ्गेष्वलब्धपरिभोगसुखोन्धकारो
गृह्णाति केशरचनासु रुषेव नारीः ॥ २ ॥ गणपतेः ।
अद्रिष्वञ्जनपुञ्जकान्ति जलदप्रायं च मूले दिशा-
मूर्ध्वं नीलवितानकल्पमवनौ जम्बाललेपोपमम् ।
तीरे नीरनिधेस्तमालविटपिच्छायं च सायं शनै-
रुद्गच्छत्यभिसारिकाप्रियतमप्रेमानुकूलं तमः ॥ ३ ॥

ऋक्षपालितस्य ।

यत्र तत्र रतिसज्जबन्धकी-
प्रीतये मदनशासनादिव ।
नीलकान्तपटतामुपाययौ
सूचिभेद्यनिविडं निशातमः ॥ ४ ॥ धोयीकस्य ।
उद्धूता धूमधारा विरहिजनमनोमाथिनो मन्मथाग्नेः
कस्तूरीपत्रमाला तिमिरततिरहो दिक्पुरन्ध्रीमुखानाम् ।
निर्वाणाङ्गारलेखा दिवसहुतभुजः संचरच्चञ्चरीक-
श्रेणीयंभाति भास्वत्करलुलितनभःकन्दरेन्दीवरस्य ॥ ५ ॥ गोवर्धनस्य ।

## १४८ दीपः ।

वदनविधुसुधाभिषेकशीता-
त्रसपरिभावनयेव लोलमौलिः ।
त्वदधरमरुतो निपीय हास्य-
त्यपि सहजक्षणभङ्गितां प्रदीपः ॥ १ ॥

तैलपाटीयगाङ्गोकस्य ।

निर्वाणगोचरगतोपि मुहुर्निशायां
किं चेष्टितं तरुणयोः सुरतावसाने ।
इत्येवमाकलयितुं सकलं कलावि-
दुद्ग्रीविकामिव ददाति रतिप्रदीपः ॥ २ ॥ कस्यचित् ।
बालां कृशाङ्गीं सुरतानभिज्ञां गाढं नवोढामुपगूढवन्तम् ।

विलोक्य जामातरमेष दीपो वातायने कम्पमुपैति भीतः ॥ ३ ॥
कस्यचित्।

हनूमानिव दीपोयं दूरमुल्लासिताञ्जनः।
किंच राम इवाभाति विनिर्धूतदशाननः ॥ ४ ॥ कस्यचित्।
अतिपीतां तमोराजीं तनीयान्वोढुमक्षमः।
वमतीव शनैरेष प्रदीपः कज्जलच्छलात् ॥ ५ ॥ कस्यचित्।

## १४९ चन्द्रोदयः।

अयमुदयति कोकीशोकशल्यैर्मयूखैः
शतमुखपुरनारीनेत्रगण्डूषपेयः।
उदयगिरिमृगेन्द्रोद्दारभिन्नाङ्करंकु-
श्रवणरुधिरधारापाटलः पार्वणेन्दुः ॥ १ ॥ मधोः।

यस्त्रैलोक्यजितः स्मरस्य किमपि क्रीडातडागं मह-
द्यश्चाभोगभृतो भुवः प्रकटिताकारार्पणो दर्पणः।
सोयं सुन्दरि मन्दराद्रिमथितक्षीरोदसारोच्चय-
श्चन्द्रः कुंकुमपङ्कपिण्डलडहच्छायः समुद्गच्छति ॥ २ ॥
राजशेखरस्य।

असावेकद्वित्रिप्रभृतिपरिपाट्या प्रकटय-
न्कलाः स्वैरं स्वैरं नवकमलकन्दांकुररुचः।
पुरन्ध्रीणां प्रेयोविरहदहनोद्दीपितदृशां
कटाक्षेभ्यो बिभ्यन्निभृत इव चन्द्रोभ्युदयति ॥ ३ तस्यैव।

देवःप्राचीमिदानीमयमुपचिनुते पञ्चबाणस्य सोयं
बिभ्राणः शाणलीलाममृतरुचिमिमां लाक्षिकीभिः प्रभाभिः।
किंचामुष्य प्रसङ्गान्निशितशरशिखाविस्फुरद्भिः स्फुलिङ्गैः
संध्यारागच्छलेनच्छुरितमिव तटव्योमचक्रं चकास्ति ॥ ४ ॥
हरेः।

आशाः संतमसोपलेपमलिनाः पीयूषगौरैः करै-
रालिम्पन्नयमुद्गतैर्दिवमिमां कर्पूरपूरं सृजन्।
चन्द्रश्चन्द्रशिलैककुट्टिममयं क्षोणीतलं कल्पय-
न्पश्योद्गच्छति पाकपाण्डुरशरच्छायोपमेयच्छविः ॥ ५ ॥
अनङ्गस्य।

## १५० प्रदोषः [रजनी]

हंसाः संप्रति पक्षतौ सुनिभृतं कृत्वा शिरः शेरते
ज्योत्स्नाभिस्तुषिताः समं सहचरैः सुप्ताश्चकोरास्त्रियः।

घूर्णद्भिः कुमुदोदरेष्वपि मधुक्षीबैः स्थितं षट्पदै-
रप्युच्चैर्गिरिशृङ्गमूर्धनि भृशं निर्यान्त्यमी बर्हिणः ॥ १ ॥
उमापतिधरस्य ।

सैरन्ध्रीकरकङ्कणपट्टकसरत्तारध्वनिर्दूरतो-
दूतीसूत्रितसन्धिविग्रहविधिः सोल्लासलीलाचयः ।
वारस्त्रीजनसज्ज्यमानशयनः संनद्धपुष्पायुध-
श्रीखण्डद्रवधौतसौधतलिनोरम्यः क्षणो वर्तते ॥ २ ॥ कस्यचित् ।

दिक् सरागमुखसंनिधापित-स्फीतचन्द्रचषका शतक्रतोः ।
क्षीबभावमिव बिभ्रती रतौ विश्लथोच्चतिमिरांशुकोच्चया ॥ ३ ॥
अभिनन्दस्य ।

वाष्पैर्मानवतीजनस्य कुलटासंकेतचिन्तोर्मिभिः
संप्राप्ता प्रियसंगमैकमनसामाकल्पनोपक्रमैः ।
दूतीसंचरणैरपि प्रणयिनोः संदेशवक्रोक्तिभिः
कुत्रायं कुरुते न मन्मथमनस्तोषं प्रदोषागमः ॥ ४ ॥
जलचन्द्रस्य ।

उपरि गूढहिमांशुमरीचिभि-
स्तमसि दूरतरं प्रतिसारिते ।
अलकसंयमनादिव लोचने
हरति मे हरिवाहमदिङ्मुखम् ॥ ५ ॥ कालिदासस्य ।

## १५१ वसन्तारम्भः ।

गर्भग्रन्थिषु वीरुधां सुमनसो मध्येऽङ्कुरं पल्लवा
वाञ्छामात्रपरिग्रहः पिकवधूकण्ठोदरे पञ्चमः ।
किंच त्रीणि जगन्ति जिष्णु दिवसैर्द्वित्रैर्मनोजन्मनो
देवस्यापि चिरोज्झितं यदि भवेदभ्यासवश्यं धनुः ॥ १ ॥
राजशेखरस्य ।

अतीता शीतार्तिः प्रसरति शनैरूष्मकलिका
दिनानि स्फायन्ते रविरपि रथं मन्थरयति ।
हिमानीनिर्मुक्तः स्फुरति नितरां शीतकिरणः
शराणां व्यापारः कुसुमधनुषो न व्यवहितः ॥ २ ॥ साम्पीकस्य ।

निद्राशेषनिमीलितेक्षणतया प्राप्ते वसन्तोद्यमे
हस्तामर्षवशादसौ निजधनुः पञ्चेषुरान्विष्यति ।
चूताः कोरकगर्भनिर्भरदरोद्भिन्नस्फुरद्ग्रन्थयो
यात्यायाति च काकली पिकवधूकण्ठोपकण्ठं मुहुः ॥ ३ ॥
प्राज्ञभूतनाथस्य ।

एकद्वेषु रसालशाखिषु मनागुन्मीलितं कुड्मलैः
कर्णाकर्णिकया मिथः कथममी घूर्णन्ति विश्वेध्वगाः ।
द्वित्रैः क्वापि किल श्रुताश्रुतमपि स्पष्टान्यपुष्टारुतं
विष्वङ्मूर्छति दुःसहो विरहिणीगेहेषु हाहारवः ॥ ४ ॥

भट्टपालीयपीताम्बरस्य ।

यातं मानैर्वधूनामिव दरशिथिलग्रन्थिभिः पूर्वपत्रै-
र्जातोपि क्वापि बालामदन इव बहिर्नाङ्कुरो व्यक्तिमेति ।
आगारे नागराणामपि विहितबहुप्रार्थनाः कण्ठकण्ठं
नीत्वा नीत्वा नवोढा इव वचनममूः कोकिला कुण्ठयन्ति ॥५॥

आचार्यगोपीकस्य ।

## १५२ वसन्तः ।

जम्बूनां कुसुमोदरेष्वतिरसादाबद्धपानोत्सवाः
कीराः पक्वफलशया मधुकरीश्चुम्बन्ति मुञ्चन्ति च ।
एतेषामपि पश्य किंशुकतरोः पत्रैरभिन्नत्विषां
पुष्पभ्रान्तिभिरापतन्ति सहसा चञ्चूषु भृङ्गाङ्गनाः ॥ १ ॥

राजशेखरस्य ।

अङ्कुरिते पल्लविते कोरकिते विकसिते च सहकारे ।
अङ्कुरितः पल्लवितः कोरकितो विकसितश्च मदनोसौ ॥ २ ॥

कस्यचित् ।

अमीषामारूढप्रसवविवराणां मधुलिहां
ध्वनिः पान्थस्त्रीणां प्रसरति वियोगे ज्वर इव ।
द्रुमालीनां यूनोर्मन इव सरागं किसलयं
परागः पुष्पाणां पतति मदनस्येव विशिखः ॥ ३ ॥ वसन्तदेवस्य ।

लीलास्नानविधिश्रमं मधुलिहां पुष्पेषु जातं मधु
स्थायित्वं कलकण्ठकण्ठकुहरेष्वासेवते पञ्चमः
एकच्छत्रजगत्त्रयार्जनरुचेर्देवस्य शृङ्गारिण-
श्चैत्रश्चित्रमकाण्ड एव समभूत्त्रैलोक्यमल्लो भरः ॥ ४ ॥ विह्लणस्य ।

वापी दन्तुरितोदरा कमलिनीपत्राङ्कुरग्रन्थिभि-
श्चूतानां कलिकामिलन्मधुलिहां क्वापि स्थितिर्वर्तते ।
किंचान्यत्कुसुमायुधोद्य भगवान्धत्ते सगर्वं धनु-
र्ज्यामुन्मार्ष्टि च पञ्चभिश्चविशिखैर्जेतुं जगद्वाञ्छति ॥ ५ ॥

वीर्यमित्रस्य ।

## १५३ वसन्तवासरः ।

आरक्ताङ्कुरदन्तुरा कमलिनी नायामिनी यामिभी

स्तोकोन्मुक्ततुषारमम्बरमणेरीषत्प्रगल्भं महः ।
अप्येते सहकारसौरभमुचो वाचालिताः कोकिलै-
रायान्ति प्रियविप्रयुक्तयुवतीमर्मच्छिदो वासराः ॥ १ ॥ सङ्घश्रियः ।

मन्दं दक्षिणमाह्वयन्ति पवनं पुंस्कोकिलव्याहृतैः
संस्कुर्वन्ति वनस्थलीकिसलयोत्तंसैर्निषण्णालिभिः ।
चन्द्रं सुन्दरयन्ति मुक्ततुहिनप्रावारया ज्योत्स्नया
वर्धन्ते च विवर्धयन्ति च मुहुस्तेमी स्मरं वासराः ॥ २ ॥

कस्यचित् ।

एते संप्रति वैमनस्यमनिशं निःशङ्कमातन्वते
कान्तारस्थलपद्मिनीपरिमलैरानन्दितेन्दिन्दिराः ।
उन्मीलत्सहकारकाननतटीवाचालपुंस्कोकिल-
ध्वानाकर्णनकांदिशीकपथिकावस्कन्दिनो वासराः ॥ ३ ॥

योगेश्वरस्य ।

धिन्वन्त्यमूनि मदमूर्च्छदलिध्वनीनि
धूताध्वनीनहृदयानि मधोर्दिनानि ।
निस्तन्द्रचन्द्रवदनावदनारविन्द-
सौरभ्यसौहृदसगर्वसमीरणानि ॥ ४ ॥ कस्यचित् ।

स्तोकस्तोकनिवर्तमानतुहिनोन्मीलन्नवाम्भोजिनी-
संक्रान्तैरलिभिर्मुखेषु ककुभां क्लृप्तालकश्रेणयः ।
तत्तन्मन्मथबन्धुवार्तिकपिकप्रारब्धबीजाङ्कुर-
व्याख्यातक्षुभिताध्वनीनमनसो धिन्वन्त्यमी वासराः ॥ ५ ॥ हरेः ।

## १५४ वसन्ततरवः ।

मिथःक्रीडालोलभ्रमरभरभग्नाङ्कुररस-
प्रसेकप्रोन्मीलत्परिमलसमालब्धपवनः ।
इतोप्येष श्रीमानविरलमिदानीं मुकुलितः
प्रयच्छत्युन्मादानहह सहकारद्रुमयुवा ॥ १ ॥ कस्यचित् ।

साम्यं संप्रति सेवते विचकिलं षाण्मासिकैर्मौक्तिकै-
र्वाह्लीकीदशनव्रणारुणतरैः पत्रैरशोकोर्चितः ।
भृङ्गीलङ्घितकोटि किंशुकमिदं किंचिद्विवृत्तायते
माञ्जिष्ठैर्मुकुलैश्च पाटलितरोर्वृत्तैव काचिल्लिपिः ॥ २ ॥

राजशेखरस्य ।

वह्निर्मन्ये हिमजलभयात्संश्रितः किंशुकेषु
श्यामं धूमैः स खलु कुरुते काननं कोरकाख्यैः ।

संतापार्थं कथमितरथा पान्थसीमन्तिनीनां
पुष्पव्याजाद्विसृजति शिखाश्रेणिमुद्गाढशोणाम् ॥ ३ ॥ कस्यचित् ।
इदानीं प्लक्षाणां जठरदलविश्लेषचतुर-
स्थितीनामाबन्धः स्फुरति शुकचञ्चूपुटनिभः ।
ततः स्त्रीणां हस्तक्षममधरकान्तिं कलयितुं
समन्तान्निर्याति स्फुटसुभगरागः किसलयः ॥ ४ ॥ वामनस्य ।
परागैरादिग्धाः परिमिलितपिष्टातकनिभै-
र्मरुल्लोलच्छाखं मधुपरवगीतं विदधतः ।
पलाशैः काश्मीरारुणवसनकल्पैर्निवसिता
द्रुमा राजन्त्येते मधुदिवसरम्योत्सवभृतः ॥ ५ ॥

## १५५ वसन्तकोकिलः ।

एते नूतनचूतकोरकघनध्वानातिरेकीभव-
त्कण्ठध्वानजुषो हरन्ति हृदयं मध्येवनं कोकिलाः ।
येषामाह्विनिभेन भान्ति भगवद्भूतेशनेत्रानल-
ज्वालाजालकरालितासमशराङ्गारस्फुलिङ्गा इव ॥ १ ॥

कस्यचित् ।

अद्योन्मीलन्मलयपवनोद्धूतचूताङ्कुराग्र-
ग्रासास्वादादधिकमधुरैरुच्चरद्भिर्निनादैः ।
क्वापि क्वापि स्मरहुतवहोद्दीपनायाध्वगानां
होतुं प्राणानृचमिव पिकः सामिधेनीमधीते ॥ २ ॥ हरेः ।
यश्चूताङ्कुरकन्दलीकवलनात्कर्णामृतस्राविणीं
छायामात्रपरिग्रहेण विदधे पाञ्चेषवीमस्त्रताम् ।
ताम्यत्तालुविटङ्कसंकटदरीसंचारतः पञ्चमः
सोयं कोकिलकामिनीगलबिलादामूलमुन्मूलति ॥ ३ ॥
यः शृङ्गाररसायनं मृगदृशां वैराग्यचिन्ताज्वरः
शान्त्युद्वासनडिण्डिमः स्मरगुरोस्तत्त्वोपदेशाक्षरम् ।
उद्भूतस्मरगौरवज्वरभराक्रान्ताध्वनीनाङ्गना-
चैतन्यत्रुटिकार्मणं विजयते रागः पिके पञ्चमः ॥४॥ कस्यचित् ।
ओंकाराः कुसुमायुधोपनिषदां मन्त्रानुवादः स्मर-
स्वाध्यायस्य रतेः पुनर्भवविधौ गन्धाभिरामश्रुतिः ।
चित्ताकर्षणसाध्यसिद्धिरसतीनेत्रस्य कर्णज्वरः
पान्थानां सहकारकाननसुधासेकः पिकानां ध्वनिः ॥ ५ ॥

## १५६ वसन्तभ्रमरः ।

आरक्तायतपुष्पबाणनयने स्निग्धाञ्जनश्यामिकां
काश्मीरारुणकर्णिकारकुसुमोत्तंसे महानीलताम् ।
उन्मीलत्तिलकान्तरे मृगमदक्षोदार्द्रबिन्दूपमां
धत्ते मुग्धतमालकान्ति मधुपीवृन्दं वसन्तश्रियः ॥ १ ॥
उमापतिधरस्य ।

पिकत्रोटीदात्रत्रुटितसहकाराग्रमुकुल-
स्रुतक्षीरक्षीबप्रसृतपवनान्दोलतरलः ।
इदानीं वासन्तीदलितकुसुमामोदमुदित-
भ्रमद्भृङ्गश्रेणीरणरणकमन्तार्वितनुते ॥२॥ कालिदासनन्दिनः।

निरानन्दाः कौन्दे मधुनि परिभुक्तोज्झितरसे
वनेष्वम्भोजानामविकृतसुखेषु प्रतिहताः ।
इदानीं चूतानां मुकुलमधुषु प्रेमसरसा-
नवीनेष्वाकूतं दधति परिगाढं मधुलिहः ॥ ३ ॥ नवकारस्य ।

मल्लिकामुकुले भाति गुञ्जन्मत्तमधुव्रतः ।
प्रयाणे पञ्चबाणस्य शङ्खमापूरयन्निव ॥ ४ ॥ कस्यचित् ।

अविरलपरागसैकतमकरन्दतरङ्गिणीमनुवनान्तम् ।
पिकयुवतिजानुदघ्नीं गाहन्ते मधुपयोषितस्तृषिताः ॥ ५ ॥
आवन्तिकजह्नोः ।

## १५७ ग्रीष्मः ।

भुवां घर्मारम्भे पवनचलितं तापहतये
पटच्छत्राकारं वहति गगनं धूलिपटलम् ।
अमी मन्दाराणां दवदहनसंदेहितधियो
न ढौकन्ते पातुं झटिति मकरन्दं मधुलिहः ॥ १ ॥ भवभूतेः ।

सलिलमखिलं वेशन्तानां लुलायकुलाकुलं
विशति बिसिनीपत्रच्छत्रे रथाङ्गविहंगमः ।
निजगजपतिं कुञ्जच्छायां नयन्ति पदे पदे
पृथुवमथुना सिक्त्वा सिक्त्वा करेण करेणवः ॥ २ ॥ कस्यचित् ।

प्रान्ते पङ्किनि पल्लवस्य विलुठत्पोत्री नयत्यातपां-
स्तृष्णालुर्निभृतं ह्रदेषु महिषः शैवालमन्विष्यति ।
आचीर्णौषधिमूलशीतसुरभिश्वासानिलान्दोलयन्
प्रक्षीणोष्मणि लीयते वनगिरिश्वभ्रोदरे शल्लकः ॥ ३ ॥
योगेश्वरस्य ।

अम्भोवेर्जलयन्त्रमन्दिरपरिस्पन्देऽपि निद्राणयोः
श्रीनारायणयोर्घनं विघटयत्यूष्मा समालिङ्गनम् ।
किंचोत्सर्पवियत्कपालफलके कंकालशेषश्रियं
चन्द्रं मर्मरयन्ति पर्पटकरक्रूरा रवेरंशवः ॥ ४ ॥ कस्यचित् ।

पाषाणः कुलिशायते पुरपथं संततलोहायते
निर्वातं दहनायते च निविडाङ्गारायते शर्करा ।
एतस्मिंस्तरुणप्रचण्डमहसः प्रौढालये सर्वतः
तोर्णा शुष्यति वालुका च सरितां वह्निस्फुलिङ्गायते ॥ ५ ॥
भावनन्दस्य ।

## १५८ ग्रीष्मवेशः ।

जलार्द्रं संव्यानं बिसकिसलयैः केलिवलयाः
शिरीषैरुत्तंसो विचकिलमयी हाररचना ।
शुचावेणाक्षीणां मलयजरसार्द्राश्च तनवो
विना तन्त्रं मन्त्रं रतिरमणमृत्युंजयविधिः ॥ १ ॥ कस्यचित् ।

तोयोत्तीर्णा श्रयति कबरी शेखरं सप्तलानां
शैत्यं सिञ्चत्युपरि कुचयोः पाटलाकण्ठदाम ।
कान्तं कर्णावभिनिविशते कोमलाग्रं शिरीषं
स्त्रीणामङ्गे विभजति तपस्तत्र तत्रात्मचिन्हम् ॥ २ ॥
मधुरशीलस्य ।

कर्णोत्तंसः शिशुशुकवधूपिच्छलीलं शिरीषं
सान्तः सूत्राः परिमलमुचो मल्लिकानां च हाराः ।
मुक्तागौरैर्वलयरचना कन्दलाग्रैर्बिसानां
ग्रीष्मारम्भे रमयति नवं मण्डनं कामिनीनाम् ॥ ३ ॥ कस्यचित् ।

अभिनवकुशसूत्रस्पर्धि कर्णे शिरीषं
कुरवकपरिधानं पाटलादाम कण्ठे ।
तनुसरसजलार्द्रोन्मीलितः सुन्दरीणां
दिनपरिणतिजन्मा कोऽपि वेशश्चकास्ति ॥ ४ ॥ कमलायुधस्य ।

सद्यश्चम्पककञ्चुका कुचतटी वैकक्षके मल्लिकाः
काञ्चिर्वैचकिली बिसालिवलयाग्रैवेयकं केशरैः ।
चाम्पेयोत्तरपाटला च कबरी कर्णः शिरीषाञ्चितो-
वेशश्चेदयमङ्गनासु न तदानङ्गस्य के किंकराः ॥ ५ ॥ कस्यचित् ।

## १५९ शृङ्गारात्मकग्रीष्मः ।

तदात्वस्नातानां मलयजरसैरार्द्रवपुषां

कुचान्बिभ्राणानां दरविकचमल्लीमुकुलिनः ।
निदाघार्कप्रोषग्लपितमहिमानं मृगदृशां
परिष्वङ्गेनङ्गं पुनरपि शनैरङ्कुरयति ॥ १ ॥ मङ्गलार्जुनस्य ।

अपां मूले लीनं क्षणपरिचितं चन्दनरसे
मृणालीहारादौ कृतलघुपदं चन्द्रमसि च ।
मुहूर्त्तं विश्रान्तं सरसकदलीकाननतटे
प्रियाकण्ठाश्लेषे निवसति परं शैत्यमधुना ॥ २ ॥ कस्यचित् ।

एतस्मिन्घनचन्दनार्द्रवपुषो निद्राकषायेक्षणा
लीलालोलमृदूल्लसद्भुजलता व्याजृम्भमाणा मुहुः ।
निर्गच्छन्ति शनैरहःपरिणतौ मन्दा लतामन्दिरा-
त्स्वेदाम्भःकणदन्तुरस्तनतटाभोगाः कुरङ्गीदृशः ॥ ३ ॥
कालिदासनन्दिनः ।

हरन्ति हृदयानि यच्छ्रवणशीतला वेणवो
यदर्धति कराम्बिता शिशिरवारिणा वारुणी ।
भवन्ति च हिमोपमाः स्तनभुवो यदेणीदृशां
शुचेरुपरि संस्थितो रतिपतेः प्रसादो गुरुः ॥ ४ ॥
राजशेखरस्य ।

शुचौ तप्ताङ्गानां बहलमकरन्दद्रवमुचः
कदम्बप्रालम्बाः स्तनपरिसरे पक्ष्मलदृशाम् ।
हठाल्लूनोष्माणः कमपि महिमानं विदधते
जलक्रीडातीर्णप्रियतमभुजाबन्धशिशिराः ॥ ५ ॥ कस्यचित् ।

## १६० दवानलः ।

अरोहत्यवनीरुहः प्रविशति श्वभ्रं नगैः स्पर्धते
खं व्यालेढि विचेष्टते क्षितितले कुञ्जोदरे लीयते ।
अन्तर्भ्राम्यति कोटरस्य विरमत्यालम्बते वीरुधः
किं तद्यन्न करोति मारुतवशं यातः कृशानुर्वने ॥ १ ॥
योगेश्वरस्य ।

विश्वस्ता मृगपक्षिणो विवशतां नीताः स्थलीदेवता
धूमैरन्तारिताः स्वभावमलिनैराशा महीतापिता ।
भस्मीकृत्य सपुष्पपल्लवफलांस्तांस्तान्महापादपा-
न्निर्वृत्तेन दवानलेन विहितं वल्मीकशेषं वनम् ॥ २ ॥ तस्यैव ।

असिन्नीषद्वितवलितस्तोकविच्छिन्नभुग्नः
किंचिल्लीलोपचितविनतः पुञ्जितश्चोत्थितश्च ।

धूमोद्गारस्तरुणमहिषस्कन्धनीलो दवाग्नेः
स्वैरं सर्पन्सृजति गगने गत्वरान्पत्रभङ्गान् ॥ ३ ॥ बाणस्य ।
बाले मालेयमुच्चैर्न भवति गगनव्यापिनी नीरदानां
किं तत्पक्ष्मान्तपातैर्मलिनयसि मुधा वक्त्रमश्रुप्रवाहैः ।
एषा प्रोद्वृत्तमत्तद्विपकटकषणक्षुण्णविन्ध्योपलाभा-
दावाग्नेः संप्रवृद्धा मलिनयति दिशां मण्डलं धूमलेखा ॥ ४ ॥
कस्यचित् ।
दिशः प्रोद्यत्संध्या गगनतलमुद्रक्तकुसुमं
तरूनाबद्धोरुस्तवकविकसत्किंशुकलतान् ।
विलोलत्कौसुम्भध्वजपटसमाश्लिष्टशिखराः
प्रकुर्वन्वंशालीर्विकसति महीध्रेषु दहनः ॥ ५ ॥ कस्यचित् ।

## १६१ वर्षारम्भः ।

नेतुं वाञ्छति नीड एव दिवसं गर्भालसा वायसी
रक्तो नीपलतासु भुक्तविरसामुज्झत्यलिः पाटलाम् ।
तेजः संप्रति संहरन्ति शिखिनो दग्धव्यपारं गता
जम्बूमाम्रवणादुपैति शनकैरासन्नपाकां पिकः ॥ १ ॥
अभिनन्दस्य ।
स्थलीभूमिर्निर्यन्नवकतृणरोमाञ्चनिचय-
प्रपञ्चैः प्रोन्मीलत्कुटजकलिकाजृम्भितशतैः ।
घनारम्भ प्रेयस्युपगिरि गलन्निर्झरजल-
प्रणालप्रस्वेदैः कमपि मृदुभावं प्रथयति ॥ २ ॥ नरसिंहस्य ।
वातोद्धूतरजोभिलज्जललवैरुच्चित्रिताः शाखिन-
श्छत्रीकृत्य मृदां त्वचः स्थलभुवो निर्यन्ति शष्पाङ्कुराः ।
स्निग्धश्यामलकण्ठनालवलनव्यालोकिताम्भोमुचः
केकाभिः ककुभां मुखानि शिखिनो वाचालयन्त्युत्सुकाः ॥ ३ ॥
अरविन्दस्य ।
किंचिन्मुद्रितपांशवः शिखिकुलैः सानन्दमालोकिता
भग्नावासरुदद्दरिद्रगृहिणीश्वासानिलैर्जर्जराः ।
एते ते निपतन्ति नूतनघनात्प्रावृड्भवारम्भिणो
विच्छायीकृतविप्रयुक्तवनितावक्त्रेन्दवो बिन्दवः ॥४॥ कस्यचित् ।
वर्षारम्भसमुन्नमद्घनघटागर्जाभिरुत्त्रस्यता
ग्रीष्मेणापसृतं क्वचित्क्वचिदपि न्यस्तानि वस्तून्यपि ।
धूलिः केतककुड्मले विरहिणीचेतःसु दावानलः
खद्योतभ्रामिषूडुचक्रमरुणज्योतिस्तडिद्वल्लिषु ॥ ५ ॥ कस्यचित् ।

## १६२ वर्षाः ।

कामं कूले नदीनामनुगिरि महिषीयूथनीलोपकण्ठे
गाहन्ते शष्पराजीरभिनवशलभग्रामलोला वलाकाः ।
अन्तर्विन्यस्तवीरुत्तृणमयपुरुषत्रासविघ्नं कथंचि-
त्कापोतं कोद्रवाणां कवलयति कणान्क्षेत्रकोणैकदेशे ॥ १ ॥
योगेश्वरस्य ।

एतस्मिन्मदजर्जरैरुपचिते कम्बूरवाडम्बरैः
स्तैमित्यं नभसो दिशत्यनिभृतं धाराधरे मूर्छति ।
उत्सङ्गे ककुभो निधाय रसितैरम्भोमुचां घोरय-
न्मन्ये मुद्रितचन्द्रसूर्यनयनं व्योमापि निद्रायते ॥२॥ वातोकस्य।

स्मरविजयपदाङ्कं मत्तदात्यूहकण्ठ-
स्फुटितमधुरकूजागीतयः संचरन्ति ।
अपि च विततबर्हच्छत्रमुद्भूतपत्रं
नटति घननिनादोत्कण्ठितो नीलकण्ठः ॥ ३ ॥ भवानन्दस्य ।

व्याप्तं वारिधरैरकाण्डमुदितैः कृत्स्नं वियन्मण्डलं
नादर्णोर्वर्त्मनि शीतदीधितिरसौ नापि त्विषामीश्वरः ।
भग्नावेव मलीमसैः किमधुना निर्मातुमर्थान्तरं
यत्सान्द्रं करकाः पतन्ति यदमी मुञ्चन्ति विद्युच्छटाः ॥ ४ ॥
वातोकस्य ।

सामोदा वकुलैः कदम्बमुकुलैः प्रीत्येव रोमाञ्चिता-
नीरन्ध्रं पिहिताः पयोदपटलैः श्यामोत्तरीया इव ।
दूरीकृत्य च नूपुराविव रिपून्हंसान्समुत्कूजतो
याताः क्वाप्यभिसारिका इव दिशो मेघागमे सोत्सुकाः ॥ ५ ॥

## १६३ वर्षामेघः ।

त्रैलोक्याधिपतौ फणीन्द्रशयने निद्राति दैत्यद्रुहि
प्राप्य प्रावृषमन्धकाररजनीं प्रत्याशमायोजिताः ।
विद्युद्दीधितिदीपिकाभिरभितः संशोधयन्तो दिशां
भित्तीर्जाग्रति यामिका इव धनुष्मन्तः स्वनन्तो घनाः ॥ १ ॥
ओंकण्ठस्य ।

क्षपाः क्षामीकृत्य प्रसभमपहृत्याम्बु सरितां
प्रताप्योर्वीं सर्वां तरुगहनमुत्साद्य सकलम् ।
क्व संप्रत्युष्णांशुर्गत इति तदालोकनपरा-
स्तडिद्दीपालोकैर्दिशि दिशि चरन्तीह जलदाः ॥ २ ॥ तस्यैव ।

निपीय स्वच्छन्दं जलमुदरपूरं भरवशा
द्विषम्रोतिक्लेशात्त्रिातिधरशिलालम्बितवपुः ।
मुहुर्विद्युद्वल्लीवलितरसनो निस्वनमिषा-
द्भृशारब्धोद्गारं वमति जलभारं जलधरः ॥ ३ ॥ जलचन्द्रस्य ।
व्याप्यान्तरीक्षककुभावनुभूभृदग्रं
सान्द्रान्धकारगहनासु निशासु गर्जन् ।
संवीक्षते विरहिणः क इह म्रियन्ते
वर्षासु विद्युदुरुदीपिकयेव मेघः ॥ ४ ॥ लोष्टसर्वज्ञस्य ।
असौ नास्तीवेन्दुः क्वचिदपि रविः प्रोषित इव
ग्रहोडूनां चक्रं नभसि लिखितप्रोञ्छितमिव ।
अहर्वा रात्रिर्वा द्वयमपि विलुप्तप्रविचयं
घनैर्बद्धव्यूहैः किमिदमिति घोरं व्यवसितम् ॥ ५ ॥ कस्यचित् ।

## १६४ वर्षानदी ।

दात्यूहध्वानिभाञ्जि वेतसशिखासुप्तोरगाणि ध्वन-
त्कादम्बानि कुरङ्गयूथकलितस्तूपान्युदम्भांसि च ।
तीरारण्यध्य पिपीलिकासमुदयावर्जज्जटालोलुप-
व्यातात्युन्मदकुक्कुभानि सरितां कुर्वन्ति लोलं मनः ॥ १ ॥
योगेश्वरस्य ।

एताः पङ्किलकूलरूढनलदस्तम्बाः क्वणत्कम्बवः
क्रीडत्कर्कटचक्रवालविलसज्जम्बालतोयाविलाः ।
ह्लेखं जनयन्त्यनूपसरितामुत्तुण्डगण्डूपदो-
त्कीर्णोद्गीर्णमृदर्बुदस्थपुटितप्रान्तास्तटीभूमयः ॥ २ ॥
परमेश्वरस्य ।

विरतरजसी स्फूर्जत्सर्जप्रसूनसुगन्धिनी
मदवशलसत्केकिक्वाणप्रणादितसानुनी ।
अपहृतवनोद्देशोन्मेषास्तरङ्गितरंहसो
विदधति तटे भूभृन्नद्यः क्वणज्जलरङ्कुणी ॥ ३ ॥ कापालिकस्य ।
निदाघद्राघीयः क्लमकमठकण्ठाकुलभिदा-
मिदानीमुद्देशाः प्रतिपुलिनमर्घन्ति सरिताम् ।
समन्तादुन्मीलन्नवनिचुलकुञ्जेषु रभसा-
दवस्कारक्रीडासुखमुखरदात्यूहसुहृदः ॥ ४ ॥ हरेः ।
इह गुरुजलपूरपूर्णगर्भाः प्रदरदरीभ्रमभूरिभीमवेगाः ।
तटकटकनियुध्यमानवेणीद्विगुणमहारवभैरवास्तटिन्यः ॥ ५ ॥
त्रिपुरारेः ।

## १६५ वर्षादिवसः ।

तान्येतानि शिखण्डिताण्डवगुरूनम्भोधरानम्बरे
तन्वानानि दिनानि नूनममृतस्यन्दीनि वन्दामहे ।
उद्गाढा नवनीलनीरजदृशामत्यन्तमायासिनो
भिद्यन्ते स्वयमेव येषु विषमा मानग्रहग्रन्थयः ॥ १ ॥ कस्यचित् ।
हस्तप्राप्यदिशः प्रगाढजलदप्राग्भारसंकोचित-
व्योमानः पतयालुभिर्घनरसैराकीर्णभूमण्डलाः ।
अद्योद्दामनदन्नवाम्बुदचयप्रच्छन्नकीर्णोदर-
क्रूराः पान्थवधूभिरद्भुतममी सोढाः कथं वासराः ॥ २ ॥
कस्यचित् ।
एते ते दिवसा वियोगिगुरवः पूरोल्लसत्सिन्धवा-
विन्ध्यश्यामपयोदनीलनभसो नीपार्जुनामोदिनः ।
आसन्नप्रसवालसां सहचरीमालोक्य नीडार्थिनीं
चञ्चुप्रान्तकिलिञ्चसंचयपरः काकोपि येष्वाकुलः ॥ ३ ॥
रन्तिदेवस्य ।
धारोत्सिक्तस्तिमितरजसो भूमयः पुण्यगन्धा-
घर्मच्छेदादुपचितमदाः केकिनः स्निग्धकेकाः ।
पा? पीनामोदोन्मदमधुकरा मारुतस्य प्रवृत्तिः
प्रत्युत्कण्ठाप्रणयसुहृदो वासराः प्रावृषेण्याः ॥ ४ ॥ वागुवस्य ।
एते कर्बुरितातपास्तत इतः संजायमानाम्बुद-
च्छेदैः संप्रति केतकीदलमिलद्भ्रातिथेयोदयाः ।
ग्रामान्तोद्गतशालिबीजयवसाश्लेषप्रहृष्यन्मनो-
गोत्राहायतगीतिगर्भितदिशो रम्याः सखे वासराः ॥ ५ ॥
कस्यचित् ।

## १६६ वर्षारात्रिः ।

आसारान्तमृदुप्रवृत्तमरुतो मेघोपलिप्ताम्बरा-
विद्युत्पातमुहूर्तदृष्टककुभः सुप्तेन्दुताराग्रहाः ।
धाराक्लिन्नकदम्बसंभृतसुधामोदोद्वहाः प्रोषितै-
र्निःसंपातविसारिदर्दुररवानीताः कथं रात्रयः ॥ १ ॥ कस्यचित् ।
खद्योतच्छुरितान्धकारपटलाः स्पष्टस्फुरद्विद्युतः
स्निग्धध्वानविभावितोरुजलदोन्नाहा रटत्कम्बवः ।
एताः केतकभेदवासितपुरोवाताः पतद्वारयो
न प्रत्येमि जनस्य यद्विरहिणो यास्यन्ति सोढुं निशाः ॥ २ ॥ कस्यचित् ।

विष्वग्वातविकीर्णशीकरकणाः स्फारस्फुरद्विद्युत-
स्तत्कालप्रतिबुद्धकेतकशिखागन्धोपदिग्धाम्बराः ।
दात्यूहप्रसवप्रणादितदिशः पान्थप्रियाणाममू-
रुन्मथ्नन्ति मनांसि मांसलघनध्वानोत्तरा रात्रयः ॥ ३ ॥
अम्भःसंभृतिमन्थराम्बुदरवैः शालूरगर्जाभर-
प्रारब्धप्रियविप्रयुक्तयुवतीजीवग्रहे भीषणाः ।
विद्युद्दन्तुरितान्धकारपटला गाम्भीर्यबद्धारव-
स्थैर्योन्मूलनशक्तयः कथममी निर्यान्ति वर्षानिशाः ॥ ४ ॥

माधवस्य ।

विद्युद्दीधितिभेदभीषणतमस्तोमान्तराः संतत-
श्यामाम्भोधररोधसंकटवियद्विप्रोषितज्योतिषः ।
खद्योतोन्नमितोपकण्ठतरवः पुष्णन्ति गम्भीरता-
मासारोदकमत्तकीटपटलीक्वाणोत्तरा रात्रयः ॥ ५ ॥ कस्यापि ।

## १६७ शरदारम्भः ।

शुभ्राभ्रं गगनं क्वचित्प्रविकसत्काशा वनाली क्वचि-
त्तोयोन्मुक्ततृणाग्रपङ्कजटिला क्षेत्रान्तभूमिः क्वचित् ।
किंच क्वापि चकोरचारुचरणन्यासार्द्रमुद्राभृतो
दृश्यन्ते तटिनीविमुक्तपुलिनच्छेदा मनोहारिणः ॥ १ ॥

संग्रामदत्तस्य ।

आगत्य संप्रति शरत्समयः प्रसादा-
दीषद्विहस्य विकसत्कुमुदच्छलेन ।
उत्सार्य रोषमिव वारिधरोपरोध-
मेष प्रसादयति दिग्वनितामुखानि ॥ २ ॥ कस्यचित् ।

धूम्रैः पत्त्रपुटैः पतद्भिरभितः पाण्डूदरैः खञ्जनै-
रायान्तीं शरदं किरन्ति रभसाल्लाजैरिवाशाङ्गनाः ।
मङ्गल्यं च कलङ्कपल्लवमुखं स्मेरानना शर्वरी
ज्योत्स्नादर्पणगौरमिन्दुकलशं व्योमाङ्गणे न्यस्यति ॥ ३ ॥

कस्यचित् ।

हंसानां निवहेषु यैः कवलितैरासज्यते कूजता-
मन्यः कोपि कषायकण्ठलुठनादाघर्घरो निस्वनः ।
ते संप्रत्यकठोरवारणवधूदन्ताङ्कुरस्पर्धिनो-
निर्याताः कमलाकरेषु बिसिनीकन्दाङ्कुरग्रन्थयः ॥ ४ ॥

कमलायुधस्य ।

परावृत्ता हंसाः सपदि विगतं कल्मषमपां
प्रसन्नः शीतांशुः प्रसृतपटवः सूर्यकिरणाः ।
दिशो दीर्घीभूता गगनमसिवर्णश्च विपुलं
नियन्ता विन्ध्याद्रेर्विदितमुदितोसौ मुनिवृषा ॥ ५ ॥ योगेश्वरस्य ।

## १६८ शरत् ।

यद्यप्यहं शशिमुखी विमलाम्बरश्री-
र्बन्धूकपुष्परुचिराधरपल्लवापि ।
धिङ्मां तथापि गलितोरुपयोधरत्वा-
दित्युच्चकैः शरदियं वहतीव तापम् ॥ १ ॥ मनोविनोदस्य ।

वराहानाक्षेप्तुं कलमकवलप्रीत्यभिमुखा-
निदानीं सीमानं प्रति विहितमञ्चाः स्वपतिभिः ।
कपोतैः पोतार्थं कृतनिविडनीडा विटपिनः
शिवाभिर्वल्मीकाः खरनखरखातोदरमृदः ॥ २ ॥ शतानन्दस्य ।

तीक्ष्णं रविस्तपति नीच इवाचिराढ्यः
शृङ्गं रुरुस्त्यजति मित्रमिवाकृतज्ञः ।
तोयं प्रसीदति मुनेरिव धर्मचिन्ता
कामं दरिद्र इव शोषमुपैति पङ्कः ॥ ३ ॥ भासस्य ।

कान्तानां वदनेन्दुकान्तिमधुना धत्ते सुधादीधितिः
खेलत्खञ्जनपंक्तयो मृगदृशां तन्वन्ति नेत्रश्रियम् ।
पद्मानि श्वसितस्य सौरभमभिद्रवन्ति वामभ्रुवा-
मभ्यस्यन्ति च राजहंसवनिताः पीनस्तनीनां गतिम् ॥ ४ ॥
लक्ष्मीधरस्य ।

वस्त्रायन्ते नदीनां सितकुसुमधराः शक्रसंकाश काशाः
केशाभा भान्ति तासां नवपुलिनगताः श्रीनदीहंस हंसाः ।
हंसाभाम्भोदयुक्तः शरदमलपटुर्मेदिनीचन्द्र चन्द्र-
श्चन्द्राङ्कः शारदस्ते जयकृदुपनतो विद्विषां काल कालः ॥ ५ ॥
वामनस्य ।

## १६९ शरन्नदी ।

पारावारप्रकटपुलिनाभ्युद्गमोत्तारपाण्डु-
र्लीलावर्तस्तिमितचलनव्यञ्जितोद्देशनिम्ना ।
क्रौञ्चीजानुद्वयसपयसामन्तरीपोदरेषु
स्वच्छा वेणिमर्दयति मनः शारदीनां नदीनाम् ॥ १ ॥ कस्यचित् ।
खेलत्खञ्जनलोचनाः खगनखक्षुण्णान्तरीगोरवः

स्रस्तैः शैवलकुन्तलैरविरतस्मेरारविन्दानना
वर्षारात्रिघनोपभोगकथयेवालीमरालाङ्गनाः
प्रीणन्त्यद्य शरत्प्रभातमिलिता नीचस्वनैरापगाः ॥ २ ॥ कस्यचित्।

पूर्वं वारिधरप्रसङ्गसमयेनापूरितैः कुक्षिभि-
र्या गर्भिण्य इवातिभारगुरवो निःसेव्यतामागताः।
एताः संप्रति भान्ति —˘ कलुषक्षामाभिकामाङ्क्षिकाः
कूजत्सारसपोतपीतपयसो नद्यः प्रसूता इव ॥ ३ ॥

काश्मीरकभोगकर्मणः।

पूरापायप्रकटविटपाः पर्यटत्खञ्जरीट-
क्रान्तप्रान्ताः प्रसभविलसद्राजहंसावतंसाः।
अद्यानन्दं दधति विचरच्चक्रवाकोग्रचञ्चु-
ग्रासत्रासप्रचलशफर-स्मेरनीरास्तटिन्यः ॥ ४ ॥ डिम्भोकस्य।
इमास्ताः कस्तूरी-प्रखर-खुरटङ्कक्षततटा-
स्तटिन्योरण्यानीमनु कमलिनीच्छन्नसलिलाः।
जले यासां हंसा बिसकिसलयग्रासरसिका
सलीलं लीयन्ते युवतिगतिरीत्येकगुरवः ॥ ५ ॥ मन्मोकस्य।

## १७० शरत्खञ्जनः।

दूरोत्पुच्छः स्खलयचरणो लम्बलोलत्पतत्रः
कण्ठेनोच्चैर्मदकलरुतस्तोकवाचालचञ्चुः।
हर्षाश्रूर्मिस्तिमितनयनन्यस्तसोत्कण्ठदृष्टिः
कंचित्कालं नटति निकटे खञ्जरीटः प्रियायाः ॥ १ ॥

मनोविनोदस्य।

मुहुरुल्लसितपुच्छप्रेङ्खितैः प्रेयसीनां
मनसि मनसिजस्य प्रीतिमुद्योतयन्ति।
नवकनवकपत्रच्छत्रसूनानुकूल-
स्थलकवलितकीटाः खञ्जरीटाश्चरन्ति ॥ २ ॥

अपिदेववामनदेवयोः।

अयं मेघव्यूहे बलिनि परिपन्थिन्यपसृते
शरज्जन्याः स्वैरं हसितमिव हर्षादविरतम्।
पयः पूरभ्रंशक्रमजनितसोपानसिकते
नदीतीरे धीरश्चरति विशदः खञ्जनगणः ॥ ३ ॥ सुवर्णस्य।
संप्रति दिङ्नागानां शरन्निराकृतघनान्धपटलानाम्।
खञ्जनकटाक्षपातैः कर्बुरितं गगनमाभाति ॥ ४ ॥ कस्यचित्।
मधुरमधुरं कूजन्नग्रे पतन्मुहुरुत्पत-

अविरतचलत्पुच्छः स्वेच्छं विचुम्ब्य चिरंप्रियाम् ।
इह हि शरदि क्षीवः पक्षौ विधूय मिलन्मुदा
मदयति रहः कुञ्जे मञ्जुस्थलीमधिखञ्जनः ॥ ५ ॥ जयदेवस्य ।

## १७१ हेमन्तः ।

यात्रालग्नं शिशिरमरुतां बान्धवः कुन्दलक्ष्म्याः
कालः सोयं कमलसरसां संपदः कालभूतः ।
निद्राव्याजाज्जडिमविधुरा यत्र गाढे हिमर्तौ
रामाः कण्ठग्रहमशिथिलं प्रेयसामाद्रियन्ते ॥ १ ॥ कस्यचित् ।
गर्वायन्ते पलालं प्रति पथिकशतैः पामराः स्तूयमाना
गोपान्गोगर्भिणीनां सुखयति वहलो रात्रिरोमन्थबाष्पः ।
प्रातः पृष्ठावगाढप्रथमरविरुचिर्ग्रामसीमोपशल्ये
शेते सिद्धार्थपुष्पच्छदनिचितहिमक्लिन्नपक्ष्मा महोक्षः ॥ २ ॥
योगेश्वरस्य ।

दिग्भागेषु हिमावृतिः प्रतिदिनं सान्द्रापि सान्द्रायते
प्रालेयैः पिहितप्रभो दिनपतिर्मन्दोपि मन्दायते ।
भर्तुर्मान्द्यशुचेव हन्त दिवसः क्षीणोप्ययं क्षीयते
तत्संकोचनिराकुलेव रजनी दीर्घापि दीर्घायते ॥ ३ ॥
लक्ष्मीधरस्य ।

पाकं यत्र न याति पाणिजभिदा यत्रातिशीतार्तिभि-
र्मोच्छेदनिवेदनं रतिकलावृत्तिक्षमा यत्क्षपा ।
जारन्यस्तरदच्छदव्रणसमाधानाय यन्मारुत-
स्तेमी संततकूटक्लृप्तकुलटामोदा मुदे वासराः ॥ ४ ॥
आचार्यगोपीकस्य ।

उद्ग्रीवा विवृतारुणास्यनयनास्तृष्णाचलत्तालवः
पक्षासंभववेपमानतनवः प्रोड्डीय किंचिन्मुहुः ।
अन्योन्याक्षमिणः शरारिशिशवः प्रातर्नदीरोधसि
प्रालेयाम्बु पिबन्ति वीरणदलद्रोणीप्रणालीस्रुतम् ॥ ५ ॥
कस्यचित् ।

## १७२ हेमन्तरात्रिः ।

अन्तर्मन्युविभिन्नदीर्घरसितप्रोद्भूतकण्ठव्यथै-
राक्रुष्टास्तटिनीषु कोकमिथुनैर्यावन्निशीथं मिथः ।
शीतोज्जागरजम्बुकौघमुखरग्रामोपकण्ठस्थलाः
कृच्छ्रेणोपरमन्ति पान्थगृहिणीचिन्तायता रात्रयः ॥ १ ॥
अभिनन्दस्य ।

विश्रामं भज तालवृन्त सुमनोवैकक्षक क्षम्यतां
श्रीखण्डद्रव वन्दितोऽसि सुमनोहाराः पुनर्दर्शनम् ।
दीपे संप्रति कर्मसाक्षिणि परीरम्भाय वामभ्रुवा-
मेकेऽपि प्रभवन्ति हैमननिशायामा निशायामिनः ॥ २ ॥
शुभाङ्कस्य ।

प्रोद्यत्प्रौढप्रियङ्गुद्युतिभृति विदलत्कुन्दमाद्यद्द्विरेफे
काले प्रालेयवातप्रचलविकसितोद्दाममन्दारदाम्नि ।
येषां नो कण्ठलग्ना क्षणमपि तुहिनक्षोददक्षा मृगाक्षी
तेषामायामियामा यमसदनसमा यामिनी याति यूनाम् ॥ ३ ॥
कस्यचित् ।

विलासिनां भाग्यविजृम्भितेन
यस्मिन्द्वयं साधु कृतं विधात्रा ।
यदङ्गनानां विपुलस्तनोष्मा
व्यधायि दीर्घाश्च कृता रजन्यः ॥ ४ ॥ पुरुषोत्तमस्य ।

हिमधवलकान्तिकेशी मन्दद्युतितारका बृहत्तिमिरा ।
द्विगुणीभूता रजनी वृद्धेव शनैः शनैर्याति ॥ ५ ॥ कस्यचित् ।

## १७३ हालिकः ।

लघुनि तृणकुटीरे क्षेत्रकोणे यवानां
नवकलमपलालस्रस्तरे सोपधाने ।
परिहरति सुषुप्तं हालिकद्वन्द्वमारा-
त्स्तनकलशमहोष्माबद्धरेखस्तुषारः ॥ १ ॥ भवभूतेः ।

इदानीमर्घन्ति प्रथमकलमच्छेदमुदिता-
नवीनान्धस्थालीपरिमलमुचो हालिकगृहाः ।
उदञ्चद्दोर्लीलारणितवलयाभिर्युवतिभि-
र्गृहीतप्रोत्क्षिप्तभ्रमितमसृणोद्गीर्णमुसलाः ॥ २ ॥ योगेश्वरस्य ।

भद्रं ते सदृशं यदध्वगशतैः कीर्तिस्तवोद्गीयते
स्थाने रूपमनुत्तमं सुकृतिना दानेन कर्णो जितः ।
इत्यालोक्य चिरं दृशा कृपणया दूरागतेन स्तुतः
पान्थेनैकपलालमुष्टिरुचिना गर्वायते हालिकः ॥ ३ ॥ तस्यैव ।

आहूतो हलिकेनाश्रुतामिव वचनं तस्य कृत्वा क्षणैकं
तिष्ठासुस्तब्धरोमा कथमपि विटपं निःसमीरं विहाय ।
दोर्भ्यामावृत्य वक्षस्थलमलसगतिर्दीनपादप्रचारः
शीत्कारोत्कम्पभिन्नस्फुटदधरपुटः पामरः क्षेत्रमेति ॥ ४ ॥
कस्यचित् ।

क्षेत्रोपान्तपलायमानशशकद्वन्द्वं निरीक्ष्यापरा-
नाहूयातिरसेन कर्षकजनानाबद्धकोलाहलाः ।
हस्तावापितदात्ररज्जुलगुडैर्वृद्धैरवृद्धैः सह-
त्यक्त्वा शालिचिकर्तिषामितइतो धावन्त्यमी पामराः ॥ ५ ॥

कस्यचित् ।

## १७४ हेमन्तपथिकः ।

मातर्धर्मपरे दयां कुरु मयि श्रान्ते च वैदेशिके
द्वारालिन्दककोणकेषु निभृतं स्थित्वा क्षिपामि क्षपाम् ।
इत्येवं गृहिणीप्रचण्डवदनावाक्येन निर्भर्त्सितो-
हस्तन्यस्तपलालमुष्टिविभवः पान्थः शनैर्गच्छति ॥ १ ॥

शतानन्दस्य ।

स्वैरं संचरति प्रदोषमरुति त्वङ्क्तुषारे जर-
त्तन्तुच्छेदविशीर्णसन्धिशकलव्याकृष्टकन्थाञ्चलः ।
शीतार्त्तः करुणार्द्रहालिकविनिर्दिष्टे क्षिपामि क्षपा-
मित्युच्चार्य पलालकूटकुहरे श्रान्तः प्रसुप्तोऽध्वगः ॥ २ ॥
रुन्धानः कर्णसन्धी शिशिरभरभयात्पाणियुग्मेन गाढं
वाढं विन्यस्य बाहुद्वयमुरसि रणद्दन्तपंक्तिः समन्तात् ।
अष्ठीवद्भ्यां विचुम्बन्निपतितचिबुकं पृष्ठमात्रं हिमर्तौ
शेते संछाद्य सद्यस्त्रुटितचिरजरत्कन्थया पान्थरङ्कः ॥ ३ ॥

सुब्रतदत्तस्य ।

पुण्याग्नौ पुण्यवाञ्छः प्रथममगणितप्रोषदोषः प्रदोषे
पान्थस्तप्त्वा प्रसुप्तः प्रतततनुतृणे धामनि ग्रामदेव्याः ।
उत्कम्पी कर्पटार्द्धे जरति पदहतिच्छिद्रिते च्छिन्ननिद्रो
वाते वाति प्रकामं हिमकणिनि कणन्कोणतः कोणमेति ॥ ४ ॥

बाणस्य ।

संविष्टो ग्रामदेव्यास्तृणघटितकुटीकुड्यकोणैकदेशे
शीते संवाति वायौ हिमकणिनि कणद्दन्तपंक्तिद्वयाग्रः ।
पान्थः कन्थां निशीथे परिकलितजरत्तन्तुसंतानगुर्वीं
ग्रीवापादाग्रजानुद्वयघटनरटत्कर्पटां प्रावृणोति ॥ ५ ॥ तस्यैव ॥

## १७५ शिशिरः ।

धन्यानां वरपूगपूरितमुखश्यामाङ्गनालिङ्गन-
प्राप्तानेकसुखप्रमोदवपुषां रम्यस्तुषारोद्गमः ।
अस्माकं तु विदीर्णखण्डितपटप्रच्छादितोद्घाटित-

क्रोडस्वीकृतजानुवेपथुमतां चेतः परं सीदति ॥ १ ॥

विरहिवनितावक्त्रौपम्यं बिभर्ति निशापति-
र्गलितविभवस्याज्ञेवाद्य द्युतिर्मसृणा रवेः ।
अभिनववधूरोषस्वादुः करीषतनूनपा-
दसरलजनाश्लेषक्रूरस्तुषारसमीरणः ॥ २ ॥ भासस्य ।

एते वामविलोचनाकुचसखैः सोढव्यशीतार्तयः
प्राप्ताः पश्चिमसैन्धवस्य मरुतः प्रेमच्छिदो वासराः ।
यत्रापास्य पुराणपङ्कजमयं देवः सशृङ्गारभू-
रादत्ते नवकुन्दकुड्मलशिखानिर्माणमन्यद्धनुः ॥ ३ ॥

प्रभाकरस्य ।

कम्पन्ते कपयो भृशं जडकृशं गोजाविकं ग्लायति
श्वा चुल्लीकुहरोदरं क्षणमपि क्षिप्तोपि नैवोज्झति ।
शीतार्तिव्यसनातुरः पुनरयं दीनो जनः कूर्मव-
त्स्वान्यङ्गानि शरीर एव हि निजे निह्नोतुमाकाङ्क्षति ॥ ४ ॥

शतानन्दस्य ।

पाकक्षामतिलाः समुत्सुकयितुं शक्ताः कपोतान्भुवः
श्यामत्वं फलपीड्यमानकुसुमानापद्यते सर्षपान् ।
वायुर्व्यस्तशणस्तुषारकणवानभ्येति कम्पप्रदः
पान्थैः शुष्कविवादबद्धकलहैः पुण्याग्निरासेव्यते ॥ ५ ॥

योगेश्वरस्य ।

## १७६ शिशिरग्रामः ।

आभोगिनः किमपि संप्रति वासरान्ते
संपन्नशालिफलपल्लविलोपशल्याः ।
ग्रामास्तुषारभरबन्धुरगोमयाग्नि-
धूमावलीवलयमेखलिनो हरन्ति ॥ १ ॥ अभिनन्दस्य ।

उद्वेगं जनयन्ति संचितवृषव्याप्ताजिरोपान्तकाः
प्रातः शीर्णकुटीरपुञ्जितलताशिम्बीतुषाराविलाः ।
ग्रामा गोमयधूमसंततिपरिक्लिष्टारुणश्मश्रुभि-
र्वृद्धैः कुड्यनिवातलीननिभृतैरभ्यर्थ्यमानातपाः ॥ २ ॥

योगेश्वरस्य ।

शालिच्छेदसमृद्धहालिकगृहाः संसृष्टनीलोत्पल-
स्निग्ध-श्यामयवप्ररोहनिविडव्यादीर्घसीमोदराः ।
मोदन्ते परिवृत्तधेन्वनडुहच्छागाः पलालैर्नवैः

संसक्तध्वनदिक्षुयन्त्रमुखरा ग्रामा गुडामोदिनः ॥ ३ ॥ कस्यचित् ।
जातोक्षोत्सुकगृष्टिभीषितशिशुत्रासार्त्तनारीगणाः
खिन्नास्तीर्णनवीनशालिसुरभिस्फीतोपलिप्ताजिराः ।
नेदीयःखलमृद्यमानमृदितस्तूपीकृतव्रीहयः
पान्थप्रार्थ्यपलालगोपनपराः प्रायोद्य पल्लीगृहाः ॥ ४ ॥ विरिञ्चेः ।
सीमान्तास्तुहिनागमे हलहतव्यासर्पिशस्याटवी-
नग्नप्रावरणा यवाङ्कुरचयं रोमाञ्चवद्बिभ्रति ।
ग्रामाः शालिपलालपिङ्गलखलप्रान्तज्वलत्पावक-
प्रोद्यन्मांसलधूमकम्बलमलं शीतालवो भेजिरे ॥ ५ ॥ पियाकस्य ।

## १७७ शिशिरशस्यानि ।

माषीणं मुषितं यवेषु यवसश्यामच्छविः शीर्यते
ग्रामान्ताश्च मधूकधूसरभुवः स्मेरं यवानीवनम् ।
पुष्पाढ्याः शतपुष्पिकाः फलभृतः सिद्ध्यन्ति सिद्धार्थकाः
स्निग्धा वास्तुकवास्तवः स्तबकितस्तम्बा च कुस्तुम्बरी ॥ १ ॥
शुभाङ्कस्य ।

सिद्धार्थाः फलसूचिबन्धगुरुभिर्लोलन्त्यमी पल्लवै-
रुच्छिन्दन्त्यध एव बन्धुरतया कोलीफलान्यर्भकाः ।
पाकप्रश्लथपत्रकोषदलनव्यक्ताङ्कुरग्रन्थयो
निष्ठीवन्त्यपि हस्तयन्त्रकलिताः पुण्ड्रेक्षुयष्ट्यो रसम् ॥ २ ॥
वाचस्पते ।

ईषल्लोमशभावभाञ्जि कपिशश्यामानुबन्धच्छवी-
लिप्तत्वञ्चि चकोरकीरहरितोन्मेषीणि माषीलताः ।
एतास्तर्कय बालवानरवधूहस्ताङ्गुलील ˘ म-
स्पर्द्धावन्ति फलानि बिभ्रति परीणामाभिरामश्रियः ॥ ३ ॥
वसुकल्पदत्तस्य ।

सिद्धार्थयष्टिषु यथोदयहीयमान-
संतानबद्धफलसूचिपरंपरासु ।
विच्छिद्यमानकुसुमासु जनिक्रमेण
पाकक्रमः कपिशिमानमुपादधाति ॥ ४ लक्ष्मीधरस्य ।
यवानीवल्लीभिः कपिशहरिताभिर्दिशि दिशि
श्रयन्ते सीमानः किमपि कमनीयत्वमधुना ।
प्रथन्ते सत्त्राणामपि च कुटिलाः काननभुवां
विलीनाशाबन्धाः शुकशिशुकतुण्डच्छविमुषः ॥ ५ ॥ भूषणस्य ।

।

द्वारं गृहस्यपिहितं शयनस्य पार्श्वे
वह्निर्ज्वलत्युपरि तूलपटो गरीयान् ।
अङ्केनुकूलमनुरागवशात्कलत्र-
मित्थं करोति किमसौ स्वपतस्तुषारः ॥ १ ॥ बाणस्य ।

ऊष्मायमाणस्तनमण्डलीभिर्वाराङ्गनाभिः स्फुटविभ्रमाभिः ।
आलिङ्गिता रात्रिषु शैशिरीषु ते शेरते यैः प्रणतो वृषाङ्कः ॥ २ ॥
कस्यचित् ।

मसृणघुसृणालेपस्तल्पं मरालतनूरुहैः
कुवलयदृशां गाढाश्लेषो विधूमहुताशनः ।
शिशिरसमये यद्येतानि प्रयान्ति सहायतां
सुरपतिपदारोहे वाञ्छा मनस्तव लाञ्छनम् ॥ ३ ॥ शङ्करस्य ।

सद्योधूपितमुत्प्रदीपमभितः संरुद्धवातायनं
शुभ्रं वेश्म मरालपक्ष्ममृदुला शय्या सचन्द्रातपा ।
अङ्के कुङ्कुमपिञ्जरा च रमणी पूगं मुखे नूतनं
स्याच्चेत्तद्विधिवञ्चितः स्पृहयति प्रावारभाराय कः ॥ ४ ॥
विरिञ्चेः ।

चूडागर्भनिवेशिदाम विकलं मुक्ताफलैर्भूषणैः
स्त्रीणां कुङ्कुमपिच्छिलास्तनभुवो गूढोदरं मन्दिरम् ।
छिन्नास्तूलपटाः प्रसर्पदगुरुग्रामाश्च धूमोद्गमाः
संभोगाय भवन्ति चात्र कृतिनां दीप्ता विशालाग्नयः ॥ ५ ॥
राजशेखरस्य ।

## १७६ उच्चावचम् ।

पश्यामो मयि किं प्रपद्यत इति स्थैर्यं मयालम्बितं
किं मामालपतीत्ययं खलु शठः कोपस्तयाप्याश्रितः ।
इत्यन्योन्यविलक्षदृष्टिचतुरे तस्मिन्नवस्थान्तरे
सव्याजं हसितं मया धृतिहरो मुक्तश्च बाष्पस्तया ॥ १ ॥ अमरोः ।

परिम्लाने माने मुखशशिनि तस्याः करधृते
मयि क्षीणोपाये प्रणिपतनमात्रैकशरणे ।
तया पक्ष्मप्रान्तव्रजपुटनिरुद्धेन सहसा
प्रसादो बाष्पेण स्तनतटविशीर्णेन कथितः ॥ २ ॥ तस्यैव ।

गते प्रेमाबन्धे प्रणयबहुमाने विगलिते
निवृत्ते सद्भावे जन इव जने गच्छति पुरः ।

तदुत्प्रेक्ष्योत्प्रेक्ष्य प्रियसखि गतांस्तांश्च दिवसा-
न्न जाने को हेतुर्दलति शतधा यन्न हृदयम् ॥ ३ ॥ तस्यैव ।

श्लिष्टः कण्ठे किमिति न मया मूढया प्राणनाथ-
श्चुम्बत्यस्मिन्वदनविरतिः किं कृता किं न दृष्टः ।
नोक्तः कस्मादिति नववधूचेष्टितं चिन्तयन्ती
पश्चात्तापं वहति तरुणी प्रेम्णि जाते रसज्ञा ॥ ४ ॥ तस्यैव ।

यावत्त्वच्चरितं प्रसङ्गत इव प्रस्तौमि तावत्तया
वन्दे तानहमित्युदीर्य शिरसा न्यस्तः प्रणामाञ्जलिः ।
तद्यावच्च रुषेव दोषमपि ते पृच्छामि नाभाष्य मां
निःश्वासैः कियदश्रुभिश्च कियदाख्यातं तवागस्तया ॥ ५ ॥
गोतिर्थीयदिवाकरस्य

इति श्रीधरदास कृते सदुक्तिकर्णामृते द्वितीयोस्मिन् ।
मदयतु सहृदय हासं शृङ्गाराख्यः प्रवाहोयम् ॥ १ ॥
इति श्रीमहामण्डलिक-श्रीधरदास-कृते सदुक्तिकर्णामृते
शृङ्गारप्रवाहो नाम द्वितीयः ॥ वीचयः १७६ । श्लोकाः ८७६ ।

---

## चाटुप्रवाहवीचयः ।

चाटुः संमुखचाटुर्विद्यागुणधर्मरूपमथ दृष्टिः ।
भुजकरचरणं प्रेयोभिधानमत्युक्तिचित्रोक्ती ॥ १ ॥
अपि कार्यगती देशाश्रयौ च दानं दरिद्रभरणं च ।
अतिदानमपि च विक्रमपौरुषशौर्यप्रतापतेजांसि ॥ २ ॥
गजवाजिनावनीकं खड्गोद्भुतखड्गकुपितकृपाणौ ।
चापं प्रयाणभोगावलितूर्यस्वानसैनिकरजांसि ॥ ३ ॥
अश्वरजो रणधूलिर्युद्धं युद्धस्थली च दिग्विजयः ।
रिपुरिपुनगरी-संभ्रमवैरिवधूवैरियोषिदश्रूणि ॥ ४ ॥
अरिनगरवैरिभवने यशसा वीर्यं यशः प्रशस्तयशः ।
कीर्तिः सवीर्यकीर्तिः प्रशस्तकीर्तिश्च कीर्तिगीतिश्च ॥ ५ ।
उच्चावचं चतुर्भिर्युतया पञ्चाशताथ वीचीनाम् ।
श्रीधरदासेन कृतः कृतिना चाटुप्रवाहोयम् ॥ ६ ॥

### १ सामान्यचाटुः ।

स्वामिन्नम्बुजनाथ धूर्जटिशिरश्चूडामणे चन्द्रमः
पादौ वां प्रणतोस्मि साधु वदतं तत्रप्रसूती युवाम् ।
राजा यद्यपसेविनाङ्घ्रिरखिलक्ष्मापालचूडाशतै-

रासीदस्ति भविष्यति क्षितितले श्रीभोजदेवोपमः ॥ १ ॥

छित्तपस्य।

कालिन्दि ब्रूहि कुम्भोद्भव जलधिरहं नाम गृह्णासि कस्मा-
च्छत्रोर्मे नर्मदाहं त्वमपि वदसि मे नाम कस्मात्सपत्न्याः।
मालिन्यं तर्हि कस्मादनुहरसि मिलत्कज्जलैर्मालवीनां
बाष्पाम्भोभिः किमासां समजनि कुपितः कुन्तलक्षोणिपालः ॥२॥

तस्यैव।

— — — ⏑ ⏑ — ⏑ — ⏑ ⏑ ⏑ — — — ⏑ — — ⏑ —

पाथोदेषु तटाभिघातदिवसादारभ्य नस्ताम्यति।
नूनं मालवराजदिग्जयविधौ तैः पीतमम्भोनिधे-
र्माद्यद्गन्धगजस्रवन्मदनदीगन्धानुविद्धं पयः ॥ ३ ॥ तस्यैव।

आ वाचां व्यक्तताया: कविपदविषयेष्वा च चष्टे समन्यो
मुक्तास्माभिर्न कोपि स्मरयदमवनौ संस्तुतः सत्यमेतत्।
मिथ्यैतद्भोः कथं रे ननु शतमकथाः कुन्तलेन्द्रस्य तत्त-
त्काव्यस्तोत्राणि धिक् त्वां जडमय न मनोरेव मूर्तिप्रभेदः ॥ ४ ॥

उमापतिधरस्य।

क्रूरे कद्रु किमात्थ दासि विनते मुक्तास्मि दत्त्वामृतं
तेनानायि सुधा मुधा तृणलिहो नागास्त्वया वञ्चिताः।
त्वत्पापैर्मुषिताः सुताः शृणु तृणं दत्त्वाद्य यावन्मुखे
वङ्गक्ष्मापतिसंगरेपि यदमी जीवन्ति भूमीभुजः ॥ ५ ॥

आचार्यगोपीकस्य।

## २ संमुखचाटुः।

पूर्वःकृतात्मनामसि भग्नानां समिति पश्चिमो द्विषताम्।
त्वं दक्षिणः प्रणमतां तथापि सर्वोत्तरस्त्वमसि ॥ १ ॥

योगेश्वरस्य।

यस्य द्वीपं धरित्री स च जलधिरभूद्यस्य गण्डूषतोयं
तस्याश्चर्यैकमूर्तेरपि नभसि वपुर्यत्र दुर्लक्ष्यमासीत्।
तत्पीतं त्वद्यशोभिस्त्रिभुवनमभजंस्तानि विश्रामहेतो-
स्तच्चान्तः कैटभारेः स च तव हृदये देव वन्द्यस्त्वमेव ॥ २ ॥

तथागतदासस्य।

न लोपो वर्णानां न खलु परतः प्रत्ययविधि-
र्विकारो नास्त्येव क्वचिदपि न भग्नाः प्रकृतयः।
गुणो वा वृद्धिर्वा सततमुपकाराय जगतां
मुनेर्दाक्षीपुत्रादपि तव समर्थः पदविधिः ॥ ३ ॥ शब्दार्णवस्य।

त्वं षाड्गुण्ययुषां शिरोमणिरसि त्रैगुण्यमूर्तेरसा-
विन्दुस्तत्र च षोडश त्वयि चतुःषष्टिर्वलन्ते कलाः ।
तस्यैकं ननु मण्डलं तव नव क्ष्मामण्डलीसिद्धय-
स्तेजश्चन्द्रमसो नृचन्द्र भवतश्चैवं दवीयोन्तरम् ॥ ४ ॥

लङ्कदत्तस्य ।

पीयूषं विषमप्यसूत जलधिः कान्तेः कलङ्कस्य च
स्थानं शीतरुचिः स्वभावकठिनो दाता च कल्पद्रुमः ।
अक्षीणप्रणयामृतस्य कलुषैरस्पृष्टमूर्तेरसं-
क्षिप्तत्यागरसोदयस्य भवतः साम्यं समभ्येतु कः ॥ ५ ॥

शरणदेवस्य ।

## ३ विद्या ।

वाचं निष्प्रथयन्ति मेयमखिलं पुष्णन्ति मुष्णन्ति च
प्रज्ञालाञ्छनमद्वयं प्रसुवते सारस्वतःब्राह्मणः :
सौभाग्यं दुहते श्रियं विदधति श्वः श्रेयसे तन्वते
भिन्दन्ति श्रमभुक्तयस्तव सतामष्टौ महासिद्धयः ॥ १ ॥

भट्टवामदेवस्य ।

जाताः स्मः प्रतिवेशिनः पदविदां जानन्ति नः श्रोत्रियाः
षट्कर्माध्वनि गच्छतां च विदुषां सार्थे प्रपन्ना वयम् ।
दृष्टाः स्मः कविविद्यया मुकुलितैर्नेत्रत्रिभागैश्चिरं
किं विद्मः कियदन्यथास्तु निकषग्रावा भवादृग्जनः ॥ २ ॥

विद्यापतेः ।

अग्राह्यं श्रवणस्य भूषणमलंकारो न भावोचितः
कण्ठस्याञ्जनमुज्ज्वलं नयनयोः सूक्ष्मत्वभावेक्षितुम् ।
वक्त्रस्याक्षणिकोधिवासनविधिः कान्ते प्रिये नाभव-
— — — प्रतिकर्मनिर्मितमहाविद्यैव येनात्मनः ॥ ३ ॥

शुभाङ्कस्य ।

कश्चिद्वाचो रचयितुमलं वोढुमेवापरस्ताः
सा कल्याणी मतिरुभयथा विस्मयं नस्तनोति ।
नन्वेकस्मिन्नतिशयवतां संनिवेशो गुणाना-
मेकः सूते कनकमनलस्तत्परीक्षाक्षमोन्यः ॥ ४ ॥ कालिदासस्य ।

देवः सर्वविवेचनैकनिपुणो देवः कवित्वे गुरु-
र्देवस्तर्कनिशातनिर्मलमतिः श्रीराजचूडामणिः ।
इत्याकर्ण्य विजृम्भमाणपुलकस्फीता विरिञ्चेर्मुखो-

त्सङ्गेष्वद्य सरस्वती ˘ ˘ ˘ — कृच्छ्रेण संमास्यति ॥ ५ ॥
वसुकल्पस्य ।

४ गुणाः ।

आबाल्याधिगमान्मयैव गमितः कोटिं परामुन्नते-
रस्मत्संकथनेन पार्थिवसुतः संप्रत्यसौ लज्जते ।
इत्थं खिन्न इवात्ययेन यशसा दत्तोवलम्बोम्बुधे-
र्यातस्तीरतपोवनानि भवतो वृद्धो गुणानां गणः ॥ १ ॥
श्रीहनूमतः ।

सूर्यो धामवतां न किं न किमयं प्रह्लादकश्चन्द्रमा-
गम्भीरो न किमम्बुधिः क्षितिभृतां रामः स जेता न किम् ।
किं त्वेकैकगुणस्तुतौ न हि वयं शक्तास्तदेतद्गुण-
श्रोतॄणां सुमहोत्सवाय नृपते त्वामेकमेव स्तुमः ॥ २ ॥ छित्तपस्य ।
एते शारदकौमुदीकुलभुवः क्षीरोदधेः सोदराः
शेषाहेः सुहृदो विनिद्रकुमुदश्रेणीसहश्राविणः ।
शीतांशोः सहपांशुखेलनसखाः स्वःसिन्धुसंबन्धिनः
प्रालेयाचलबन्धवस्तव गुणाः कैर्नेह कर्णार्पिताः ॥ ३ ॥ हरेः ।
देवस्य त्रिपुरारिहासमहसि प्रस्तूयमाने गुणे
प्रीत्या च श्रुतिकौतुकेन च बलादाकृष्यमाणः स्वयम् ।
एकं संनतपद्म पन्नगपतिर्धत्ते सहस्रं दृशा-
मन्यन्मन्थरतारकाविलुठनादत्यन्तविस्फारितम् ॥ ४ ॥ कस्यापि ।
मेरुर्दण्डो यदि च पटलं मेदिनीमण्डलं स्या-
च्छेषः सूत्रं समधरणमप्येषविन्ध्यो महीन्द्रः ।
तन्माता च त्रिपुरविजयी केशवो वा यदा स्या-
दुन्मीयेत क्षितिपतनय त्वद्गुणानां समूहः ॥ ५ ॥ प्रवरसेनस्य ।

५ धर्मः ।

भ्रान्तं येन चतुर्भिरेव चरणैः सत्याभिधाने युगे
त्रेतायां त्रिभिरङ्घ्रिभिः कथमपि द्वाभ्यां ततो द्वापरे ।
न स्यास्त्वं यदि देव पङ्गुलगुडः काले कलावुत्कले
सोयं पङ्गुरवस्थितैकचरणो धर्मः कथं भ्राम्यति ॥ १ ॥
कस्यचित् ।

उच्छिन्नेव कलौ वृषस्य चरणश्रेणी नदीनां पुन-
स्तां निर्माय कृतस्त्वया पुनरपि न्यस्तः पदस्यन्दनः ।
भिन्दानैस्तरणिं त्वदस्त्रनिहतैरेतत्किलोदीरितं

श्रुत्वानूरुरसौ विहाय मिहिरं त्वां देव सेविष्यते ॥ २ ॥
आचार्यगोपीकस्य ।

पदैश्चतुर्भिः सुकृते स्थिरीकृते कृतेमुना के न तपः प्रपेदिरे ।
भुवं यदेकाङ्घ्रिकनिष्ठया स्पृशन्दधावधर्मोपि कृशस्तपस्विताम् ॥ ३ ॥
श्रीहर्षस्य ।

यूपैरुत्कटकण्टकैरिव मखप्रोद्भूतधूमोद्गमै-
रप्यन्धंकरणौषधैरिव पदे नेत्रे च जातव्यथैः ।
यस्मिन्धर्मपरे प्रशासति तपःसंभेदिनीं मेदिनी-
मास्तामाक्रमितुं विलोकितुमपि व्यक्तं न शक्तः कलिः ॥ ४ ॥
जयदेवस्य ।

अश्रान्तविश्राणितयज्ञयूपस्तम्भावलीर्द्रागवलम्बमानः ।
यस्य स्वभावाद्भुवि संचचार कालक्रमादेकपदोपि धर्मः ॥ ५ ॥
उमापतिधरस्य ।

## ६ रूपम् ।

श्रीमद्रूपविटङ्कदेव सकलक्ष्मापालचूडामणे
युक्तं संचरणं यदत्र भवतश्चन्द्रेण रात्रावपि ।
माभूत्त्वद्वदनावलोकनवशाद्व्रीडाविलक्षः शशी
माभूत्तयमरुन्धतीपतिरपि त्वंशीलताभाजनम् ॥ १ ॥
त्रिभुवनसरस्वत्याः ।

आवक्त्रेन्दु तदङ्गमेव सृजतः स्रष्टुः समग्रास्त्विषां
कोषः शोषमगादगाधजगतीशिल्पेपि नाल्पायितः ।
निःशेषद्युतिमण्डलव्ययवशादीषल्लभैस्तत्तनू-
शेषः केशमयः किमन्धतमसस्तोमैरभून्निर्मितः ॥ २ ॥
श्रीहर्षस्य ।

एतत्ते मुखमक्षतेन्दु लडहच्छायं भवल्लोचनं
नीलेन्दीवरनिर्विशेषमधरस्ते बन्धुजीवारुणः ।
भ्रूवल्लिस्तव कामकार्मुकलतालीलासहाध्यायिनी
न ध्यायन्तु कथं नु देव कथय त्वामेकमेणीदृशः ॥ ३ ॥ हरेः ।

किं वातेन विलङ्घिता न न महाभूतार्दिता किं न न
श्रान्ता किं न न संनिपातलहरीप्रच्छार्दिता किं न न ।
तत्किं मुह्यति रोदिति श्वसिति च स्मेरं च धत्ते मुखं
दृष्टः किं कथयाम्यकारणरिपुः श्रीभोजदेवोनया ॥ ४ ॥ छित्तपस्य ।

रूपासवं तत्र नृपेन्द्र यदेणनेत्रा-

मात्रां व्यतीत्य नयनाञ्जलिभिः पिबन्ति ।
स्वेदच्छलादथ वमन्ति कदम्बकल्पै-
रङ्गैरनङ्गशरजर्जरितैर्भ्रमन्ति ॥ ५ ॥ शंकरदेवस्य ।

## ७ दृष्टिः ।

जनयति जननाथ दृष्टिरेषा तव नवनीलसरोरुहाभिरामा ।
प्रणयिषु सुसमाश्रितेषु लक्ष्मीमरिषु च भङ्गमनङ्गमङ्गनानाम् ॥१॥
विद्यायाः ।

प्रत्यञ्चत्खलरोहणाद्रिषु हठादामूलमुन्मूलय-
— — — ᵕ ᵕ कल्पशाखिषु सुधासान्द्राः सुहृन्मण्डले ।
प्रौढारातिचमूवनेषु दहनज्वालावलीभास्वराः
शृङ्गारैकरसायनानि सुभग त्वद्दृष्टिपाताः पुनः ॥ २ ॥
माधवस्य ।

यतो यतो नृपवर पक्ष्मपाटलं विलोचनं चलति तव प्रसीदतः ।
ततस्ततो नलिनवनाधिवासिनी तदीप्सया किल कमलानुधावति ३ ॥
कस्यचित् ।

ते कौपीनधनास्त एव हि परं धात्रीफलं भुञ्जते
तेषां द्वारि नदन्ति वाजिनिवहास्तैरेव लब्धा क्षितिः ।
तैरेतत्समलंकृतं निजकुलं किंवा बहु ब्रूमहे
ये दृष्टाः परमेश्वरेण भवता तुष्टेन रुष्टेन वा ॥ ४ ॥
जयादित्यस्य ।

तेषां द्वारि द्विरदपतयस्तद्वशा विश्वधात्री
तद्गेहिन्यस्तरलिततुलाकोटिसौधानटन्ति ।
हेमच्छत्रच्छुरितहरितो भूतयस्तान्भजन्ते
येषु प्रीत्या भवति भवतो दृष्टिपातप्रसादः ॥ ५ ॥ कस्यचित् ।

## ८ भुजः ।

वाल्मीके: कतमोसि कस्त्वमथवा व्यासस्य येनैष भोः
श्लाघ्यः स्यात्तव भोजभूपतिभुजस्तम्भस्तुतावुद्यमः ।
पङ्गुः पर्वतमारुरुक्षसि विधुस्पर्शं करेणेहसे
दोर्भ्यां सागरमुत्तितीर्षसि यदि ब्रूमः किमत्रोत्तरम् ॥ १ ॥
छित्तपस्य ।

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधय-
स्तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः ।

आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुव-
स्तावद्भिश्र्यदिमां स्मृतस्तवभुजो वाचस्ततो मुद्रिताः ॥ २ ॥

तस्यैव ।

मिथ्या देव भुजेन तेल्पविभवः कल्पद्रुमः स्पर्धते
नह्येतं भुवनत्रयाभयमहासत्री कृपाणोर्चति ।
चिन्त्यस्तत्र भवान्सकलपविटपी यस्यैतदेकार्णवे
कल्पान्ते विनिवेश्य विश्वमखिलं छायासु शेते हरिः ॥ ३ ॥

तस्यैव ।

शैलेन्द्रो दशकन्धरेण तुलितस्तं चार्जुनो हैहयः
काराधाम्नि बबन्ध तस्य च भुजारण्यं मुनिश्छिन्नवान् ।
इत्थं ग्रन्थिनिबद्धविक्रमकथासन्देहशल्याकुल-
त्रैलोक्यप्रतिपत्तिचुम्बकशिलास्तम्भस्तदीयो भुजः ॥४॥ भिक्षोः ।

प्रेतान्त्रोष्णीषवद्भिर्विकटकरिशिरःकर्पराक्रान्तहस्तैः
पार्श्वस्थाभिः प्रियाभिर्मदविकलपदं यत्तदप्युच्यमानैः ।
हेलानिर्वारितारे यममुसलपृथुः श्लाघ्यते दक्षिणस्ते
वेतालैः प्रस्तुतासु प्रतिसमरमसृक्पानगोष्ठीषु बाहुः ॥ ५ ॥

कस्यचित् ।

## ६ करः ।

उद्दण्डकोकनदकोमलकोषकान्तिकान्ताकुचग्रहणकण्टकितप्रकोष्ठः ।
मित्रद्विजातिरिपुबन्धुषु कामिनीषु संमानदानभयभोगकरः करस्ते १॥

विद्यायाः ।

निस्त्रिंशत्रुटितारिवारणघटाकुम्भास्थिकूटावट-
स्थानस्थायुकमौक्तिकोत्करकिरः कैरस्य नायं करः ।
उन्नीतश्चतुरङ्गसैन्यसमरत्वङ्गत्तुरङ्गक्षुर-
क्षुण्णासु क्षितिषु क्षिपन्निव यशः क्षौणीजबीजव्रजम् ॥ २ ॥

श्रीहर्षस्य ।

अस्माभिः स्मयलोलमौलिफलकैर्मुक्ताविसाराधिपं
वेदोद्धारपरः करस्तव परं दानाम्बुपूतः स्तुतः ।
किंतु क्ष्मातिलक क्षमस्व कविभिः किं नाम नालोक्यते
दृष्टः स्पष्टतया तवापि निभृतः पाणौ स वैसारिणः ॥ ३ ॥

आचार्यगोपीकस्य ।

तेषामल्पतरः स कल्पविटपी तेषां न चिन्तामणि-
श्चिन्तामप्यपयाति कामसुरभिस्तेषां न कामास्पदम् ।

दीनोद्धारधुरीणपुण्यचरितो येषां प्रसन्नो मना-
न्कपाणिस्ते धरणीन्द्र सुन्दरयशःसंरक्षिणो दक्षिणः ॥ ४ ॥
जयदेवस्य ।

देव त्वत्करपल्लवो विजयतामश्रान्तविश्राणन-
क्रीडास्कन्दितकल्पवृक्षविभवः कीर्तिप्रसूनोज्ज्वलः ।
यस्योत्सर्गतिलच्छलेन गलिताः स्यन्दानदानोदक-
स्रोतोभिर्विदुषां ललाटलिखिता दैन्याक्षरश्रेणयः ॥ ५ ॥ तस्यैव ।

१० चरणः ।

लक्ष्मीवशीकरणचूर्णसहोदराणि त्वत्पादपङ्कजरजांसि चिरं जयन्ति ।
यानि प्रणाममिलितानि नृणां ललाटे लुम्पन्ति दैवलिखितानि दुरक्षराणि॥
अभिनन्दस्य ।

लक्ष्मीसद्मसरोजरेणुसुहृदः सेवाबनम्रीभव-
द्भूमीपालकिरीटरत्नकिरणज्योत्स्नानदीवालुकाः ।
जीयासुः कलिकालकर्ण नृपते दारिद्र्यरुद्रा्क्षर-
व्याघूर्णद्घुणवृन्दलङ्घनमुषस्त्वत्पादयोः पांशवः ॥ २ ॥
वल्लणस्य ।

देवस्याङ्घ्रिनखप्रभासु निजया मौलीन्द्रनीलत्विषा
निर्माय त्रिदशापगायमुनयोः संभेदमत्यद्भुतम् ।
वन्द्य त्वत्पदवन्दनान्यधमिलद्दुष्कर्मनिर्मज्जन-
प्रायश्चित्तमिवाचरन्नरपतिः को नाम नो पुप्लुवे ॥ ३ ॥ प्रशस्तस्य ।
लक्ष्मीविभ्रमसद्मपद्मसुभगं के नाम नोर्वीभुजो-
देव त्वच्चरणं व्रजन्ति शरणं श्रीरक्षणाकाङ्क्षिणः ।
छायायामनुगम्य सम्यगभयास्त्वद्वीर्यसूर्यातप-
व्यातामप्यवनीमटन्ति रिपवस्त्यक्तातपत्राः सुखम् ॥ ४ ॥
जयदेवस्य ।

आ पूर्वस्माद्विडौजःकरिवमथुपयःसिक्तसानोर्गिरीन्द्रा-
दा च प्रत्यक्पयोधेर्वरुणवरवधूनाभिनिष्पीतवारः ।
आ मेरोरा च सेतोरवनितलमिलन्मौलिविस्रंसमान-
स्रग्दामानो यदीयं चरणमशरणाः पर्युपासन्नरेन्द्राः ॥ ५ ॥
वसुकल्पस्य ।

११ प्रियाव्याख्यानम् ।

सौजन्याम्बुनिधे बुधप्रिय गुणप्राकार धर्मद्रुम-
प्ररोह प्रतिपन्नवत्सल महात्यागिन् विवेकाश्रय ।

लक्ष्म्यावास मनस्विनी-मनसिजव्यापारदीक्षागुरो
स्वामिन्मुञ्ज किमित्यमुं जनमुपस्प्रष्टुं दृशा नार्हसि ॥ १ ॥
भोजदेवस्य ।

सौजन्याङ्कुरकन्द सुन्दरकथासर्वस्व सीमन्तिनी-
चित्ताकर्षणमन्त्र मन्मथसुहृत्कल्लोलवाग्वल्लभ ।
सौभाग्यैकनिवेश पेशलगिरामाधार धैर्याम्बुधे
धर्माद्रिद्रुम राजशेखरकवे दृष्टोसि यामो वयम् ॥ २ ॥
अभिनन्दस्य ।

संकल्पेङ्कुरितं द्विपत्रितमथ प्रस्थानवेलागमे
मार्गे पल्लवितं पुरं प्रविशतः शाखाशतैरुद्गतम् ।
भ्रातर्भाविनि दर्शने मुकुलितं दृष्टे तदेव त्वयि
प्रोत्फुल्लं फलितं च संप्रति मनोराज्यद्रुमेणाद्य मे ॥ ३ ॥
छित्तपस्य ।

द्वीन्द्रं भाति जगत्त्रिधाम गगनं विश्वं चतुर्दैवतं
पञ्चाम्नायमिदं च वाङ्मयमयं षट्सायको मन्मथः ।
सप्तांशः परिवत्सरोष्टजलधिस्फारं धरामण्डलं
दिक्चक्रं नवनायकं क्षितिपतिश्रेष्ठ त्वयि भ्राजति ॥ ४ ॥ तस्यैव ।

लक्ष्मीकेलिभुजङ्ग जङ्गमहरे संकल्पकल्पद्रुम
श्रेयःसाधकसङ्ग सङ्गरकलागाङ्गेय वङ्गप्रिय ।
गौडेन्द्र प्रतिराजराजकसभालंकार कारार्पित-
प्रत्यर्थिक्षितिपाल पालक सतां दृष्टोसि तुष्टा वयम् ॥ ५ ॥
जयदेवस्य ।

## १२ अत्युक्तिः ।

मौलौ धारय पुण्डरीकममितं तन्वात्मनो विक्रमं
चक्राङ्कं वह पादपद्ममवनिं दोष्णा समभ्युद्धर ।
लक्ष्मीं भ्रूनिकटे निवेशय भव ज्यायान्दिवौकस्पते-
र्विश्वान्तः करणैकचौर तदपि ज्ञातो हरिः खल्वसि ॥ १ ॥
छित्तपस्य ।

हंसज्योत्स्नाकुमुदविशदे सैकतेस्मिन्सरय्वा-
वादद्यूतं चिरतरमभूत्सिद्धयूनोः कयोश्चित् ।
एको ब्रूते प्रथमनिहतं कैटभं कंसमन्यः
स त्वं तत्त्वं कथयभवता को हतस्तत्र पूर्वम् ॥ २ ॥ तस्यैव ।

हस्ते कल्पतरुं मुखे हिमकरं बाह्वोरनन्ताह्वयं
रोषे तत्किलकालकूटगरलं तोषे हरिप्रेयसीम् ।

ओजस्यावृणु नाम वाडवमिमामुद्घाट्य मर्यादितां
घोषोयं नवनीरधे वनपते छद्मावतारे श्रमः ॥ ३ ॥ महिम्नस्य ।

उन्निद्रेण मयाद्य चिन्तितमभूद्यत्रावतारा हरे-
राख्याता दश कीर्तितोसि न कथं तत्र त्वमेकादशः ।
त्वच्चारित्रमगोचरं कविगिरां जानन्नपि क्ष्मापते
न प्रस्तौमि भयेन भारतकवेः कस्तादृशं वक्ष्यति ॥ ४ ॥

आचार्यगोपीकस्य ।

भूत्या रञ्जय विश्वमुद्वह नखच्छद्मार्धचन्द्रं पदं
दृष्टिं धेहि हृदि स्फुटं भव वृषाधारो द्विजिह्वं त्यज ।
संक्रुद्धो दह विद्विषां पुरशतं दुर्गानुरागोज्झितः
क्षोणीनाथ तथाप्युदारचरितैर्ज्ञातो भवानीश्वरः ॥ ५ ॥

वसन्तदेवस्य ।

## १३ चित्रोक्तिः ।

सन्तः कण्टकिताः कथं यदि कृता निष्कण्टका मेदिनी
प्रख्याता यदि ते गुणाः कथमथ प्रस्तौति दोषं जनः ।
नीतावाद्यधुरंधरो यदि भवान्कस्मादनीतिः प्रजा
वृत्तं देव न चित्रमेव हि न चेच्चित्रं विधत्से कथम् ॥ १ ॥

समन्तभद्रस्य ।

क्षौणीन्द्र त्यजति क्षमां त्वयि रणे दोःशालिनोप्यक्षमाः
प्रत्यर्थिष्वथ कम्पमानतनुषु त्वं चापि कम्पाकुलः ।
त्वं गृह्णासि भुवः करं मृगदृशामेतेपि च स्वभुवां
तेभ्यस्तेभ्योधिकं नु किं गुणिभिरप्युद्गीयते यद्भवान् ॥ २ ॥

धोयीकस्य ।

एकस्त्रिधा हृदि सदा वससीति चित्रं
यो विद्विषां च विदुषां च मृगीदृशां च ।
तापं च संमदभरं च रतिं च पुष्ण-
ञ्शौर्योष्मणा च विनयेन च लीलया च ॥ ३ ॥ श्रीहनूमतः ।

त्वं द्वित्राणि पदानि गच्छसि महीमुल्लङ्घ्य यान्ति द्विष-
स्त्वं बाणान्दश पञ्च मुञ्चसि बहून्यस्त्रापि मुञ्चन्ति ते ।
ते देवीपतयस्तवासिनिहतास्त्वं मानुषीणां पति-
स्ते निन्द्यास्तववर्णनं कथमिति श्रीकर्ण निर्णीयताम् ॥ ४ ॥

विद्यापतेः ।

कर्णः सर्वशिरोगतस्त्रिभुवने कर्णेन किं न श्रुतं
विश्राम्यन्ति मृगीदृशामपि दृशः कर्णे न चित्रं क्वचित् ।

आश्चर्यं पुनरेतदेव यदयं निश्छिद्रसन्मण्डलः
सप्ताम्भोनिधिमेखलां वसुमतीं धत्ते जगन्मण्डनः ॥ ५ ॥

कस्यापि ।

## १४ कार्यगर्वः ।

पृथुरसि गुणैः कीर्त्या रामो न लोभरतो भवा-
न्महति समरे शत्रुघ्नस्त्वं सदैव युधिष्ठिरः ।
इति सुचरितैर्बिभ्रद्रूपं चिरन्तनभूभृतां
कथमसि न मांधाता देवत्रिलोकविधाप्यपि ॥ १ ॥ वीर्यमित्रस्य ।

त्वं चेन्नाथ कलानिधिः शशधरस्तत्तोयनाथा वयं
मर्यादानिधिरम्भसां पति रथ त्वं चेद्वयं वारिदाः ।
सर्वाशापरिपूरको जलधरस्त्वं चेद्वयं भूरुहः
सन्मार्गस्थिति-विश्रुतस्त्वमिति चेच्छाखी वयं चाध्वगाः ॥२॥

कस्यचित् ।

लभ्यन्ते यदि वाञ्छितानि यमुनाभागीरथीसंगमे
देव प्रेष्यजनस्तवैव भवतो भर्तव्यतां वाञ्छति ।
नन्वेतन्मरणान्न किं नु मरणं कायान्मनो-विच्युति-
र्दीर्घं जीव मनस्त्वदङ्घ्रिकमले कायोत्र नः केवलम् ॥ ३ ॥

छित्तपस्य ।

सेव्यश्चिन्तामणिर्वा सुरतरुरथवा रोहणो वा गिरीणां
भर्ता वा जातकोपे त्वयि निखिलमहादाननिर्व्याजवीरे ।
एकश्चैतन्यशून्यस्त्यजति कठिनतां नापरश्छेदखेदं
धत्तेन्यः किंनराणामधिपतिरपरः कस्त्वयाभ्यर्थनीयः ॥ ४ ॥

शरणस्य ।

प्रीतस्त्वं वेदवादैर्मम तु निरवधिर्नाथ निर्वेदवादः
साकूतस्त्वं कलासु प्रतिदिनविकला वृत्तिरेका ममैव ।
साध्यस्त्वं भावशुद्ध्या मम तु विजयते कोप्यभावस्तदित्थं
लीलारामो गुणानां मम विगुणनिधेः केरुपायैरुपास्यः ॥ ५ ॥

तस्यैव ।

## १५ देशाश्रयः ।

भूपालाः शशिभास्करान्वयभुवः के नाम नासादिता-
भर्त्तारं पुनरेकमेव हि भुवस्त्वामेव मन्यामहे ।
येनाङ्गं परिमृद्य कुन्तलमपाकृष्य व्युदस्यायतं
चोलं प्राप्य च मध्यदेशमचिरात्काञ्च्यां करः पातितः ॥ १ ॥

विद्यायाः ।

हेलानिर्जितकामरूप सहसा कृत्वाकुलान्कुन्तला-
श्चोलध्वंसनमङ्गमर्दनमपि द्रागेव संपाद्यते ।
निर्जित्यैव च मध्यदेशमचिरात्काञ्च्यां करः पातितो
नीत्वैवं वशतां प्रियेण भवताभीकेन भूर्भुज्यते ॥ २ ॥
शब्दार्णवस्य ।

दे[illegible] त्वं किल कुन्तलग्रहरुचिः काञ्चीमपासारयन्
छिन्नः छिन्नकरग्रहः प्रहणनं प्रारब्धमङ्गेष्वपि ।
इत्याकूतजुषस्तव स्तवकृता वैतालिकेनोदिते
लज्जन्ते प्रमदाः परस्परमभिप्रेत्यारयो बिभ्यति ॥ ३ ॥ कस्यचित् ।

भ्रूक्षेपाद्गौडलक्ष्मीं जयति विजयते केलिमात्रात्कलिङ्गां-
श्चेतश्चेदिक्षितीन्द्रोस्तपति वितपते सूर्यवद्दुर्जनेषु ।
स्वेच्छाम्लेच्छान्विनाशं नयति विनयते कामरूपाभिमानं
काशीभर्तुः प्रकाशं हरति विहरते मूर्ध्नि यो मागधस्य ॥ ४ ॥
शरणदेवस्य ।

त्वं चोलोल्लोललीलां कलयसि कुरुषे कर्षणं कुन्तलानां
त्वं काञ्चिन्यञ्चनाय प्रभवसि रभसादङ्गसङ्गं करोषि ।
इत्थं राजेन्द्र वन्दिस्तुतिभि[illegible]मेवाद्य दीर्घं
नारीणामप्यरीणां हृदयमुदयते त्वत्पदाराधनाय ॥ ५ ॥ जयदेवस्य ।

## १६ दानम् ।

कतिषु न कृता सेवा के वा न वाग्विभवैस्तुता-
स्तृणमपि गुणप्रीतः प्रादान्न कोपि विपश्चिताम् ।
अयमिह परं दुःखज्वालाकलापमखण्डय-
त्कनकपयसां धारादण्डैरकाण्डघनाघनः ॥ १ ॥ बिल्हणस्य ।

पूर्णाग्रे कलसो विलासवनिता स्मेरानना कन्यका
दानक्लिन्नकपोलपद्धतिरिभो गौरद्युतिर्गौर्वृषः ।
क्षीरिद्रुमारुहि वायसो मधुरवाग्वामा शिवेति ध्रुवं
त्वां प्रत्युच्चलतां नरेन्द्रतिलक प्रादुर्भवन्त्यर्थिनाम् ॥ २ ॥
परमेश्वरस्य ।

विस्तीर्णः परिपन्थिकण्टकशतास्तीर्णो दुरध्वान्तरः
क्रूरश्वापदकोटिसंकटशिला शैलाटवी लङ्घिता ।
प्राप्ता त्वत्कटकोपकण्ठतटिनी दत्तो निवापाञ्जलि-
र्दारिद्र्याय नकारमूक नृपते दृष्टोसि तुष्टा वयम् ॥ ३ ॥
राजोकस्य ।

वासः स्वर्णगृहेषु सख्यममरैः कल्पद्रुमाणां वने

क्रीडास्वर्गवधूगणैः सह सुधाकण्ठं मुदा पीयते ।
रुष्टेनेदमकारि देव भवता हत्वा रणे वैरिणां
तुष्टः प्रेष्यजनाय वेद्मि न परं गौडेन्द्र किं दास्यसि ॥ ४ ॥
धर्मयोगेश्वरस्य ।

त्वन्नेत्रेपि तवाननेपि भवतः पाणावपि त्वत्पदे-
प्यास्ति स्मेरसरोजसौहृदसमाकृष्टेव पद्मालया ।
यन्नीता निजभावमार्थिभिरसौ त्वद्दृष्टिपातैस्त्वदा-
देशात्त्वत्करविभ्रमैरपि भवत्पादप्रसादादपि ॥ ५ ॥ शरणस्य ।

## १७ दरिद्रभरणम् ।

येषां वेश्मनि कम्बुकर्परचलत्तर्कुध्वनिर्दुःश्रवः
प्रागासीन्नरनाथ संप्रति पुनस्तेषां तवानुग्रहात् ।
षड्जादिक्रमरङ्गदङ्गुलिचलत्पाणिस्खलत्कङ्कण-
श्रेणीनिस्वनमांसलः कलगिरां वीणारवः श्रूयते ॥ १ ॥
भासोकस्य ।

कार्पासास्थिप्रचयनिचिता निर्धनश्रोत्रियाणां
येषां वात्याप्रविततकुटीप्राङ्गणान्ता बभूवुः ।
तत्सौधानां परिसरभुवि त्वत्प्रसादादिदानीं
क्रीडायुद्धच्छिदुरयुवतीहारमुक्ताः पतन्ति ॥ २ ॥ शुभाङ्कस्य ।

बालास्तालमहीरुहो घनदलस्निग्धा गृहप्राङ्गणे
सूक्ष्मेभ्यस्तव संदिशन्ति सुचिरं जीव प्रसन्ने त्वयि ।
कर्णालंकृतकेन कोमलदलं मुञ्चन्ति नो निर्दया
निःस्वश्रोत्रियवल्लभाः श्रुतियुगे हैमस्फुरत्कुण्डलाः ॥ ३ ॥
उमापतेः ।

उच्छिद्राणि दिगम्बरस्य वसनान्यर्धाङ्गनास्वामिनो
रत्नालंकृतिभिर्विशेषितवपुःशोभाःशतं सुभ्रुवः ।
पौराढ्याश्च पुरीः श्मशानवसतेर्भिक्षाभुजोप्यक्षमा
लक्ष्मीं न व्यतभोर्दरिद्रभरणेष्वज्ञो हि सेनान्वयः ॥ ४ ॥
उमापतिधरस्य ।

मुक्ताः कार्पासबीजैर्मरकतशकलं शाकपत्रैरलाबू-
पुष्पैरूप्याणि रत्नं परिणतिभिदुरैः कुक्षिभिर्दाडिमीनाम् ।
कूष्माडीवल्लरीणां विकसितकुसुमैः काञ्चनं नागरीभिः
शिक्ष्यन्ते त्वत्प्रसादाद्बहुविभवजुषां योषितःश्रोत्रियाणाम् ॥५॥ तस्यैव

## १८ अतिदानम् ।

कूजत्कोकिलकाकलीश्रुतिसुखी निद्राति कल्पद्रुम-

स्तृप्ता बालतृणेन कामसुरभी रोमन्थमभ्यस्यति ।
दातुं नाथ सदा समीहितफलं लग्नोसि नेत्रेर्थिनां
बद्धस्तर्हि चिराय रोहणगिरेष्टङ्कव्रणैरङ्कुरः ॥ १ ॥ कामदेवस्य ।
अर्थिभ्रंशबहूभवत्फलभरव्याजेन कुब्जायितः
सत्यस्मिन्नतिदानभाजि कथमप्यास्तां स कल्पद्रुमः ।
आस्ते निर्व्ययरत्नसंपदुदयोदग्रः कथं याचक-
श्रेणीवर्जनदुर्यशोनिविडितव्रीडस्तु रत्नाचलः ॥ २ ॥ श्रीहर्षस्य ।
जाने विक्रमवर्द्धन त्वयि घनं विश्राणयत्यर्थिनां
भावी शोण इवोपलैरुपचितो रत्नैरगाधोम्बुधिः ।
उत्पश्यामि च रोहणैर्मणिभरैराध्मायमानोदरः
पाकोत्पीडितदाडिमीफलदशां कैश्चिद्दिनैर्यास्यति ॥ ३ ॥
डिम्बोकस्य ।
भ्रातश्चक्र व्यपनय शुचं प्रेयसीविप्रयोगा-
दाधिव्याधिर्न खलु रजनीं प्राप्य भावी पुनस्ते ।
दानैर्न्नान्यः कलय कुरुते काञ्चनाद्रेः समाप्ति-
र्भाविन्यस्माद्दिनकतिपयैर्वासराद्वैत-सिद्धिः ॥ ४ ॥ सागरस्य ।
अन्विष्यद्भिरयं चिरात्कथमपि प्राप्येत यद्यर्थिभि-
र्नाथ त्वं पुनरर्थिनः प्रतिदिनं यत्नात्समन्विष्यति ।
प्राप्तौ चिन्तितमात्रकं ददद्सौ चिन्तातिरिक्तप्रदं
त्वामालोक्य विदीर्यते यदि न तदुग्रावैव चिन्तामणिः ॥ ५ ॥
छित्तपस्य ।

## १६ विक्रमः ।

देवे निर्भरसाहसैकरासिके निःशङ्कवीरेधुना
निःसीमप्रसरे निरंकुशमतौ ज्ञाते मनाङ्निर्दये ।
निः संपत्ति निरायुधं निरशनं निर्भूमि निःसैनिकं
निस्तेजश्च निराश्रयं च निखिलं तद्राजकं वर्तते ॥ १ ॥
वसुकल्पस्य ।
मत्पर्यन्तवसुन्धराविजयिने मुक्तादि रत्नं मया-
त्तव्यं ढौकितुमेव सोहमधुना जातोस्मि निष्किञ्चनः ।
इत्युत्क्षालितबाहुवीचिरुदयन्मार्तण्डबिम्बच्छला-
त्प्राप्तस्तप्तकुठारमेष वहते देव त्वदग्रेम्बुधिः ॥ २ ॥ कस्यापि ।
शस्त्रैः शत्रुशिरोधितक्षणकलातीक्ष्णोज्ज्वलैः किंतरा-
मद्यापि क्षितिपाललक्षणधरौ क्लिश्नासि कान्तौ करौ ।

ताटङ्कक्रूरकटाक्षवीक्षणमिलन्मौर्वीकमुर्वीतले
सोढा कस्तव देव कोपविशिखं भ्रूकार्मुकं भूपतिः ॥ ३ ॥

करञ्जयोगेश्वरस्य ।

यद्यङ्केषु कराः शतं प्रतिकरं यद्यङ्गुलीनां शतं
प्रत्येकं यदि पर्वसंधिषु भवन्त्येतासु रेखाः शतम् ।
शक्यन्ते निपुणैस्तदा गणयितुं येन स्वदोर्विक्रमै-
रुत्खाताः कति रोपिताः कति कति व्यापादिताः क्ष्माभुजः ॥४॥

वामदेवस्य ।

शिक्षन्ते चाटुवादान्विदधति यवसानानने काननेषु
भ्राम्यन्ति ज्याकिणाङ्कं विदधति शिविरं कुर्वते पर्वतेषु ।
अभ्यस्यन्ति प्रणामं त्वयि चलति चमूचक्रविक्रान्तिभाजि
प्राणत्राणाय देव त्वदरिनृपतयश्चक्रिरे कार्मणानि ॥ ५ ॥

जयदेवस्य ।

## २० पौरुषम् ।

समाजे सम्राजां सदसि विदुषां धाम्नि धनिनां
निकाये नीचानामपि च रमणीनां परिषदि ।
कथं चिद्यत्र स्मः क्षणमतिथयस्तत्र शृणुमः
स्फुरद्रोमोद्भेदाः सुभग भवतः पौरुषकथाः ॥ १ ॥ छित्तपस्य ।

दैवेन त्वदरेस्तवापि सदृशी प्रायः पराजेष्यते
नान्येनेति किल द्वयोरपि लिपिर्न्यस्ता ललाटे ध्रुवम् ।
भूयानर्थकृतस्तु संप्रति तयोर्भेदः समुन्मीलति
स्थाने पौरुषमाश्रयन्ति कृतिनो दैवे निरस्यादरम् ॥ २ ॥

लङ्कदत्तस्य ।

बाहू द्वाविदमेकमेव भुवनं कस्तत्र वीरो रसः
साम्राज्यस्य च पूर्वपूरुषभुजजुग्गस्य किं न प्रियम् ।
इत्यूर्जस्वलपौरुषस्य पुरुषप्रायं जगत्पश्यतो
यस्यात्मापि न मानिनो बहुमतः कुत्रेतरे क्षत्रियाः ॥ ३ ॥

शुङ्गोकस्य ।

गन्धेभस्कन्धकण्डूमदगुरुमरुदुल्लोललौहित्यखेल-
द्वीचीवाचालकालाचलरिपुशशिना केलितल्पे निषण्णाः ।
कामिन्यः सैनिकानां विधुतविधुरताभीतयो गीतबद्धै-
र्यत्र प्राग्ज्योतिषेन्द्रप्रणतिपरिगतं पौरुषं प्रस्तुवन्ति ॥ ४ ॥

उमापतिधरस्य ।

भीष्मः क्लीवकतां दधार समिति द्रोणेन मुक्तं धनु-
र्मिथ्या धर्मसुतेन जल्पितमभूद्दुर्योधनो दुर्मदः।
छिद्रेष्वेव धनंजयस्य विजयः कर्णः प्रमादी ततः
श्रीमन्नास्ति न भारतेपि भवतो यः पौरुषैर्वर्धते ॥ ५ ॥ जयदेवस्य।

## २१ शौर्यम्।

व्यायामोचितबाहुसाहसवशादेकोपि कोपोत्कटं
वक्षस्युत्कटसोढसायकभरो भिन्दन्बहून्विद्विषः।
त्वं यस्मादयशस्त एव समिति त्रस्तो न शस्त्रक्षतै-
स्तेनैवायशसः परिग्रहममी मुक्तायुधाः कुर्वते ॥ १ ॥
कमलगुप्तस्य।

अयं सेनोत्तंसः करकृतकृपाणो रणभुवि
द्विषद्भूमीपालाः किमपसरत प्राणकृपणाः।
किमभ्यर्थ्यः पृथ्वीधरकुहरवासोद्य भवतां
न किं हृद्या विद्याधरनगरनीलोत्पलदृशः ॥ २ ॥ कस्यचित्।
कः शैलान्गिलति क्षमां चलयति क्षाराम्बुधौ धावति
को वा चुम्बति सूर्यबिम्बमनलज्वालां समालिङ्गति।
लीलोल्लासितकृतमस्तकामिव व्यालोल-जिह्वालतं
कस्त्वां काञ्चनभृङ्गसंगरजयश्रीघोषणाघोषणाः ॥ ३ ॥
करञ्जधनञ्जयस्य।
देव त्वत्तत्प्रतापज्वलनकवलिता सर्वतो दह्यमानै-
रङ्गैर्युक्तं यदेते हिमगिरिशिखरोत्सङ्गमीयुर्नरेन्द्राः।
किंतु त्वच्छौर्यलीलामनुहरति पुरः सिंहयूनां निकाये
तत्राप्यातङ्कभाजः क्व ननु विधिहताः स्थैर्यमासादयन्ति ॥ ४ ॥
युवराजदिवाकरस्य।

॥ ५ ॥

।

## २२ प्रतापः।

कूर्मः पादोस्य यष्टिर्भुजगपतिरसौ भाजनं भूतधात्री
तैलोत्पूराः समुद्राः कनकगिरिरयं दीप्तवर्तिप्ररोहः।
अर्चिश्चण्डांशुरोचिर्गगनमलिनिमा कज्जलं दह्यमाना
शत्रुश्रेणी पतङ्गा ज्वलति रघुपते त्वत्प्रतापप्रदीपः ॥ १ ॥
श्रीहनूमतः।

तादृग्दीर्घविरिञ्चिवासरविधौ जानामि यत्कर्तृता
शङ्के यत्प्रतिविम्बमम्बुधिपयःपूरोदरे वाडवः ।
तत्तादृक्प्रतिपक्षराजकयशस्ताराः पराभावुकः
कासामस्य न स प्रतापतपनः पारं गिरां गाहते ॥२॥ श्रीहर्षस्य ।

निष्पिष्टप्रतिराज राजति सजातीयत्रयं तेजसा-
मौर्वश्चाग्निरिरंमदश्च भवतश्चैष प्रतापानलः ।
आद्यो माद्यति वारिभिर्जलनिधेरम्भोमुचां मध्यमः
प्रत्यर्थिक्षितिपालयौवतदृशामुद्गत्वरैरन्तिमः ॥ ३ ॥ हरेः ।

वंशोत्तंसमशोकसंकुलमतिप्रोद्दामबाणासनं
दृप्यद्द्वीपि चमच्चमूरु निनदद्दन्ति भ्रमत्खड्गि च ।
यस्योज्जागरनागरङ्गमभितः पुंनागपुण्याश्रयं
जग्राह प्रतिराजकं वनमतिक्रूरः प्रतापानलः ॥४॥ शुङ्गोकस्य ।

एकद्वित्रिकलाक्रमेण शशिनं गृह्णन्विमुञ्चन्नयं
यच्चण्डद्युतिरातनोति भगवानद्यापि चान्द्रायणम् ।
देवैतद्भवदीयभास्वरभुजस्तम्भप्रतापानल-
स्पर्धायै क्रमभुक्तलाञ्छनपशोर्नैतत्पुनः सेत्स्यति ॥ ५ ॥
आचार्यगोपीकस्य ।

## २३ तेजः ।

शुष्यन्त्येव पयोधयो न मणयः कुर्युः पदं चेदधः
शुष्यत्यण्डमपीदमम्बुजभुवो मन्त्रा भवेयुर्न चेत् ।
किं चैते शतशः स्फुटन्ति गिरयो दध्युर्न चेदोषधी-
स्तेजोभिस्तव देव भूरपि भुजच्छायासु विश्राम्यति ॥ १ ॥ हरेः ।

त्वत्तेजःसविता पितामहपुरीमध्यास्त यल्लीलया
यच्चक्रे भुजगेन्द्रसद्मसु तमश्छेदं न तत्राद्भुतम् ।
चित्रं यत्परिपन्थिपार्थिवमुखाम्भोजान्यनुज्जागरी-
कुर्वाणस्त्रिजगद्विलङ्घनपरो नास्ताचलं चुम्बति ॥ २ ॥ श्रीकरस्य ।

पीत्वा सान्द्र-तमं तमास्तिमिरहा देवः प्रसूते यमं
कालिन्दीं स शनैश्चरं च तिमिराहारानुसारादिव ।
तेजस्त्वस्यपुनर्विरोधिवसुधापालाङ्गनाकज्जला-
न्याचामद्गुरुगर्भहृणतरुणीगण्डावदातं यशः ॥ ३ ॥
आचार्यगोपीकस्य ।

एकं धाम शमीषु लीनमपरं सूर्योपलज्योतिषां
व्याजाददिषु गूढमन्यदुदधौ संगुप्तमौर्वायते ।

त्वत्तेजस्तपनांशुमांसलसमुत्तापेन दुर्गं भया-
द्वार्द्रं पार्वतमौदकं यदि ययुस्तेजांसि किं पार्थिवाः ॥ ४ ॥

जयदेवस्य।

व्योमन्युल्केत्यरण्ये दव इति वडवावह्निरित्यम्बुराशौ
पक्षेषु क्ष्माधराणां पविरिति तडिदित्यम्बुवाहावलीषु।
भालोत्सङ्गे पुरारेर्नयनमिति पुनर्भाविकल्पान्तकाले
कालाग्निश्चेति देव त्रिजगति भवतस्तेजसः स्फूर्जितानि ॥ ५ ॥

शुभाङ्कस्य।

## २४ हस्ती।

भूर्भूदाररदाङ्कुरेण जलधेरन्तः पुरैवोद्धृता
प्रागेवाभ्रमुवल्लभस्य दशनैर्भिन्नो हिमानीगिरिः।
इत्थं देव निजोष्मणा तव गजः क्षुण्णं वपुर्वीजय-
न्कर्णाभ्यां करयन्त्रमुक्तवमथुस्यन्दैरयं सिञ्चति ॥ १ ॥

पीताम्बरस्य।

एतद्देव यशस्करं नरपतेर्यत्तस्करे निग्रहो
दीर्घं जीव यथापराधमधुरं दण्डं जगत्यावहन्।
येनायं परिपन्थिपार्थिववधूसिन्दूरचौरस्त्वया
बद्धश्च प्रतिदण्डभैरवकरी क्षिप्तश्च कारागृहे ॥ २ ॥ शुङ्गोकस्य।

उग्रावग्राहमग्नाङ्कुशधुवनधुताधोरणास्फालिताङ्गैः
प्रत्यग्रोद्दण्डशुण्डोड्डमरणसमरत्रस्तदिङ्नागचक्रैः।
आलोक्यालोक्य शैलानुरुचरणरणच्छृङ्खलाघट्टयद्भि-
र्यस्याशाभित्तिजेतुर्मदकलकरिभिः क्वापि न प्रापि रङ्कः (भङ्गः) ॥ ३ ॥

महानिधिकुमारस्य।

अयमयमसावाकर्ण्यारात्प्रतिद्विपडिण्डिमं
मदकलुषिते नेत्रे मार्जन्नुदस्तकरार्गलः।
अगणितसृणिः क्रोधस्तब्धायतश्रुतिपल्लवः
प्रविशति नृपस्यान्तःकक्षां जवादरिमुद्गरः ॥ ४ ॥ विरिञ्चेः।

सिन्दूरद्युतिमुग्धमूर्धनि धृतस्कन्धावधिश्यामिके
व्योमान्तःस्पृशि सिन्धुरस्य समरारम्भोद्धुरे धावति।
जानीमो नृपदप्रदोषतिमिरव्यामिश्रसंध्याधिये-
वास्तं यान्ति समस्तबाहुजभुजातेजःसहस्रांशवः ॥ ५ ॥

श्रीहर्षस्य।

## २५ अश्वः।

आकर्षन्निव गां वमन्निव खुरान्पश्चार्धमुज्झन्निव

स्वीकुर्वन्निव खं पिबन्निव दिशश्छायाममर्षन्निव ।
साङ्गारप्रकरां स्पृशन्निव धरां वातं समश्नन्निव
श्रीमन्नाथ सवाजिराट् तव कथं माद्दग्गिरां गोचरः ॥ १ ॥

छित्तपस्य ।

कियत्पदं विष्णुपदं मम क्रमे धरा वराकी च पयोधिरोधिता ।
इतीव हेलाविनतोरुकन्धरः करोत्ययं मण्डलिकारयं हयः ॥ २ ॥

हरिदत्तस्य ।

प्रयातुमस्माकमियं कियत्पदं धरा वराकी च पयोधिरोधिता ।
इतीव वाहैर्निजवेगदर्पितैः पयोधिरोधक्षममुद्धतं रजः ॥ ३ ॥

श्रीहर्षस्य ।

धूलीभिर्दिवमन्धयन्बधिरयन्नाशाः खुराणां रवै-
र्वात संयति खञ्जयञ्जवजयैः स्तोतॄन्गुणैर्मूकयन् ।
धर्माराधनसंनियुक्तजगता राज्ञामुनाधिष्ठितः
सान्द्रोत्फालमिषाद्विगायति पदा स्प्रष्टुं तुरङ्गोपि गाम् ॥ ४ ॥

तस्यैव ।

क्षौणी नः क्षितिपालमौलिमहिषी द्यौर्देवकीनन्दन-
स्याङ्घ्रिः काङ्घ्रिरिहास्यतामिति मनश्चिन्तानमत्कन्धरः ।
अङ्गान्यङ्गलतासु भङ्गुरखुरन्यासैः समावेशय-
न्नुत्क्रोशन्निव वारिधीनधिचलत्युच्चैस्तवायं हयः ॥ ५ ॥

शालूकस्य ।

## २६ नौका ।

भृङ्गैर्नाविकसंनिभैः परिगतं शुद्धान्तवामभ्रुवां
कर्णभ्रष्टमवेक्ष्य केतकदलं वापीजले संतरत् ।
श्रीमत्साहसमल्लवीर भवतो नौसार्थमन्तःस्मर-
न्नुत्त्रस्तोद्य पुनः करोति सलिलक्रीडां न गौडाधिपः ॥ १ ॥

वसुकल्पस्य ।

जितपवनजवाभिर्नौभिरास्कन्द्य सद्य-
स्त्रिदिवमपि विजेतुं नाक्षमः क्षत्रियोयम् ।
यदि न शिरसि भर्गः स्वर्गिणां भागधेयै-
र्दधदमरधुनीं स्यादन्तरालेऽन्तरायः ॥ २ ॥ शुङ्गोकस्य ।

नौकाभिनीतजलकेलिषु केनिपात-
पातोच्छलत्सलिलशीकरसंचयेन ।
देव त्वया विरचितो नभसि प्रगल्भ-
वाचालवीचिविलतः प्रचलः पयोधिः ॥ ३ ॥ हरिवंशस्य ।

नखाङ्कं नारीणामनिललुलितं केतकदलं
कलामिन्दोः पत्रं परिणतिविशीर्णं जलरुहाम् ।
निरीक्षन्ते यस्य द्रुतमिलितनौकाटकघटा-
हठाकृष्टिभ्रष्टाश्चकितमिव काशीजनपदाः ॥ ४ ॥ उमापतिधरस्य ।

नौकानिर्गमकेनिपातपतनोदश्चत्पयोविन्दुभि-
र्धारालैर्विपरीतवृष्टिषु कथावृद्धो न वृद्धश्रवाः ।
किंच द्वेषिपुरे पुरन्दरपुरीवस्त्राञ्चलीकुङ्कुम-
क्षोदक्षालनवारिपातरुधिरभ्रान्तो जनस्ताम्यति ॥ ५ ॥
नरसिंहस्य ।

## २७ सेना ।

भूर्भूपालचमूपदेषु गगनं सेनारजोराजिषु
श्रान्तद्वेषिकलेवरेषु मरुतो नौकातलेष्वब्धयः ।
तेजस्तेजसि लीनमस्तु भवतः किंत्वन्यदाचक्ष्महे
सृष्टिः स्रष्टुरिहास्तमेष्यति महाभूतैर्विना पञ्चभिः ॥ १ ॥
श्रीकण्ठस्य ।

नित्यं निस्तृणपल्लवे पथि निरालम्बे व्रजन्वाजिभिः
खिन्नखिन्नतुरङ्गतुङ्गकरुणाकृष्टो विवस्वानयम् ।
यायादप्यवतीर्य निर्जरपथादेषा समन्तान्न चे-
दद्य त्वद्गजतागलन्मदजलैर्जम्बालिनी मेदिनी ॥ २ ॥
करञ्जयोगेश्वरस्य ।

त्वत्सैन्यग्लपितस्य पन्नगपतेरच्छिन्नधाराक्रमं
विस्फारायतशालिनि प्रतिफणं फेनाम्भसि भ्रश्यति ।
देव क्ष्मावलयप्रभो फणिफणैः प्रत्यग्रमेकोत्तर-
स्थूलस्तम्भसहस्रधारितमिव क्ष्माचक्रमालोकयते ॥ ३ ॥
वसुकल्पस्य ।

शेषं क्लेशयितुं दिशः स्थगयितुं पेष्टुं धरित्रीभृतः
सिन्धून्धूलिभरेण कर्दमयितुं तैरेव रोद्धुं नभः ।
नासीरे च मुहुर्मुहुश्चलचलेत्यालापकोलाहला-
न्कर्तुं नाथ वरूथिनीयमवनौ जेतुं पुनस्त्वद्भुजौ ॥ ४ ॥ तस्यैव ।

अहो स्थैर्यं तेषां प्रकृतिनियमेभ्यः सुकृतिनां
प्रतिज्ञातत्यागो नहि भवति कृच्छ्रेपि महति ।
तथाहि त्वत्सेनाभरनमितधात्रीभरनम-
त्कटाहोपि स्वाङ्गं किमुकमठनाथश्चलयति ॥ ५ ॥ कस्यचित् ।

## २८ खड्गः ।

देव त्वं मलयाचलोसि भवतः श्रीखण्डशाखी भुज-
स्तस्मिन्कालभुजङ्गमो निवसति स्फूर्जत्कृपाणच्छलात् ।
एष स्वाङ्गमनर्गलं रिपुतरुस्कन्धेषु संघट्टय-
न्दीर्घं व्योमविसातिनिर्मलयशोनिर्मोकमुन्मुञ्चति ॥१॥ छित्तपस्य ।
तुल्या बाणकृपाणयोरनुगतिः क्षीणाननो न क्वचि-
त्कोषं मे हरति प्रयच्छति सदा लक्ष्यं रणे पत्रिणे ।
इत्थं देव कुनायकत्वमसकृद्बुद्ध्वैव युद्धेष्वसिः
कृत्वा संधिमुपोढवेपथुरतिक्रोधाद्विवेश द्विषः ॥२॥ लङ्गदत्तस्य ।
द्वाभ्यामेव जितं द्वयोः परममून्यङ्गानि भूमीभर-
श्लाघ्यश्रीणि गृणन्ति संप्रति भवत्खड्गस्य कूर्मस्य च ।
यत्कम्पे क्षितिपालशत्रुवसुधाचक्रं समुत्कम्पते
निर्व्याजं निपतन्ति च क्षितिभृतां विष्वक् शिरःश्रेणयः ॥ ३ ॥
चूडामणेः ।
यशः पुत्रं देव त्वदसिलतिकासूत समरे
समीरस्तद्धूलीपटलपटवासं विकिरति ।
शिवा गायन्त्युच्चैरटति च कबन्धावलिरभू-
दरातीनां मोक्षः सपदि भवबन्धव्यतिकरात् । ४ ॥ विद्यायाः ।

॥ ५ ॥

।

## २९ आश्चर्यखड्गः ।

देव स्वस्तुतिरस्तु नाम हृदि नः सर्वे च सन्त्वागमा-
स्तीर्थं न क्वचिदीदृगत्र भवति त्वत्खड्गधारा यथा ।
यामेकः स्वशरीरशुद्धिरसिको मूर्ध्ना प्रतीच्छन्नरि-
र्द्वैविध्यादनु पञ्चतां तदनु च त्रैदश्यमाप क्षणात् ॥ १ ॥
रथाङ्गस्य ।
शाखाः पञ्च तवोद्गता भुजतरोस्ताभिस्तथैकं धृतं
संभूयैव किलासिपत्रमभवत्तत्रापि चित्रान्तरम् ।
विश्वव्यापियशःप्रसूनमखिलव्यापच्छिदे श्रीफलं
छायां किं कथयामि यत्र निखिलं विश्राम्यति क्ष्मातलम् ॥२॥
लङ्गदत्तस्य ।

अपनय महामोहं राजन्ननेन तवासिना
कथय कुहकाश्चर्यं क्वेदं कथं नु च शिक्षितम् ।
यदरिरुधिरं पायं पायं कुसुम्भरसारुणं
झटिति वमति क्षीराम्भोधिप्रवाहसितं यशः ॥ ३ ॥ दक्षस्य ।

उद्यात्येव सुहृत्कुलं प्रतिबलं यात्येव नीचैस्तरा-
मायान्त्येव जयश्रियः प्रतिदिशं यान्त्येव सत्कीर्तयः ।
येनैकेन मुखाग्रपाटिततनूभूतार्द्रकोटिश्रिया
सर्वाश्चर्यमयः स एव जयति त्वत्खड्गधारापथः ॥ ४ ॥

तुङ्गोकस्य ।

श्रीखण्डमूर्तिः सरलाङ्गयष्टिर्माकन्दमामूलमहो वहन्ती ।
श्रीमन्भवत्खड्गतमालवल्ली चित्रं रणे श्रीफलमातनोति ॥ ५ ॥

जयदेवस्य ।

## ३० कुपितखड्गः ।

पर्यङ्को राजलक्ष्म्या हरितमणिमयः पौरुषाब्धेस्तरङ्गो-
भग्नप्रत्यर्थिवंशोल्वणविजयकरिस्त्यानदानाम्बुपट्टः ।
संग्रामत्रासताम्यन्नरपतिसुयशोराजहंसाम्बुवाहः
खड्गः क्ष्मासौविदल्लः समिति विजयते मालवाखण्डलस्य ॥१॥

छित्त स्य

वीरश्रीवेणिबन्धो भुजभुजगफणा शत्रुषु भ्रूपताका
देवस्य प्रेतभर्तुः स्फुरदुरुपृतनाद्वीपिनीवीचिदण्डः ।
क्रोधाग्नेर्धूमवर्तिः सुरयुवतिदृशां शृङ्खलादाम दीर्घं
लक्ष्मीलीलाकटाक्षः प्रतिसमरमभूद्यस्य जैत्रः कृपाणः ॥ २ ॥

राजशेखरस्य ।

दृप्यत्प्रत्यर्थिपृथ्वीपतिविततयशःकौमुदीकृष्णपक्षो-
लक्ष्मीसंचारदूतः सुरनरनगराम्भनिर्विघ्नयष्टिः ।
संग्रामाम्भोधिमाद्यद्भुजभुजगफणातल्पकल्पान्तकृष्णः
खड्गस्ते देव जीयादयमुदितमहीमण्डलाखण्डलस्य ॥ ३ ॥

शान्त्याकरस्य ।

अस्यासिर्भुजगः स्वकोषशुषिराकृष्टः स्फुरत्कृष्णिमा
कम्पोन्मीलदरालनीलरसनः केषां भिये न द्विषाम् ।
संग्रामेषु निजाङ्गुलीमयमहासिद्धौषधीवीरुधः
पर्वास्ये विनिवेश्य जाङ्गलिकता यैर्नाम नालम्बिता ॥ ४ ॥

श्रीहर्षस्य ।

लीलोत्तंसतमालवल्लिरवनेरेतत्प्रतापानल-
स्फूर्जद्धूमशिखा क्रुधाकुलतनोः कालस्य जिह्वाञ्चलः
वैरिस्त्रैणविलोचनाञ्जनलिपिस्तेनस्तमोमन्दिरं
निद्राणस्य कलेः स तस्य नृपतेः खड्गो न वाग्गोचरः ॥ ५ ॥
युवराजदिवाकरस्य ।

## ३१ चापः ।

ज्यां बिभ्रद्भुजगो भुजङ्गमयुवा चापस्तवास्मिन्पुनः
शेते कुण्डलिते विपक्षकषणो नाराचनारायणः ।
विभ्राणा हृदयेन यं क्षणमपि क्षोणीभुजो भेजिरे
भित्त्वाम्भोरुहबन्धुबिम्बमचिरादानन्दसान्द्रं महः ॥ १ ॥
आचार्यगोपीकस्य ।

यः पृष्ठं युधि दर्शयत्परिभटश्रेणीषु यो वक्रता-
मस्मिन्नेव बिभर्ति यश्च किरति क्रूरध्वनिं निष्ठुरः ।
दोषं तस्य तथाविधस्य भजतश्चापस्य गृह्णन्गुणं
विख्यातः स्फुटमेक एष नृपतिः सीमा गुणग्राहिणाम् ॥ २ ॥
श्रीहर्षस्य ।

भुजे ऽपसर्पत्यपि दक्षिणे गुणं सहेषुणादाय पुरः प्रसर्पिणे ।
धनुःपरीरम्भमिवास्य संमदान्महाहवे यच्छति वामबाहवे ॥ ३ ॥
तस्यैव ।

भ्रूचापे निहितेन दृष्टिविशिखेनैवास्य विद्वेषिणो-
ध्वस्ताः पूर्वमतस्तदीयदलने संभावि मे दुर्यशः ।
इत्यालोच्य कराम्बुजार्चितमपि न्यस्तं पुरस्तादपि
द्राग्जातं समरेषु यस्य निबिडव्रीडाविनम्रं धनुः ॥ ४ ॥
गोतिथीयदिवाकरस्य ।

प्रागष्टादशपर्व भारतमिदं निर्माय कर्माद्भुतं
भूपानामनपायपौरुषमपि व्यासेन यत्कीर्त्तितम् ।
संग्रामाङ्गणसीम्नि सम्यगधुना देव त्वदीयो भुज-
स्तत्पर्वत्रयबन्धुरेण धनुषा व्याकर्तुमेष क्षमः ॥ ५ ॥ जलचन्द्रस्य ।

## ३२ प्रयाणम् ।

नृपतिमुकुटरत्न त्वत्प्रयाण-प्रशंसित
प्रबलभरनिमज्जद्भूधराक्रान्तभोगः ।
लिखति दशनटङ्कैरुत्पतद्भिः पतद्भि-
र्जरठकमठभर्तुः कर्परे सर्पराजः ॥ १ ॥
त्रिपुरारिपालस्य ।

दिग्यात्रासु तदीय-सैनिकभरक्षुब्धाब्धिकोलाहल-
त्रस्तश्रीपरिरम्भमीलितदृशो देवस्य कंसद्विषः।
सस्वेदालसपाणिपल्लवगलत्कौमोदकीमादरा-
दुद्भ्रम्यावनमत्फणः फणभृतां भर्ता बिभर्त्ति क्षितिम् ॥ २ ॥

तस्यैव।

राजन्दुःसहृदोःप्रतापदलिताशेषक्षितीशस्य ते
वेलालोकनकौतुकेन भवतः कोऽयं प्रयाणे रसः।
यद्दन्तीन्द्रचमूमहाभरनमन्नेमिः क्रमादेकतो
भूरन्यत्र समुन्नता फणिपतेर्मौलौ कथं स्थास्यति ॥ ३ ॥

गदाधरनाथस्य।

ते दिक्पालविलासिनीकुचतटे कस्तूरिकाकान्तयो
वैरिस्त्रीवदनेषु साञ्जनगलन्नेत्राम्बुमैत्रीधराः।
स्वर्गङ्गाकमलेषु भृङ्गरुचयो यस्य प्रयाणे बभु-
र्निर्धूताः पवनेन मत्तकरिणां दानाम्भसां बिन्दवः ॥ ४ ॥

विश्वेश्वरस्य।

अम्भः कर्दमतामुपैति सहसा पङ्कद्रवः पांशुतां
पांशुर्वारणकर्णतालपवनैर्दिक्प्रान्तनीहारताम्।
निम्नत्वं गिरयः समं विषमतां शून्यं जनस्थानतां
निर्याते त्वयि राज्यपाल भवति त्यक्तस्वभावं जगत् ॥ ५ ॥

महोदधेः।

## ३२ भोगावली।

राजन्नुद्दामनिद्राभरविवशभुजावल्लरीणामिदानीं
विश्राम्यन्तु त्वदन्तःपुरहरिणदृशां चामरभ्रामणानि।
सेवन्ते देवमेते तुहिनकणभृतः सौधजालान्तराल-
प्राप्ताः प्रत्यग्रजाग्रन्नलिनवनरजोग्राहिणो गन्धवाहाः ॥ १ ॥

उमापतिधरस्य।

भिन्दानः सुन्दरीणां पतिषु रुषमयं हर्म्यपारावतानां
वाचालत्वं दधानः कवितृषु च गुणं प्रातिभं संदधानः।
प्रातस्त्यस्तूर्यघोषः स्थगयति गगनं मांसलः पांशुतल्पा-
दस्वल्पादुत्थितानां नरवर करिणां शृङ्खलासिञ्जितेन ॥ २ ॥

राजशेखरस्य।

निद्राजिह्मदृशः सखीष्वपि सवैलक्ष्या नखाङ्कव्रण-
व्यादृष्टांशुकलेखया प्रतिपदं सीत्कारिवक्त्रेन्दवः।

त्वत्सेवासमुपागतक्षितिभुजां निर्यान्ति लीलागृहा-
देताः प्रौढरतिश्रमप्रशिथिलैरङ्गैः कुरङ्गीदृशः ॥ ३ ॥ धोयीकस्य ।

अम्लानस्तबकन्ति कुन्तलभरे सीमन्तसीमाश्विमाः
सिन्दूरन्ति कपोलभित्तिषु मिलन्मैरेयरागन्ति च ।
प्रौढेर्ष्याद्युतिविभ्रमन्ति नयनोपान्ते कुरङ्गीदृशां
बिम्बोष्ठे क्षितिपाल बालतरणेर्लाक्षारसन्ति त्विषः ॥ ४ ॥

साङ्गाधरस्य ।

उत्कर्णं करिणां गणेन विकसन्मोदं चिराद्बर्हिभिः
क्रीडाकेशरिभिश्च पञ्जरगतैः कोपस्फुरल्लोचनम् ।
कुञ्जोत्सङ्गभुवि प्रकम्पतरलं सीमन्तिनीभिः क्षणा-
त्पीतः श्रोत्रपुटेन देव परितः प्रातर्मृदङ्गध्वनिः ॥ ५ ॥ तस्यैव ।

## ३४ तूर्यध्वनिः ।

हेरम्बध्वनिडम्बरप्रतिनिधिः क्रीडन्नृपञ्चानन-
क्ष्वेडोत्पीडसुहृन्नदीपतिनदद्वेलोर्मिगर्जासखः ।
संवर्ताम्बुदवृन्दमन्दरसितस्पर्द्धी तवायं मृधे
शत्रुश्रोत्रदरीषु मूर्च्छति चमूभेरीरवो भैरवः ॥ १ ॥ हरेः ।

देव त्वद्विजयप्रयाणसमये ढक्का हताः सैनिकै-
र्मन्द्रं दध्वनुरद्रिकुक्षिषु जरत्पारीन्द्रनिद्राद्रुहः ।
तन्वाना मलयाद्रिषु प्रतिरवं ध्यानक्षतिं योगिषु
क्रोधं दिक्करिषु प्रकम्पमरिषु त्रासं रवेर्वाजिषु ॥ २ ॥ कस्यचित् ।

गुञ्जत्क्रौञ्चनिकुञ्जकुञ्जरघटाविस्तीर्णकर्णज्वराः
प्राक्प्रत्यग्धरणीन्द्रकन्दरजरत्पारीन्द्रनिद्राद्रुहः ।
लङ्काङ्कत्रिककुत्प्रतिध्वनिघनाः पर्यन्तयात्राजये
यस्य भ्रेमुरमन्दमन्दररवैराशारुधो घोषणाः ॥ ३ ॥ जयदेवस्य ।

यस्याविर्भूतभीतिप्रतिभटपृतनागर्भिणीभ्रूणभार-
भ्रंशभ्रेशाभिभूत्यै प्लवनमिव भजन्नम्भसाम्भोनिधीनाम् ।
संभारं संभ्रमस्य त्रिभुवनमभितो भूभृतां बिभ्रदुच्चैः
संरम्भोज्जृम्भणाय प्रतिरणमभवद्भूरिभेरीनिनादः ॥४॥ तस्यैव ।

विघट्टयन्नेष हठादकुण्ठवैकुण्ठकण्ठीरवकण्ठगर्जाम् ।
भयंकरो दिक्करिणां रणाग्रे भेरीरवो भैरवदुःश्रवस्ते ॥ ५ ॥ तस्यैव ।

## ३५ धूलिः ।

यस्योद्योगे बलानां दिशि दिशि बलतामुज्जिहानैरजोभि-
र्जम्बालिन्यम्बरस्य स्रवदमरधुनीवारिपूरेण मार्गे ।

संसीदच्चक्रशल्याकुलतरणिकरोत्पीडिताश्वीयदत्त-
च्छिद्रावस्कन्दमन्दः कथमपि चलति स्यन्दनो भानवीयः ॥ १ ॥

बाणस्य ।

सप्तद्वीपकुटुम्बभूतलभुवो निष्पीतसप्ताब्धय-
स्तन्मार्गेण च सप्तपन्नगफणारत्नावलोकच्छिदः ।
क्रीडादिग्विजये च सप्तजगतीभाजो यदक्षौहिणी-
जन्मानः प्रसरन्ति सप्तपवनस्कन्धस्पृशो धूलयः ॥ २ ॥ मुरारेः ।

यस्याशाविजयप्रवृत्तपृतनाचक्रे परिक्रामति
क्षुण्णक्ष्मातलधूलिसंकुलमभून्मर्त्यस्थलाभं नभः ।
एतस्यामदसीयसंप्लवपरिक्षीणाम्भसि प्रावृषि
प्रायः संभवति स्म भूपरिसरे भूयानिवावग्रहः ॥ ३ ॥ तिलचन्द्रस्य ।

अब्धौ मज्जन्ति मीना इव फणिन इव क्षोणिरन्ध्रं विशन्ति
क्रामन्त्यद्रीन्विहङ्गा इव कपय इव क्ष्माप्यरण्ये चरन्ति ।
देव क्ष्मापालशक्र प्रसरदनुपमत्वच्चमूचक्रवाह-
व्यूहव्याधूतधूलीपटलहतदृशः कान्दिशीकाः क्षितीशाः ॥ ४ ॥

विश्वेश्वरस्य ।

भूतिस्नानप्रमोदं तनुभिरलभत स्पष्टमष्टाभिरीशो
भूयस्तुङ्गत्वमापुः पिहितगिरिगुहागह्वराः क्ष्माधरेन्द्राः ।
यात्रायां यस्य खेलत्तुरगखरखुरोत्खातधूलीभरेण
प्रापुर्वर्षाभ्रलक्ष्मीमतिमलिनतया शारदास्तोयवाहाः ॥ ५ ॥

तस्यैव ।

## ३६ अश्वधूलिः ।

यात्रानेहसि यस्य दिग्विजयिनः काम्बोजवाहावली-
रिङ्खोल्लेखविसर्पिणि क्षितिरजःपूरे वियच्चुम्बति ।
भानोर्वाजिभिरङ्ककर्षणरसानन्दः समासादितो
लब्धः किंच नभस्तलामरधुनीपङ्केरुहैरन्वयः ॥ १ ॥ वसुकल्पस्य ।

देव त्वद्विजये तुरङ्गमखुरखातक्षतक्ष्मातल-
प्रोद्भूते परितः परागपटले दिक्चक्रमाक्रामति ।
अक्ष्णां पङ्क्तिशतानि निन्दति निजं हस्तद्वयं निन्दति
स्वां निन्दत्यनिमेषतां परिपतद्बाष्पाम्बुधारो हरिः ॥ २ ॥

जयोकस्य ।

वाहव्यूहखुराग्रटङ्कविहतिक्षुण्णक्ष्माजन्मभि-
र्धूलीभिः पिहिते विहायसि भवत्प्रस्थानकालोत्सवे ।

दिङ्मोहादनुसूरसूतविपथभ्राम्यत्तुरङ्गावली-
दीर्घायुः प्रतिवासरं प्रतिदिशं व्यस्तो रविर्भ्राम्यति ॥ ३ ॥

महोदधेः ।

त्वद्वाहावलिटापटङ्कविगलद्भूगोलधूलीभरै-
रुत्पत्यापतयालुभिः स्थलमये जातेऽद्य नीराम्बुधौ ।
शङ्के सेतुकथैककर्मठभुजाशौटीरशाखामृगा-
हंकारस्तुतिभिर्भविष्यति कथं न व्रीडितो मारुतिः ॥ ४ ॥

हीरोकस्य ।

सप्ताम्भोधीन्पिबद्भिर्दिशि दिशि सरितः स्वादयद्भिस्तडाग-
व्यूहं गण्डूषयद्भिर्गगनतलगतां जाह्नवीमुल्लिहद्भिः ।
यात्रायां यस्य हेलाचलतुरगचमूशश्वदुद्धूतधूली-
पूरैरेकाब्धिपात्रव्ययजनितमदो लज्जितः कुम्भजन्मा ॥ ५ ॥

छित्तपस्य ।

## ३७ संग्रामधूलिः ।

यस्याहवे हरिचमूखुरखण्डितोर्वी-
पांशुप्रसारपरिपूर्त्तिभिया वहन्ति ।
नेत्राणि नित्यविकचानि मरुत्तरुण्यो
नीरन्ध्रपाणिपुटयुग्मपिधानवन्ति ॥ १ ॥ राजशेखरस्य ।

त्वत्तुरङ्गमखुरोच्छलितैरजोभिर्लग्नैरजस्रगलदस्रसहस्रनेत्रः ।
पाणिग्रहे समरभूमिजयश्रियस्ते स्वाराडयं नृपतिनाथ सहस्रधारः ॥ २ ॥

पजोकस्य ।

त्वद्वैरिकरीन्द्रकुम्भनिपतन्निस्त्रिंशलेखोल्लस-
द्वह्निज्वालतडित्कराम्बिततनुर्व्यभ्रत्विषो रुन्धती ।
राजंस्तर्पितबर्हिणा सरभसैरालोकिता चातकै-
र्वल्गत्त्वद्बलधूलिजालजलदश्रेणी समुत्सर्पति ॥ ३ ॥ सुरभेः ।

पतत्कृत्तोत्तमाङ्गप्रतिसुभटनटारब्धनाट्याद्भुतानां
कण्ठं दंष्ट्रापि नाभूद्भुवि समरसमालोकिलोकास्पदेऽपि ।
अश्वैरस्वैरवेगैः कृतखुरखुरलीमङ्क्षुसंक्षुभ्यमाण-
क्ष्मापृष्ठोत्तिष्ठदन्धंकरणरणधराधूलिधारान्धकारात् ॥ ४ ॥

श्रीहर्षस्य ।

मातङ्गाम्भोदवीथीविकसितमहासि प्रौढसेनापराग-
ध्वान्तोद्गारे गरीयस्युपनयति मुहुर्विश्वदिङ्मोहमुद्राम् ।
कीर्तिर्वेलावनेषु भ्रमति भुजमथालम्बते वीरलक्ष्मी-

देव त्वत्खड्गधारासरणिपरिसरे वैरिणो निष्पतन्ति ॥ ५ ॥

ज[illegible] ।

## ३८ युद्धम् ।

राजन्वाजिपदातिकुञ्जरशिरश्छिन्नं रणे यत्त्वया
नृत्यद्योधकबन्धकण्ठमिलितं तेनारिवीरव्रजः ।
हेरम्बीयति किंनरीयति शिरोराहूयतीति क्षणं
निर्माणं तव वङ्गनायक कथापाण्डित्यमुन्मीलति ॥ १ ॥

उदयादित्यस्य ।

संग्रामाङ्गणसंगतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद्यत्समासादितम् ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्तिरनघा कीर्त्या च लोकत्रयम् ॥ २ ॥

कर्करजस्य ।

शत्रूणां कालरात्रौ समिति समुदिते बाणवर्षान्धकारे
प्राग्भारे खड्गधारां सरितमिव समुत्तीर्य मग्नारिवंशाम् ।
अन्योन्याघातमत्तद्विरदघनघटादन्तविद्युच्छटाभिः
पश्यन्तीयं समन्तादभिसरति मुदा सांयुगीनं जयश्रीः ॥ ३ ॥

जयदेवस्य ।

यदस्त्रव्यापारादभिमुखहतैः क्षत्रियभटैः
स्वसत्त्वेन क्रीतं भुवनमभिसर्पद्भिरभितः ।
कृतच्छिद्रश्रेणीविधुरपरिभोगं भगवतो
गभस्तीनां पत्युस्तितउतुलनां मण्डलमगात् ॥ ४ ॥ मुरारेः ।

यन्निस्त्रिंशहतोद्गतैररिशिरश्चक्रैर्बभूव क्षणं
लोके चान्द्रमसे विधुन्तुदघटावस्कन्दकोलाहलः ।
किंचामीभिरपि स्फुरन्मुखतया शीतांशुकोटिभ्रमं
बिभ्राणैरुदपादि राहुभुवने भूयान्सुभिक्षोत्सवः ॥ ५ ॥ तस्यैव ।

## ३९ युद्धस्थली ।

देव त्वद्भुजयोर्बलं न गदितुं वाचा वयं शक्नुमः
कुर्वाणा हृदयेपि तत्पुलकिताः प्रत्यक्षमेते वयम् ।
शङ्का सैव पुनस्तवासिपतनच्छिन्नद्विषत्कन्धरा-
रन्ध्रोद्भ्रान्तसमीरभैरवरवा युद्धस्थली जल्पितुम् ॥ १ ॥

छित्तपस्य ।

रक्तस्रोतोवहायास्त्वरितमवतरन्स्नानतृष्णालुरेको-
वीर त्वद्वैरिसेनाघनपिशितवसापङ्कमग्नैकजङ्घः ।

साक्रन्दकाणमासीत्प्रसरदपसरत्पाणिभिः कृष्टमुक्त-
स्तीरस्थैरुत्तितीर्षुः परिहसितपरैस्तृप्तिभिः प्रेतवृद्धः ॥ २ ॥

नीलस्य ।

श्लाघन्ते नहि तानि यस्य भुजयोरद्यापि युद्धस्थली-
सीमान्ते रिपुकीकसोत्थितकुशव्याजेन रोमाञ्चिताः ।
पूर्वाभ्यासगताभिरङ्कपलभुग्दंष्ट्रावलीचर्वणा-
न्निर्मांसास्थितयोच्चरत्कटकटस्वणाक्षरश्रेणयः ॥ ३ ॥

गोतिर्थीयदिवाकरस्य ।

निर्यन्नाराचधाराचयखचितपतन्मत्तमातङ्गजातं
जातं यस्यारिसेनारुधिरजलनिधावन्तरीपभ्रमाय ।
सुप्ता यस्मिन्नतान्ते सह च सहचरैर्नीलवन्नागनासा-
रन्ध्रद्वन्द्वैकपात्रे रुधिरमधुरसं प्रेतकान्ताः पिबन्ति ॥ ४ ॥

जयदेवस्य ।

कृष्टे घोटकटापसंपुटघटाफालाग्रसंघट्टनै-
श्छिन्नारातिकबन्धरन्ध्रविगलद्रक्तेन सिक्ते रणे ।
मूलेन त्वदसिप्रहारपतिता वैरीभदन्तव्रजा
राजन्ते जगदग्रपल्लवियशोबीजप्ररोहा इव ॥ ५ ॥ वीरदत्तस्य ।

## ४० दिग्विजयः ।

क्षिप्तः क्षीरगृहे न दुग्धजलधिः कोषे न हेमाचलो
दिक्पाला अपि पालिपालनविधावानीय नारोपिताः ।
नो वा द्विक्करिणः कणन्मधुलिहः पर्यायपर्याणन-
क्रीडायां विनियोजिता वद कृतं किं किं त्वया दिग्जये ॥ १ ॥

कस्यचित् ।

देवे दिग्विजयोद्यते धृतधनुर्विद्वेषिसीमन्तिनी-
वैधव्यव्रतदायिनि प्रतिदिशं रोषादुपक्रामति ।
किं ब्रूमोन्यदितोधिकं रतिरतित्रासान्न पौष्पं करे
भर्तुर्भर्तुमदान्मदान्धमधुपीनीलीनिचोलं धनुः ॥ २ ॥

नारायणदत्तस्य ।

तत्तद्विक्रमदोहदेन विलसद्दोर्दण्डदम्भोलिना
विद्वेषिव्ययकर्मठेन दिशता निर्वीरमुर्वीतलम् ।
किं ब्रूमश्चतुरब्धिसीमभुवनं राजन्वदातन्वता
येनाभूर्विजिगीषुणा विदधिरे दिक्पालशेषा दिशः ॥ ३ ॥

वसुकल्पस्य ।

आकौमारं समरजयिना कुर्वतोर्वीमवीरा-
मेतेनामी कथमिव दिशामीशितारो विमुक्ताः ।
अन्तर्ज्ञातं वपुषि कलया तस्य तेऽष्टौ प्रविष्टाः
प्रह्वीभूते प्रभवति नहि क्षत्रियाणां कृपाणः ॥ ४ ॥

उमापतिधरस्य ।

एकः संग्रामरिङ्गत्तुरगखुररजोराजिभिर्नष्टदृष्टि-
र्दिग्यात्राजैत्रमत्तद्विरदभरनमद्भूमिभग्नस्तथान्यः ।
वीराः के नाम तस्मात्त्रिजगति न ययुः क्षीणतां काणकुब्ज-
न्यायादेतेन मुक्तावभयमभजतां वासवो वासुकिश्च ॥ ५ ॥

जयदेवस्य ।

## ४१ रिपुः ।

यान्त्येके परपुष्टतां बलिभुजो भ्राम्यन्ति केचिन्महीं
केचिद्बिभ्रति लावकत्वमपरे जाता वने वर्तकाः ।
केचित्खञ्जनकीभवन्ति सततोन्माथप्रमाथैरहो
तिर्यक्त्वामपि लम्भितैस्त्वदरिभिर्लब्धा न पक्षोन्नतिः ॥ १ ॥

कस्यचित् ।

निर्भीकभ्रान्तभोगिन्यनलसमशके मांसलध्वान्तराशा-
वासार-क्लिन्न कुड्ये वृषभनिकषणावर्जितद्वारदारौ ।
प्रत्यग्रोदीर्णदीर्णे (गर्भे) गलति वनगिरिग्रामदेवीगृहान्ते
संत्रस्ताः शत्रवस्ते कथमपि रजनीं प्रावृषि प्रेरयन्ति ॥ २ ॥

योगेश्वरस्य ।

पद्भ्यामूरुयुगं विभज्य भुजयोर्मध्यं निपीड्योरसा
पार्श्वेषु प्रसभं प्रहृत्य नखरैर्दन्तैर्विलुप्याधरम् ।
संसुप्तानवबोध्य युष्मदहितान्भूयोपि भुङ्क्ते वने
किं कान्ता सुरतैषिणी नहि नहि व्याघ्री करालानना ॥ ३ ॥

छित्तपस्य ।

मौर्ख्यं परमस्तु देव तदपि प्रस्तूयते विस्मया-
दैश्वर्याणि परित्यजन्ति भवतो नाद्यापि ते वैरिणः ।
मन्यूनां शतमाचरन्ति कटकं क्रामन्ति भूमीभृतां
पत्रालीं बलयन्ति च स्तनयुगाभोगे कुरङ्गीदृशाम् ॥ ४ ॥

जलचन्द्रस्य ।

पदहीनान्विलवसतीन्भुजगानिव जातभोगसंकोचात् ।
व्यथयति मन्त्राक्षरमिव नाम तवारीन्वनेचरैर्गीतम् ॥ ५ ॥

दङ्कस्य ।

## ४२ रिपुसंभ्रमः ।

कोषान्गेहेषु मुञ्चन्पथि करितुरगं बान्धवानर्धमार्गे
दुर्गेष्वन्तःपुराणि प्रतिलवचकिताः पर्वतेभ्यो निवृत्ताः ।
यस्योद्योगे भ्रमन्तः समसमयसमारम्भगम्भीरभेरी-
झाङ्काराकीर्णकर्णज्वरभरतरलप्रोज्झिताशाः क्षितीशाः ॥ १ ॥

विश्वेश्वरस्य ।

श्रुत्वा यं सहसागतं निजपुरात्त्रासेन निर्गच्छतां
शत्रूणामवरोधनैर्जललवप्रस्यन्दातिम्यत्पुटाः ।
शुभ्रे सद्मनि पल्लविन्युपवने वाप्यां नवाम्भोरुहि
क्रीडाद्रौ च सशाद्वले विवलितग्रीवैर्विमुक्ता दृशः ॥ २ ॥ धनपतेः ।

मुग्धे किं शुकपञ्जरेण रसिके किं सारिकान्वेषणैः
सुस्थे मुञ्चसि किं न चित्रफलकं किं वीणया रागिणि ।
नायं भूषणसंग्रहस्य समयो लीलावति त्वर्यता-
मित्यासन्पुरविद्रवे भवदरिस्त्रीणां वयस्यागिरः ॥ ३ ॥

राजशेखरस्य ।

वत्से मालति मालिका न रचिता पुष्पैस्त्वदीयैर्मया
रक्ताशोकतरो तवाप्यभिनवो नोच्चासितः पल्लवः ।
व्यालोलालिकुलावलीढमुकुलस्त्वं चूत नालोकितो
हा धिक्कष्टमिति ब्रुवन्ति नगरत्यागे तवारिस्त्रियः ॥ ४ ॥

गदाधरस्य ।

मातर्मातर्जनक जनक प्रेयसि प्रेयसीति
भ्रातर्भ्रातस्तनय तनय ज्यायसि ज्यायसीति ।
यत्नासीरप्रचुरतुरगव्यूहवित्रस्तवैरि-
स्त्रीपुंसानां विदलति दलद्दिक्पालो विलापः ॥५॥ दाक्षिणात्यस्य ।

## ४३ अरिवधूः ।

कान्तारेषु करावलम्बिशिशवः पादैः स्रवल्लोहितै-
रङ्कन्त्यः पदवीं विलोचनजलैरावेदयन्त्यः शुचम् ।
दृष्टाः पान्थजनैर्निवृत्त्य सकृपं हाशब्दगर्भैर्मुखै-
र्यान्त्यद्धा सकलेन योजनतुरीयांशं तवारिस्त्रियः ॥ १ ॥

पुरुषोत्तमस्य ।

पारेकन्दरमिङ्गुदीवनमितो नीवारकेदारिका
स्वच्छन्दं सरसस्तटे कमलिनीवृन्दाढ्यमन्दानिलः ।
स्वच्छं निर्झरवारि वारणरदोत्खातास्ततो भूरुहा-

इत्थंध्याधवधूर्विबोध्य नयति त्वद्वैरिवीराङ्गनाः ॥ २ ॥

विभाकरस्य ।

घ्रातं तालफलाशया स्तनयुगं बिम्बभ्रमेणाधरो
दष्टः पाकविदीर्णदाडिमधिया लीढाः स्फुरन्तो रदाः ।
भ्राम्यन्ती श्रमनिःसहानुविपिनं यद्वैरिसीमन्तिनी
निद्राणा मुहुराहता मुहुरधिक्षिप्ता च शाखामृगैः ॥ ३ ॥

धनंजयस्य ।

कुरु तरुषु गृहास्थां तल्पबुद्धिं तृणेषु
त्वचि निवसनवाञ्छामन्नतृष्णां फलेषु ।
इति विनयति देव प्रेयसी त्वद्रिपूणा-
मभिनववनवासोद्वेगमुग्धां किराती ॥ ४ ॥ वीरभद्रस्य ।

न्यञ्चन्नीवीनिबन्धान्यकलिततिलकान्यक्वणत्कङ्कणानि
भ्रश्यन्मञ्जीरशिञ्जान्यचलितवलयस्रञ्जि धौताञ्जनानि ।
अप्रेङ्खत्तारहाराण्यवसितहसितश्रीणि शीर्णालकानि
त्रुट्यत्सिन्दूरविन्दून्यसकृदकृत यः शात्रवान्तःपुराणि ॥ ५ ॥

उमापतिधरस्य ।

## ४४ अरिवधूबाष्पः ।

हा चित्राङ्गि कुरङ्गि हा परभृते हा राजहंसप्रिये
हा चूतद्रुम हा प्रियङ्गुलतिके त्यक्ताः स्थ हा धिक्कथम् ।
इत्थं त्वत्परिपन्थिपार्थिवपुरन्ध्रीणां वनप्रस्थितौ
धाराधौतकपोलयोर्नयनयोरस्त्रं न विश्राम्यति ॥ १ ॥

गदाधरनारायणस्य ।

संदिष्टं मरुभूमिभूरुहचयैर्भूयाङ्गवान्भूपति-
र्निर्जेता नवखण्डमण्डलभुवो यत्त्वत्प्रसादाद्वयम् ।
प्रत्यासन्नविपन्नहूणतरुणीनेत्रप्रणालीगल-
द्वाष्पाम्भःप्लवपूरपिच्छिलतलाः श्री मुञ्ज मोदामहे ॥ २ ॥

कस्यचित् ।

एतद्भीतारिनारीगिरिबिलविगलद्वासरा निःसरन्ती
स्वक्रीडाहंसमोहग्रहिलशिशुभृशप्रार्थितोन्निद्रचन्द्रा ।
यन्नक्रन्दोद्यकैस्तन्नयनजलमिलच्चन्द्रहंसानुबिम्ब-
प्रत्यासत्तिप्रहृष्यत्तनयविहसितैराशशंसान्यश्वसीच्च ॥ ३ ॥

श्रीहर्षस्य ।

गम्भीरनीरसरसीरपि पङ्कशेषाः कुर्वन्ति ये दिनकरस्य करास्त एव ।
त्वद्वैरिवीरवनितानयनाम्बुलेशशोषे कथं प्रतिहता इति मे वितर्कः ४
कल्पदत्तस्य ।

के यूयं मुनयः किमत्र तपसे स्थानं समीहामहे
नीवाराङ्कुरदन्तुरा नियमितव्यालास्ति विन्ध्याटवी ।
सा संप्रत्यवनीमहेन्द्र भवतो विद्वेषिवामभ्रुवा-
मश्रान्तच्युतलोललोचनपयोवन्याभिरन्यादृशी ॥ ५ ॥
कविराजसोमस्य ।

## ४५ अरिपुरम् ।

अथात्तीव्रो लङ्कामयमयमुदन्वन्तमतर-
द्विशल्यां सौमित्रेरयमुपनिनायौषधिवराम् ।
इति स्मारं स्मारं त्वदरिनगरीसौधलिखितं
हनूमन्तं दन्तैर्दशति कुपितो राक्षसभटः ॥ १ ॥ परिमलस्य ।

लूतातन्तुपटावनद्धशिरसो वेल्लल्लतासंतते-
रन्योन्यं मिलनाच्चिरस्पृहमिव व्यासक्तकण्ठग्रहाः ।
क्रीडानिर्वृतघूकघूत्कृतिरवैः साक्रन्दवद्धारवं
क्रन्दन्ति त्वदरातिराजनगरीरथ्याभुवो वीरुधः ॥ २ ॥
युवराजस्य ।

वर्षासंभृतपीतिमानमनवं स्तब्धाङ्घ्रिहस्तद्वयं
भेकं मूर्ध्नि निगृह्य कज्जलरजःश्यामं भुजङ्गं स्थितम् ।
मुग्धाव्याधवधूस्तवारिनगरे शून्ये चिरात्सांप्रतं
स्वर्णोपस्कृतमुष्टिसायकधिया साकूतमाकर्षति ॥ ३ ॥ छित्तपस्य ।

लीलाचूततमालकेशरतरुस्कन्धे प्रवृद्धालय-
स्वच्छन्दोन्मदकर्करेद्धुरटितैर्भीमं बहिः काननम् ।
अन्तर्वेश्मविलोलचर्मचटकापद्माश्चलोद्वीजन-
क्रीडासुप्तपिशाचदम्पतिपुरं राजन्भवद्विद्विषाम् ॥ ४ ॥
विश्वेश्वरस्य ।

क्रूरोत्कूजत्करेटुप्रतिरवविरसज्जर्जरग्रन्थिबन्धाः
स्थानार्थिप्रेतमल्लद्वयकलहसमावर्जितस्थूलशाखाः ।
गोलोमीच्छन्नमातृप्रतिकृतिविरतप्रत्यभिज्ञा दिवापि
त्वच्छत्रुग्रामदेवीनिलयनतरवस्त्रासमुत्पादयन्ति ॥ ५ ॥

## ४६ अरिगृहम् ।

द्वारं खड्गिभिरावृतं बहिरपि प्रस्विन्नगण्डैर्गजै-
रन्तः कञ्चुकिभिः स्फुरन्मणिधरैरध्यासिता भूमयः ।

आक्रान्तं महिषीभिरेव शयनं त्वद्विद्विषां मन्दिरे
राजन्सैव चिरन्तनप्रणयिनीशून्येपि राज्यस्थितिः ॥ १ ॥
योगेश्वरस्य ।

वन्यो हस्ती स्फटिकघटिते भित्तिभागे स्वबिम्बं
दृष्ट्वा रुष्टः प्रतिगज इति त्वद्द्विषां मन्दिरेषु ।
दन्ताघाताकुलितदशनस्तत्पुनर्वीक्षमाणो
मन्दं मन्दं स्पृशति करिणीशङ्कया साहसाङ्क ॥ २ ॥ वेतालस्य ।

रन्ध्रे संन्यस्तदृष्टिः क्षितिनिहिततनुः क्रोडसंलीनपुच्छः
प्रत्याशायोजितात्मा ग्रहणपरिणतः स्तब्धकर्णो विशङ्कः ।
सङ्कोचाबद्धदेहो नियमितचरणः प्रस्फुरच्छ्मश्रुजालः
शून्ये राजन्विडालस्तव रिपुभवने मूषिकानुच्छिनत्ति ॥ ३ ॥
तस्यैव ।

वत्से माधवि तात चम्पक शिशो माकन्द कौन्दि प्रिये
हा मातर्मदयन्ति हा कुरवक भ्रातः स्वसर्मालति ।
इत्येवं रिपुमन्दिरेषु भवतः शृण्वन्ति नक्तंचरा-
गोलाङ्गूलविमर्दसंभ्रमवशादुद्यानदेवीगिरः ॥ ४ ॥ शुभाङ्कस्य ।

स्नाताः संप्रति वारिवाहसलिलैः संरूढशष्पाङ्कुर-
व्याजेनात्तकुशाः प्रणालसलिलैर्दत्त्वा निवापाञ्जलिम् ।
प्रासादास्तव विद्विषां परिपतत्कुड्यस्यपिण्डच्छला-
त्कुर्वन्ति प्रतिवासरंनिजपतिप्रेताय पिण्डक्रियाम् ॥५॥ महादेवस्य ।

## ४७ यशः ।

भूलं फणाः फणिपतेर्गगनं च मध्यः
शाखा दिशो जलधिमण्डलमालवालम् ।
त्रैलोक्यनाथ तव देव यशोद्रुमस्य
तारागणाः सुमनसः फलमिन्दुबिम्बम् ॥ १ ॥ श्रीहनूमतः ।

मातुः खेदमयं ततान पृथुकः क्रोडेन धात्र्यामसौ
रागाद्यस्तरुणः पुरन्दरपुरस्त्रीन्यस्तकण्ठग्रहः ।
ज्यायानप्यभिनत्पितामहपदं नित्याविनीतस्तनू-
जन्मा ते यशसां गणस्तदुचितव्रीडोसि तत्कीर्तने ॥ २ ॥
छित्तपस्य ।

बद्धो नैष न लङ्घितो न मथितः पीतो न वा बाडव-
व्यग्रो नापि यशोमयो यदुपतेरम्लायमानोम्बुधिः ।
अब्धींल्लब्धपराभवानवरयन्नर्वागथोर्वीभृतः
कुर्वन्गर्वविलङ्घितानवधिरधिब्रह्माण्डमारोहति ॥ ३ ॥ वाचस्पतेः ।

ऐरावणन्ति करिणः फणिनोऽप्यशेषाः
शेषन्ति हन्त विहगा अपि हंसितारः।
नीलोत्पलानि कुमुदन्ति च सर्वशैलाः
कैलासितुं व्यवसिता भवतो यशोभिः ॥ ४ ॥ मह्लाशक्तेः।

देव स्वस्ति वयं द्विजास्तत इतस्तीर्थेषु निष्कल्मषाः
कालिन्दीसुरसिन्धुसङ्गपयसि स्नातुं समीहामहे।
तद्याचेमहि सप्तविष्टपशुचीभावैकतानव्रतं
स्वं यच्छस्व यशः सितासितपयोभेदाद्विवेकोऽस्तु नः ॥ ५ ॥

रथाङ्गस्य।

## ४८ सर्वीययशः।

न तच्चित्रं चित्ते विततकरवालोग्ररसनो
महीभारं सोढुं भुजभुजगराजः प्रभवति।
यदुद्भूतेनेदं नवबिसलतातन्तुशुचिना
यशोनिर्मोकेण स्थगितमवनीमण्डलमभूत् ॥ १ ॥ संघश्रियः।

श्रीमन्पातालकुक्षिंभरिभरितसुरस्थानमम्भोधिरोधो-
रोधि क्ष्माशोधि शुद्धं प्रसरति यदिदं त्वद्यशस्तत्किमाहुः।
तद्ब्रूमस्त्वत्प्रतापानलमिलनकृतक्राथसंभारदूर-
स्फारोत्तालोऽयमभ्रंलिहलहरिभरो वर्धते दुग्धसिन्धुः ॥ २ ॥

श्रीकण्ठस्य।

चन्द्राभैर्भवतो यशोभिरमलैर्विस्तारितायां दिशि
ज्योत्स्नायां तव वैरिवर्गवदने विश्रान्तमन्धं तमः।
किं च भ्रूलतिकान्तपातमिलितश्रीभारसंवर्धित-
प्रेमाणि प्रसरन्ति बन्धुकुमुदान्यामोदवन्ति स्फुटम् ॥ ३ ॥

गोसोकस्य।

दृष्टं संगरसाक्षिभिर्निगदितं वैतालिकश्रेणिभि-
र्न्यस्तं चेतसि सज्जनैः सुकविभिः काव्येषु संचारितम्।
उत्कीर्णं कुशलैः प्रशस्तिषु सदा गीतं च नाकेसदां
दारैर्निर्जितवैरिवीर भवतश्चन्द्रावदातं यशः ॥ ४ ॥

राजशेखरस्य।

मुक्ताशीकरनिर्भरासु सदसि क्षुण्णासु कुम्भस्थली-
ष्वादन्तः स्फुटकर्णचामरदशास्वावर्जिनां दन्तिनाम्।
क्षेत्रीकृत्य वरूथिनीं युधि जयश्रीकर्षकेण द्विषां
येनोप्ता इव मुष्टिभिर्निजयशोबीजच्छटा रेजिरे ॥ ५ ॥ भिक्षोः।

## ४९ प्रशस्तयशः ।

आक्षिप्ता चामरश्रीः प्रसभमपहृतः पौण्डरीको विलासः
प्रच्छन्नो वारकम्बुः समजनि विहितः कण्ठभाराय हारः ।
लुप्तो हासप्रकाशः कमपि परिभवं प्रापितः पुष्पराशि-
श्चन्द्राभैर्यद्यशोभिः प्रतिधरणिभुजां निन्हुता किंच कीर्त्तिः ॥१॥

केशवस्य ।

अम्भोधिक्षिप्तमुक्तारुचिहरिचरणोद्गीर्णगङ्गाम्बुतुल्यं
कालिन्दीफेनकान्तिस्फुरितफणधरोन्मुक्तनिर्मोकरोचिः ।
कर्णाटीकुन्तलान्तर्विगलितसुमनोदामरम्यं समन्ता-
च्छ्रीखण्डालेपलक्ष्मीमुपनयति यशो यस्य खड्गप्रसूतम् ॥ २ ॥

जलचन्द्रस्य ।

भूचक्रं कियदेतदा वृतमभूद्यद्वामनस्याङ्घ्रिणा
नागानां कियदास्पदं यदुरसा लङ्घन्ति गूढाङ्घ्रयः ।
एकाहाद्यदनूरुरञ्चति कियन्मात्रं तदप्यम्बरं
यस्येतीव यशो ह्रिया त्रिभुवनं व्याप्यापि नो तृप्यति ॥ ३ ॥

उमापतिधरस्य ।

गृहाद्गृहमुपागतं व्रजति पत्तनं पत्तना-
द्वनाद्वनमनुद्रुतं भ्रमति पादपं पादपात् ।
गिरेर्गिरिमधिश्रितं तरति वारिधिं वारिधे-
र्यदीयमरि सुन्दरीनिकरपृष्ठलग्नं यशः ॥ ४ ॥ तस्यैव ।

आस्ते दामोदरीयामुदरदरदरी याधिशय्य त्रिलोकी
संमातुं शक्नुवंति प्रथिमभरवशात्तत्र नैतद्यशांसि ।
तामेतां पूरयित्वा निरगुरिवमधु ध्वंसिनः श्वेतपद्म-
च्छद्मापन्नानि तानि द्विपदशनसनाभीनि नाभीपथेन ॥ ५ ॥

कविपण्डितश्रीहर्षस्य ।

## ५० कीर्तिः ।

का त्वं कुन्तलमल्लकीर्तिरहह क्वासि स्थिता न क्वचित्
सख्यस्तास्तव कुत्र कुत्र वद वाग्लक्ष्मीरुचः संप्रति ।
वाग्याता चतुराननस्य वदनं लक्ष्मीर्मुरारेरुरः
कान्तिर्मण्डलमैन्दवं मम पुनर्नाद्यापि विश्रामभूः ॥ १ ॥

छित्तपस्य ।

रामः सैन्यसमन्वितः कृतशिलासेतुर्यदम्भोनिधेः
पारं लङ्घितवान्पुरा तदधुना नाश्चर्यमुत्पादयेत् ।

एकाकिन्यपि सेतुबन्धरहितान्सप्तापि वारां निधी-
न्हेलाभिस्तव देव कीर्तिवनिता यस्मात्समुल्लङ्घति ॥ २ ॥

तस्यैव ।

किं वृत्तान्तैः परगृहगतैः किंतु नाहं समर्थ-
स्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः ।
देशे देशे विपणिषु तथा चत्वरे पानगोष्ठ्या-
मुन्मत्तेव भ्रमति भवतो वल्लभा हन्त कीर्तिः ॥ ३ ॥

तुतातितस्य ।

अनन्तासौ कीर्तिः कविकुमुदबन्धोः क्षितिपते-
स्त्रिलोकीयं क्षुद्रा तदिह कथमस्याः स्थितिरिति ।
मुधेयं वः शङ्का कलयत कियद्दर्पणतलं
विशाला किं तत्र स्फुरति न करीन्द्रप्रतिकृतिः ॥ ४ ॥

पञ्चाक्षरस्य ।

ध्यायन्ती निरपायनायकगुणं त्वत्कीर्तिरम्भोनिधे-
र्भ्राम्यन्ती विपिनान्तरेषु विरहव्यग्रेव पाण्डुच्छविः ।
चन्द्रं निन्दति चन्दनं न सहते द्वेष्टि श्रियं शारदीं
दूरादेव निराकरोति करकाकर्पूरहारस्रजः ॥ ५ ॥ शरणस्य ।

## ५१ सवीर्यकीर्तिः ।

वीर क्षीरसमुद्रसान्द्रलहरीलावण्यलक्ष्मीमुष-
स्त्वत्कीर्तेस्तुलनां कलङ्कमलिनो धत्ते कथं चन्द्रमाः ।
स्यादेवं त्वदरातिसौधशिखरप्रोद्भूतशष्पाङ्कुर
ग्रासव्यग्रमनाः पतेद्यदि पुनस्तस्याङ्कशायी मृगः ॥ १ ॥

शाक्यरक्षितस्य ।

निःसृत्याहवसागराद्थ पुनः संसृत्य पृथ्वीतलं
कृत्वाधो हिमशैलमीश्वरशिरः शीतांशुलेखामपि ।
गङ्गेव स्मृतजन्मभूमिरमरैः साश्चर्यमालोकिता
कीर्तिस्ते प्रतिलोमलङ्घितवियद्ब्रह्माण्डमारोहति ॥ २ ॥

वाक्पतेः ।

आसीदुप्तं यदेतद्रणभुवि भवता वैरिमातङ्गकुम्भा-
न्मुक्ताबीजं विमुक्तं त्रिजगति जनयामास कीर्तिद्रुमं ते ।
शेषो मूलं प्रकाण्डं हिमगिरिरुदधिर्दुग्धपूरालवालं
ज्योत्स्ना शाखाप्रतानः कुसुमसमुच्चया यस्य चन्द्रः फलं च ॥ ३ ॥

हरेः ।

एका गङ्गा प्रयागे मलयपरिसरे चन्दनं मौक्तिकाली
कान्ताकण्ठे हिमांशुर्वियति सरसि च श्वेतमब्जं तथान्या।
कालिन्दी कालसर्पो मरकततरलो लाञ्छनं भृङ्गमाले-
त्येवं ते यत्र कीर्तिः परिणमति युता यत्र शत्रोरकीर्त्या ॥ ४ ॥

रामस्य।

सा चन्द्रादपि चन्दनादपि दरव्याकोषकुन्दादपि
क्षीराब्धेरपि शेषतोऽपि फणिनश्चण्डीशहासादपि।
कर्णाटीसितदन्तपत्रमहसोप्यत्यन्तमुद्द्योतिनी
कीर्तिस्ते भुजवीर्यनिर्जितरिपोर्लोकत्रयं भ्राम्यति ॥ ५ ॥

राजशेखरस्य।

## ५२ प्रशस्तकीर्तिः।

अन्तः सन्तोषबाष्पैः स्थगयति नयनं न श्रुतिभ्रंशभीरु-
र्नाङ्गेनानस्तिरोमा रचयति पुलकश्रेणिमानन्दकन्दाम्।
न क्षोणीभङ्गभीरुः कलयति च शिरःकम्पनं तन्न विद्मः
शृण्वन्नेतस्य कीर्तीः कथमुरगपतिः प्रीतिमाविष्करोति ॥ १ ॥

श्रीहर्षस्य।

क्षीरोदन्वानलीकः कपटमयतनुस्त्र्यम्बकस्याट्टहासो
मिथ्यानीहारसंपत्त्रिभुवनविवरे कृत्रिमा पौर्णमासी।
संवर्ताम्भोदवृन्दस्फुटदुरुकरकासारसंदेहदायी
दायादः कुन्दभासां दिशि विदिशि बभौ यस्य कीर्तिप्रतानः ॥ २ ॥

वसुकल्पस्य।

कैलासे निह्नुतश्रीः परिपिहितवपुः पार्वणः श्वेतभानुः
शेषः प्रच्छन्नवेशः कलयति न रुचिं जाह्नवीवारिवेणिः।
पीतः क्षीराम्बुराशिः प्रसभमपहृतः कुञ्जरो देवभर्तु-
र्यत्कीर्तीनां विवर्तैरजनि स भगवानेकदन्तोप्यदन्तः ॥ ३ ॥

श्रीमत्केशवसेनदेवस्य।

यद्वर्त्मोद्याति रोद्धुं त्रिपुरहरगिरिग्रामणीस्तन्नियन्तुं
कौबेरीं कुम्भजन्मा व्रजति यदि तदा दुर्धरा विन्ध्यवृद्धिः।
इत्थं यत्कीर्तिराशौ त्रिदशपतिपुराक्रान्तिप्रयाणे
चिन्ताग्निः क्रूरकर्मा व्यथयति हृदयं तेजसामीश्वरस्य ॥ ४ ॥

तस्यैव।

मलिनयति वैरिवदनं सुजनं रञ्जयति धवलयति धात्रीम्।
अपि कुसुमविशदमूर्तिर्यत्कीर्तिश्चित्रमाचरति ॥ ५ ॥

जयदेवस्य।

## ५३ कीर्तिगीतिः ।

लीलालोलकराङ्गुलीहतिरणद्वीणागुणप्रोच्चर-
द्गान्धारध्वनिसंवदन्मृदुकलास्निग्धस्वरोद्गारिभिः ।
लोलन्मौलिभिरर्धमीलितलसन्नेत्रैर्बलद्भ्रूलतै-
र्गीयन्ते गगनेचरैः सुरपतेरग्रे भवत्कीर्तयः ॥ १ ॥ सुरभेः ।

भोगीन्द्रः प्रमदोत्तरङ्गमुरगीसंगीतगोष्ठीषु ते
कीर्तिं देव शृणोतु विंशतिशतीं यच्चक्षुषां वर्तते ।
रक्ताभिः सुरसुन्दरीभिरभितो गीतां तु कर्णद्वयी-
दुःस्थः श्रोष्यति नाम किं स हि सहस्राक्षो न चक्षुःश्रवाः ॥ २ ॥
मुरारेः ।

गीयन्ते यदि पन्नगीभिरनघास्त्वत्कीर्तयस्तद्वयं
तुष्टा एव परं तु चेतसि चमत्कारोऽयमारोहति ।
तासां तादृशभावभङ्गिवलनासंस्थानसंदर्शिनि
व्यालेन्द्रे रसधूतमूर्धनि महीचक्रं पुनर्भ्रंदयते ॥ ३ ॥
तस्यैव ।

अद्य स्वर्गिवधूगणे गुणमय त्वत्कीर्तिमिन्दूज्ज्वला-
मुच्चैर्गायति निष्कलङ्किमदशामादास्यते चन्द्रमाः ।
गीताकर्णनमोदमुक्तयवसग्रासाभिलाषो वर-
स्वामिन्नङ्कमृगः कियन्ति हि दिनान्येतस्य वर्त्तिष्यते ॥ ४ ॥
तस्यैव ।

अस्य क्षौणिपतेः परार्धपरया लक्षीकृताः संख्यया
प्रज्ञाचक्षुरवेक्ष्यमाणतिमिरप्रख्याः किलाकीर्तयः ।
गीयन्ते स्वरमष्टमं कलयता जातेन वन्ध्योदरा-
न्मूकानां प्रकरेण कूर्मरमणीदुग्धोदधेरोधसि ॥ ५ ॥
श्रीहर्षस्य ।

## ५४ उच्चावचचाटुः ।

अभ्युद्धृता वसुमती दलितं रिपूरः
क्षिप्तक्रमं कवलिता बलिराजलक्ष्मीः ।
एकत्र जन्मनि कृतं तदनेन यूना
जन्मत्रये यदकरोत्पुरुषः पुराणः ॥ १ ॥
श्रीहनूमतः ।

कर्णं चक्षुरजीगणत्तव पितुस्तातः पिता ते पुनः
शक्त्याधार कुमारमप्यजगणत्कातरत्वेन सः ।

देवोगान्महिषीति पश्यति जगत्तत्त्वं विवेक्तुं पुनः
प्रागल्भ्यं प्रथयन्ति वस्तदपि च प्रज्ञाधनाः साधवः ॥ २ ॥

विद्यापतेः ।

प्रभुरसि वयं मालाकारव्रतव्यवसायिनो
वचनकुसुमं तेनास्माभिस्तवादरढौकितम् ।
यदि तदगुणं कण्ठे मा धास्तथोरसि मा कृथा
नवमिति कियत्कर्णे धेहि क्षणं फलतु श्रमः ॥ ३ ॥

वीर्यमित्रस्य ।

वक्त्रं साक्षात्सरस्वत्यधिवसति सदा शोण एवाधरस्ते
बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः ।
वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्ति राज-
न्स्वच्छेऽतो मानसेस्मिन्नवतरति कथं तोयलेशाभिलाषः ॥ ४ ॥

हरिचन्द्रस्य ।

देवः कुप्यतु वा विभिन्स्य विनयं प्रीतोस्तु वा मादृशै-
र्वाग्भिर्द्धिः प्रभुकीर्तिमप्रतिहतां वक्तव्यमेवोचितम् ।
सेवाभिर्यदि सेनवंशतिलकादासादनीयाः श्रियः
संकल्पानुविधायिनः सुरतरोस्तत्केन हार्यो मदः ॥ ५ ॥

शरणदेवस्य ।

श्रीधरदासकृतेस्मिन्सदुक्तिकर्णामृते तृतीयोयम् ।
चाटुप्रवाह ईप्सितफलप्रदो भवतु संततं कृतिनाम् ॥ १ ॥

इति श्रीमहामाण्डलिकश्रीधरदासकृतौ सदुक्तिकर्णामृते चाटुप्र-
वाहो नाम तृतीयः ॥ वीचयः ५४ । श्लोकाः २७० ॥

# अपदेशप्रवाहवीचयः ।

विष्णुर्महेशगणरविशशिनः शशिभास्करौ सरिन्नाथः ।
उत्कर्षोस्य घटोद्भवमितोयमब्धेरुपालम्भः ॥ १ ॥
निन्दा च वाडवयुतो जलधिः कंसोद्भवो जलं शङ्खः ।
मणिमरकते च नानारत्नं स्वर्णं च नदनद्यौ ॥ २ ॥
सरसी शुष्कतडागः पूर्णसरो मीनसर्पमण्डूकाः ।
पद्मं मधुपोमरपुरसरसीरुहचूतकेतकीभ्रमराः ॥ ३ ॥
पर्वतमलयौ शरभः सिंहः सिंहात्मजो जरत्सिंहः ।
हस्ती वन्यमतङ्गो मत्तगजः पङ्कपतितबद्धगजौ ॥ ४ ॥

हरिणो व्याधदवानलभीतकुरङ्गौ मृगी विविधपशवः ।
तरुकल्पविटपिचन्दनपिप्पलसहकारकङ्केल्यः ॥ ५ ॥
शाल्मलिरध्वतरुर्मरुविटपी नानापलाशिनो धन्वा ।
मेघो जलदश्लाघा पयोदनिन्दा च सारङ्गः ॥ ६ ॥
अपि दैवोपहतोसावनन्यगतिकोपि मानवानपि च ।
हंसोथ राजहंसः पिककीरौ विविधविहगाश्च ॥ ७ ॥
उच्चावचमिति वीचिभिरिह सप्तत्या द्वयेन संयुतया ।
श्रीधरदासेन कृतः सतापदेशप्रवाहोयम् ॥ ८ ॥

## १ वासुदेवः ।

भूता एव तिमिङ्गिलप्रभृतयो ये यादसामग्रिमा-
स्ते वैसारिणवेशकेशवशिशोर्जाता न राजौ पुनः ।
पृष्ठप्रोञ्छिततोयतुच्छजलधेरापूर्य येनान्तरं
ताः कल्लोलपरम्परा इव परं देहत्वचो दर्शिताः ॥ १ ॥
क्षितिंकस्य ।

भ्रमति गिरिराट् पृष्ठे गर्जत्युपश्रुति सागरो
दहति विततज्वालाजालो जगन्ति विषाननः ।
स तु विनिहितग्रीवाकाण्डः कटाहपुटान्तरे
स्वपिति भगवान्कूर्मो निद्राभरालसलोचनः ॥ २ ॥
चिरंतनशरणस्य ।

जायन्ते वटवोत्र कच्छपकुले किंतु क्वचित्कच्छपी
नैकाप्येकमसूत सूनुमपरं सूते न वा सोष्यते ।
आकल्पं धरणीधरोद्वहनतः संतापखिन्नात्मनो
यः कूर्मस्य दिनानि नाम कतिचिद्विश्रामदानक्षमः ॥ ३ ॥
शतानन्दस्य ।

निष्कन्दामरविन्दिनीं स्थपुटितोद्देशां स्थलीं पल्वले
जम्बालाविलमम्बु कर्तुमपरा सूते वराही सुतान् ।
दंष्ट्रायां चतुरर्णवोर्मिपटलैराप्लावितायामियं
यस्या एव शिशोः स्थिता विपदि भूः सा पुत्रिणी पोत्रिणी ॥ ४ ॥
अभिनन्दस्य ।

अपत्यानि प्रायो दश दश वराही जनयति
क्षमाभारे धुर्यः स पुनरिह नासीन्न भविता ।
पदं कृत्वा यः स्वं फणिपति फणाचक्रवलये
निमज्जन्तीमन्तर्जलधि वसुधामुद्धलयति ॥ ५ ॥ वराहस्य ।

## २ महादेवः ।

देवैर्दुग्धपयोधिरोधसि पुरा कैर्नाम मन्थाचल-
क्षोभप्रोद्गतचन्द्रमःप्रभृतये न प्रेषिताः पाणयः ।
स्वीचक्रे परमेक एव भगवानुद्विग्नलोकत्रयी-
रक्षायै कटुकालकूटगरलग्रासं स गौरीश्वरः ॥ १ ॥

वसुदेवस्य ।

छिन्ते ब्रह्मशिरो यदि प्रथयति प्रेतेषु सख्यं यदि
क्षीबः क्रीडति मातृभिर्यदि रतिं धत्ते श्मशाने यदि ।
सृष्ट्वा संहरति प्रजा यदि तदाप्याधाय भक्त्या मन-
स्तं सेवे करवाणि किं त्रिजगती शून्या स एवेश्वरः ॥ २ ॥

उमापतिधरस्य ।

त्वं चेत्संचरसे वृषेण लघुता का नाम दिग्दन्तिनां
व्यालैः कङ्कणकुण्डलानि कुरुषे हानिर्न हेम्नामपि ।
मूर्धन्यं तनुषे जडांशुमयशः किं नाम लोकत्रयी-
दीपस्याम्बुजबान्धवस्य जगतामीशोसि किं ब्रूमहे ॥ ३ ॥

शैलसर्वज्ञस्य ।

आहारो गरलं तृतीयमलिके चक्षुः कपालं करे
वासः कुञ्जरचर्म भस्मनि रतिर्भूषा भुजङ्गाधिपः ।
जन्मालक्ष्यमसाक्षिकं कुलमविज्ञाता च जातिः कथं
सेव्योस्माभिरसौ पिशाचपरिषद्भर्त्ता हताः स्मो वयम् ॥ ४ ॥

धर्मयोगेश्वरस्य ।

पाणौ ब्रह्मकपालमस्थिभिरलंकारोङ्गरागश्चिता-
भस्माव्याहतमुत्तरीयमुरगः क्रीडा समं मातृभिः ।
यस्यैतान्यसमञ्जसानि तमनाचारैः पिशाचैर्वृतं
कः स्थाणुं फलवाञ्छया वद वृषादन्यो जनः सेवते ॥ ५ ॥

तस्यैव ।

## ३ गणाः ।

तुल्यैवेश्वरसेवा कर्म न विघ्नः पुरा कृतं कीदृक् ।
भृङ्गी यदस्थिशेषो भृशतरमकृशश्च कूष्माण्डः ॥ १ ॥

वाक्पतेः ।

एको गिरिशः स्वामी गणता तुल्यैव वल्लभत्वं च ।
किं कुर्मः कर्मगतौ शुष्यति भृङ्गी विनायकः पीनः ॥ २ ॥

कस्य चित् ।

कपर्दी भूतिसंपन्नो जगतीपतिरद्वयः ।
धिग्दैवमव्ययः सोपि भृङ्गी शुष्यत्यतो भृशम् ॥ ३ ॥

अमोघस्य ।

स्कन्दे मन्दावधानं चरति गणपतौ मौलिपातं न धत्ते
वृन्दे वृन्दारकाणां विनयवति भृशं नादरानातनोति ।
किं भूम्ना यश्च देवीं न नमति गिरिजां तस्य निर्व्याजवृत्तेः
क्षीणस्याप्येकनिष्ठा जयति भगवती भृङ्गिणस्तस्य भक्तिः ॥ ४ ॥
कूटस्थं श्रवणोपकण्ठविलसत्क्रूरद्विजिह्वाश्रयं
दक्षद्वेषिणमङ्घ्रिलङ्घितवृषं वैषम्यभीमेक्षणम् ।
ईशं निर्गुणमव्ययप्रकृतिकं संसेव्य भृङ्गी चिरा-
द्यज्जीवत्यतिदुर्बलेन वपुषा मन्ये स एवोत्सवः ॥ ५ ॥

कस्य चित् ।

## ४ सूर्यः ।

किं नैव सन्ति सुबहूनि महामहांसि
चन्द्रोप्यलं भुवनमण्डलमण्डनाय ।
सूर्यादृते न तदुदेति न चास्तमेति
येनोदितेन दिनमस्तमितेन रात्रिः ॥ १ ॥

आनन्दवर्धनस्य ।

रात्रावोषधयो ज्वलन्ति कलयन्त्यौज्ज्वल्यमप्यग्नयो
ज्योत्स्नाश्चन्द्रमसि स्फुरन्ति दधति ज्योतींषि तेजस्विताम् ।
अन्यच्च क्रिमयोभि बिभ्रति महोलेशानमुष्यैव ताः
सर्वा एव निधेस्त्विषां भगवतो दीप्तिप्रतिच्छायिका ॥ २ ॥

उमापतिधरस्य ।

अस्यामोषधयो ज्वलन्तु दधतु ज्योतींषि कीटा अपि
प्रोन्मीलन्तु भुजङ्गमौलिमणयः क्रीडन्तु दीपाङ्कुराः ।
प्रष्टव्याः खलु यूयमेव यदि कोप्यस्तंगते भास्वति
प्रौढध्वान्तपयोधिमग्नजगतीहस्तावलम्बक्षमः ॥ ३ ॥

जलचन्द्रस्य ।

अस्मिन्नक्रमहर्विवेकविकले कालाश्रमे नीरदैः
संनद्धैरभितो निरुद्धगगनाभोगासु दिग्भित्तिषु ।
भानोर्न प्रसरन्तु नाम किरणाः किं त्वस्य तेजस्विनः
सत्तामात्रपरिग्रहेण विकसन्त्यद्यापि पद्माकराः ॥ ४ ॥

वासुदेवस्य ।

जगन्नेत्रश्रेणी-तिमिरहरसिद्धाञ्जनसखा-
मयूखा यस्यैते त्रिभुवनममोघं विदधति।
अये कर्मालङ्घ्यं कलय किमपीदं तनुभृता-
मुलूकानामन्धंकरणः सोऽम्बरमणिः॥ ५॥ रविगुप्तस्य।

## ५ चन्द्रः।

सुधांशोर्जातेयं कथमपि कलङ्कस्य कणिका
विधातुर्दोषोऽयं न च गुणनिधेस्तस्य किमपि।
स किं नात्रेः पुत्रो न किमु हरचूडार्चनमणि-
र्न वा हन्ति ध्वान्तं जगदुपरि किं वा न वसति॥ १॥
दक्षस्य।

अस्मिन्नभ्युदिते जगत्-त्रयदृशामुल्लासहेतौ दिशा-
मास्यम्लानिहरे सुधारसनिधौ देवे निशास्वामिनि।
वक्त्रं मुद्रितमम्बुजन्म भवता चेत् किं ततः शाश्वतं
नैतस्येश्वरमौलिमण्डनमणेर्गायन्ति विश्वे यशः॥ २॥
वैद्यगदाधरस्य।

अजनि भगवानस्माद्वेधाः शिरःसु सुधाभुजां
कृतपदमिदं चैतद्देव्याः श्रियो धृतिमन्दिरम्।
तदिह भुवनाभोगश्लाघ्ये सिरोरुहि यश्चिरं
शशधर तव द्वेषारम्भः स एष जडग्रहः॥ ३॥ तस्यैव।

नयनमसि जनार्दनस्य शम्भो-
मुकुटमणिः सुदृशां त्वमादिदेवः।
त्यजसि न मृगमात्रमेतदिन्दो
विरमति येन कलङ्ककिंवदन्ती॥ ४॥
रामदासस्य।

आशाः प्रसादयतु पुष्यतु वा चकोरा-
न्कामं तनोतु कुमुदेषु मुदं सुधांशुः।
एकः स एव परमुत्कटराहुदन्त-
पत्रप्रवेशसमदुःखसुखः कुरङ्गः॥ ५॥
योगेश्वरस्य।

## ६ चन्द्रसूर्यौ।

चारित्राणि रवेर्जयन्तिजगतामग्रे तमोदुर्गतिं
दृष्ट्वास्तं व्रजतापि येन शशभृत्यारोपिता दीप्तयः।
प्रीताः सः पुनरस्य संप्रति सदाचारेण शीतद्युते-

येत्तद्बन्धुषु पङ्कजेषु किमपि प्रारम्भि दुर्नाटकम् ॥ १ ॥

जलचन्द्रस्य ।

दिवसरजनीनाथौ पुंसः परस्य विलोचने
कमलकुमुदानन्दग्रन्थी तमःपरिपन्थिनौ ।
तपनशशिनौ स्पृष्ट्वा राहुग्रहं सृजता त्वया
कथमपयशस्ताहग्धातः स्वहस्तितमात्मनः ॥ २ ॥

वैद्यगदाधरस्य ।

विरम तिमिर साहसादमुष्मा-
द्दिनमणिरस्तमुपागतस्ततः किम् ।
कलयसि न पुरो महो महोर्मि-
प्लुतवियदभ्युदयत्ययं सुधांशुः ॥ ३ ॥

वल्लालसेनस्य ।

तत्तावदेव शशिनः स्फुरितं महीयो
यावन्नतिग्मरुचिमण्डलमभ्युदेति ।
अभ्युद्गते सकलधामनिधौ तु तस्मि-
न्निन्दोः सिताभ्रपटलस्य च कः विशेषः ॥ ४ ॥

मधुकूटस्य ।

विश्वेषां दधता प्रबोधपदवीं येनानुषङ्गात् कृताः
स्वेषामम्बुरुहां श्रियः स भगवानुष्णोपि सेव्यो रविः ।
शीतेनापि किमिन्दुना यदुदये तस्यैव यद्बान्धवै-
रुद्बुद्धं कुमुदैरिदं तु शिरसा कृत्स्नं जगद् घूर्णते ॥ ५ ॥

उमापतिधरस्य ।

## ७ समुद्रः ।

आच्छिद्य लक्ष्मीमित एव पूर्वमत्रैव विस्रम्भसुखप्रसुप्तः ।
एकः परं वेद स कैटभारिर्महाशयत्वं मकरालयस्य ॥ १ ॥

दशरथस्य ।

यद्यपि स्वच्छभावेन दर्शयत्यम्बुधिर्मणीन् ।
तथापि जानुदघ्नोयमिति चेतसि मा कृथाः ॥ २ ॥

भाष्यकारस्य ।

उच्चैरुन्मथितस्य तेन बलिना दैवेन धिक्कर्मणा
लक्ष्मीमस्य निरस्यतो जलनिधेर्जातं किमेतावता ।
गाम्भीर्यं किमयं जहाति किमयं पुष्णाति नाम्भोधरा-
न्मर्यादां किमयं जहाति किमयं न त्रायते पक्षिणः ॥ ३ ॥

लक्ष्मीधरस्य ।

अये वारां भर्तः कुलिशकरकोपप्रतिभया-
दयं पक्षप्रेम्णा गिरिपतिसुतस्त्वामुपगतः ।
त्वदन्तर्वास्तव्यो यदि पुनरयं वाडबशिखी
प्रदीप्तः प्रत्यङ्गं ग्लपयति ततः कोस्य शरणम् ॥ ४ ॥
विभोकस्य ।

कियानिन्दुस्तस्मिन्नसति भवतः कैव गणना
त्वमेतेनैवेह प्रसभमसि रत्नाकर इति ।
दिशो विस्फायन्तां भवतु कृतकृत्यः स्मरहरो
हरेरास्तां चक्षुः प्रसरतु यशस्ते दिशि दिशि ॥ ५ ॥
शुङ्गोकस्य ।

## ८ समुद्रोत्कर्षः ।

मर्य्यादैकपरायणस्य जलधेर्वेलातटक्ष्मारुहां
यल्लक्ष्मीरनपायिनी भगवतो माहात्म्यमस्यैव तत् ।
एतस्मिन्क्षुभिते तु वीचिवलनैर्विश्वं निपीय स्थिते
सूर्याचन्द्रमसोरपीह न कथा केमी तटान्तद्रुमाः ॥ १ ॥
धीतोकस्य ।

एकेनैव पयोधिना जलमुचस्ते पूरिताः कोटिशो-
जातो नास्य कुशाग्रलीनतुहिनस्वल्पोपि तोयव्ययः ।
आहो शुष्यति दैवदुर्विलसितैरम्भोधिरम्भोमुचः
संभूयापि विधातुमस्य रजसः स्तैमित्यमप्यक्षमाः ॥ २ ॥
शब्दार्णवस्य ।

किं ब्रूमो जलधेः श्रियं स हि खलु श्रीजन्मभूमिः स्वयं
वाच्यः किं महिमास्य यस्य हि किल द्वीपं महीति श्रुतिः ।
त्यागः कोपि स तस्य बिभ्रति जगद्यस्यार्थिनोप्यम्बुदाः
शङ्कैः कैव कथापि यस्य भवति क्षोभेण कल्पान्तरम् ॥ ३ ॥
तस्यैव ।

एतस्माज्जलधेर्जलस्य कणिकाः काश्चिद्गृहीत्वा ततः
पाथोदाः परिपूरयन्ति जगतीं रुद्धाम्बरा वारिभिः ।
अस्मिन्मन्दरकूटकोटिघटनाभीतिभ्रमत्तारकां
प्राप्यैकां जलमानुषीं त्रिभुवने श्रीमानभूदच्युतः ॥ ४ ॥ हरेः ।

मर्यादाभङ्गभीतेरमृतमयतया धैर्यगाम्भीर्ययोगा-
न्न क्षुभ्यन्त्येव तावन्नियमितसलिलाः सर्वदैते समुद्राः ।
आहो क्षोभं व्रजेयुः क्वचिदपि समये दैवयोगात्तदानीं

न क्षोणी नाद्रिवर्गो न च रविशशिनौ सर्वमेकार्णवं स्यात् ।५।

सुवर्णरेखस्य ।

## ९ अगस्त्यहस्ते समुद्रः

व्याप्याशाः शयितस्य वीचिवलनैरुल्लिख्य खं प्रेङ्खतः
सिन्धोर्लोचनगोचरः स महिमा तेषां तनोत्यद्भुतम् ।
संश्लिष्टाङ्गुलिरन्ध्रलीनमकरग्राहावलिर्नीरवो-
यैर्नायं करशुक्तिकोदरगतो दृष्टो मुनेरञ्जलौ ॥ १ ॥

अभिनन्दस्य ।

उद्दामार्कमरीचिमूर्छितदृशां येनाध्वगानामयं
वेलालम्ब(ङ्घ)नजागरूकमनसामारम्भि कर्णज्वरः ।
क्लेशोच्छृङ्खलचेतसः प्रविशतो गण्डूषगर्भे मुने-
र्लीनः कुत्र महार्णवस्य स पुनः कल्लोलकोलाहलः ॥ २ ॥

जलचन्द्रस्य ।

अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ।
क एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः ॥ ३ ॥

विद्यापतेः ।

अये वारांराशे कतिपयपयोबिन्दुविभवै-
रमीभिर्मा गर्वं वह निरवलेपा हि कृतिनः ।
न किं लोपामुद्रासहचरकरक्रोडकुहरे
भवान्दृष्टः कष्टं प्रचलजलजन्तुव्यतिकरः ॥ ४ ॥

विश्वेश्वरस्य ।

तावद्वेला विषमसलिलावर्तनाभीनिकुञ्ज-
क्रोडभ्राम्यन्मकरशिखरिग्रावरौद्रः समुद्रः ।
दृष्टो यावन्न खलु चुलुकीभूतनिष्पन्दमूर्ति-
र्लोपामुद्रासहचरकरस्वस्तिकोत्सङ्गवर्ती ॥ ५ ॥

लोपामुद्राकवेः ।

## १० समुद्रोपालम्भः ।

दूरीभूतरतिश्चिरं मरकते मुक्तासु मुक्तस्पृहः
सानन्दोसि न चेन्द्रनीलमणिषु त्यक्तादरो विद्रुमे ।
त्वां संसेव्य समुद्र संप्रति पुनर्दैष्टस्वभाग्यक्षय-
क्षीणोहं सकलार्थिसार्थसुलभामभ्यर्थये शुक्तिकाम् ॥ १ ॥

इन्द्रदेवस्य ।

प्रमोदादुद्वाष्पः पुलकपटलैरर्चिततनुः
शिरो धूत्वा धूत्वा किमिति जलधेर्गायसि यशः ।
किमेतेनास्माकं फणिमकरनक्रप्रणयिना
नमस्तेभ्यो लभ्या य इह गुणभाजोऽपि मणयः ॥ २ ॥
वैद्यगदाधरस्य ।

विगर्जामुन्मुञ्च त्यज तरलतामर्णव मना-
गहंभावः कोऽयं कतिपयमणिग्रावगुडकैः ।
दृशं मेरौ दद्याः स हि मणिमयप्रस्थमहितो
महामौनः स्थैर्यादथ भुवनमेव द्रढयति ॥ ३ ॥ शतानन्दस्य ।
अजायन्तैतस्मादमृतशशिलक्ष्मीप्रभृतयः
परित्राताश्चेन्द्रात्कुलशिखरिणः पूर्वममुना ।
उपेता इत्येवं तव जलनिधे तीरमधुना
विगर्जाभिः किं नः श्रुतिपुटमहो जर्जरयसि ॥ ४ ॥ सरोरुहस्य ।
श्रमपरिगतैर्विस्तीर्णश्रीरसीति परं पयः
कतिपयमितं त्वत्तोऽस्माभिः समुद्र समीहितम् ।
किमसि नितरामुत्क्षुब्धोर्मिः प्रसीद नमोस्तु ते
पथि पथि शिवाः सन्त्यस्माकं शतं कमलाकराः ॥ ५ ॥
कमलगुप्तस्य ।

## ११ समुद्र निन्दा ।

ग्रावाणो मणयो हरिर्जलचरो लक्ष्मीः पयोमानुषी
मुक्तौघाः सिकताः प्रवाललतिकाः शैवालमम्भः सुधा ।
तीरे कल्पमहीरुहः किमपरं सर्वत्र नामाम्बुधे-
र्दूरात्कर्णरसायनं निकटतस्तृष्णापि नो शाम्यति ॥ १ ॥
उपादूर्ध्वं तत्पान्थाः पुनरपि सरो मार्गतिलकं
यदासाद्य स्वेच्छं विहरथ विनीतक्लमभराः ।
इतस्तु क्षाराब्धेर्जरठकमठक्षुण्णपयसो-
निवृत्तिः कल्याणी न पुनरवतारः कथमपि ॥ २ ॥ पापाकस्य ।
यद्वीचीभिः स्पृशसि गगनं यच्च पातालमूलं
रत्नैरुद्दीपयसि पयसा यत्पिधत्से धरित्रीम् ।
धिक्तत्सर्वं तव जलनिधे यद्विमुच्याश्रुधारा-
स्तीरे नीरग्रहणविमुखैरध्वगैरुज्झितोसि ॥ ३ ॥ शुभाङ्कस्य ।
कस्त्वं कोपि कुतोसि रत्नवसतेस्तीरादहं नीरधे-
र्लब्धं किंचन गर्जितैर्बधिरता हृद्याहतिः सैकतैः ।

मा खेदं कुरु तादृगौर्वदहनज्वालावलीदुःसहं
क्षारोदं यदुपास्य जीवसि सखे श्लाघ्यं न तन्मन्यसे ॥ ४ ॥
कस्यचित्।

धिगेतद्गाम्भीर्यं धिगमृतमयत्वं च जलधे-
र्धिगेतद्द्राघीयःपृथुलतरकल्लोलभुजताम्।
यदेतस्यैवाग्रे कवलिततनुर्दावदहनै-
र्न तीरारण्यानी सलिलचुलुकेनाप्युपकृता ॥ ५ ॥ कपालेश्वरस्य।

## १२ सवाडव--समुद्रः।

लोला श्रीः शशभृत्कलङ्कमलिनः क्रूरो मणिग्रामणी-
र्माद्यत्यभ्रमुवल्लभोपि सततं तत्कालकूटं विषम्।
इत्यन्तःस्वकुटुम्बदुर्णयपरामर्शाग्निना दह्यते
गाढं वाडवनामधेयदहनव्याजेन वारां निधिः ॥ १ ॥
वाणीकुटिललक्ष्मीधरस्य।

विस्तारो यदि नेदृशो न यदि तद्गाम्भीर्यमम्भोनिधे-
र्न स्याद्वा यदि सत्वमात्र-विषयस्तादृग्दयानुग्रहः।
अन्तः प्रज्वलता पयांसि दहता ज्वालावलीं मुञ्चता
के न स्युर्वडवानलेन बलिना भस्मावशेषीकृताः ॥ २ ॥ केशटस्य।

धिग्वाडवं दहनमर्थितया विपक्ष-
मभ्येति यः स्वजठरप्रतिपूरणाय।
धिग्वारिराशिमपि यो हि तथाविधस्य
शत्रोर्जलैरपि न पूरयतेभिलाषम् ॥ ३ ॥ तस्यैव।

आश्चर्यं वडवानलः स भगवानाश्चर्यमम्भोनिधि-
र्यत्कार्यातिशयं विलोक्य हृदये कम्पः समुत्पद्यते।
एकस्याश्रयघस्मरस्य पिबतस्तृप्तिर्न जाता जलै-
रन्यस्यापि महात्मनो न वपुषि स्वल्पोपि तोयव्ययः ॥ ४ ॥
तस्यैव।

अयमलघुविसारि-स्फार-जिह्वाकलापो-
ज्वलति यदि न मध्ये वाडवो हव्यवाहः।
मुहुरुपचितसारो वारिभिर्निम्नगानां
त्रिभुवनमपि किं न प्लावयत्यम्बुराशिः ॥ ५ धर्मपालस्य।

## १३ अगस्त्यः।

श्वासोन्मूलितमेरुरम्बरतलव्यापी निमज्जन्मुहु-
र्यत्रासीच्छिशुमारविभ्रमकरः क्रीडावराहो हरिः।

वीचिव्याप्तदिगन्तरः स हि तथा वारांपतिः पीयते
पीतः सोपि न पूरितं च जठरं तस्मै नमोऽगस्तये ॥ १ ॥
शब्दार्णवस्य।

किं ब्रूमो हरिमस्य विश्वमुदरे किं वा फणां भोगिनः
शेते यत्र हरिः स्वयं जलनिधेः सोप्येकदेशे स्थितः।
आश्चर्यं कलसोद्भवोम्बुधिरयं यस्यैकहस्तोदरे
गण्डूषीयति पङ्कजीयति फणी भृङ्गीयति श्रीपतिः ॥ २ ॥
कस्यचित्।

आज्ञामेव मुनेः प्रणम्य शिरसा विन्ध्याचल स्थीयता-
मत्युच्चैः पदमिच्छता पुनरियं नोल्लङ्घनीया त्वया।
मैनाकादिमहीध्रलब्धवसतिं यः पीतवानम्बुधिं
तस्य त्वां गिलतः कपोलफलके क्लेशोपि किं जायते ॥ ३ ॥
शालूकस्य।

निद्रालुर्न हरिः स्मृतो न गणितो दग्धव्यविश्वः शिखी
तास्ता लङ्घविहायसः किमपरं नालोचिता वीचयः।
सद्यः संमिलिताङ्गुलित्रयपुटे क्षीणोदरेण व्रतै-
श्चित्रं नः श्रुतिविभ्रमो नु मुनिना पीतः स पाथोनिधिः ॥ ४॥
कस्यचित्।

आस्तां चक्षुरिदं तिरोभवति कियच्चेतोपि यद्वैभवै-
र्निष्प्रत्याशमयं मुने जलनिधिर्गण्डूषितः सत्तपः।
एतेनैव विरन्तुमर्हसि पुनर्गण्डूषपानाधिका
काचित्ख्यातिरतःपरं परमसौ पर्जन्यनीवीव्ययः ॥ ५ ॥
तैलपाटीयगाङ्गोकस्य।

## १४ जलम्।

गाम्भीर्यं भयदायि ते रसवशान्नानात्वमप्यद्भुतं
न स्थैर्यं शिरसा धृतस्य च मुखं दुर्वारमेकान्ततः।
शक्तिस्ते महतोचलानपि भिदां नेतुं पयो ब्रूहि मे
सोदर्यास्तव किं खला विभजता लब्धास्त्वया यद्गुणाः ॥ १ ॥
केशटस्य।

स्वातन्त्र्यं तव नीचसर्पणमथो पात्रे स्थितौ नेयता
तच्चित्रं प्रकटीकरोति कलुषीभावोन्यजन्यस्तव।
स्नेहो हन्त तवान्तरं न लभते पृच्छामि तत्त्वां पयः
शिष्यः किंनु दुरीश्वरस्तव सखे किंवा त्वदीयो गुरुः ॥ २ ॥
तस्यैव।

चातुर्वर्ण्यविदारिणस्तव पयः स्पर्शो न गर्हाकरः
पात्रे सत्यकुलीनता न भवति त्वल्लाघवाद्गौरवम् ।
इत्थं लोकविनिन्दिते च चरिते त्वं मूर्तिरीशस्य चे-
त्प्रायेणेश्वरभूषितस्य चरितं शक्नोति को गर्हितुम् ॥ ३ ॥

तस्यैव ।

अब्जं त्वब्जमथाब्जभूस्तत इतो ब्रह्माण्डमण्डादभू-
द्विश्वं स्थावरजङ्गमात्मकमिदं त्वन्मूलमित्थं पयः ।
धिक् त्वां चौर इव प्रयासि निभृतं निर्गत्य जालान्तरै-
र्बध्यन्ते विवशास्त्वदेकगतयस्त्वामाश्रिता जन्तवः ॥ ४ ॥

तस्यैव ।

शैत्यं नाम गुणस्तवैव सहजः स्वाभाविकी स्वच्छता
किं ब्रूमः शुचितां भवन्ति शुचयः स्पर्शेन यस्यापरे ।
किं चातः परमस्ति ते स्तुतिपदं यज्जीवनं जीविनां
त्वं चेन्नीचपथेन गच्छसि पयः कस्त्वां निरोद्धुं क्षमः ॥ ५ ॥

तस्यैव ।

## १५ शङ्खः ।

रत्नाकराज्जनिरनुष्णकरावदाता
कान्तिः स्वभावकुटिलं कठिनं च वक्षः ।
शङ्खस्य दक्षिणगतेर्महनीयताभू-
द्वामात्मनस्तदपि च क्रकचप्रहारः ॥ १ ॥ कस्यचित् ।

विदितधवलिमासि श्रूयमाणो ध्वनिस्ते
रमयति रमणीया जन्मभूः सिन्धुराजः ।
तदपि निभृतमेकं वाच्यमस्त्येव कम्बो
हृदयकुटिलिमानं कस्तवापह्नवीति ॥ २ ॥ नीलस्य ।

शङ्खाः सन्ति सहस्रशो जलनिधेर्वीचिच्छटाघट्टिताः
पर्यन्तेषु लुठन्ति ये दलशतैः कल्माषितक्ष्मातलाः ।
एकः कोपि स पाञ्चजन्य उदभूदाश्चर्यभूतः सतां
यः संवर्तभरक्षमैर्मधुरिपोः श्वासानिलैः पूर्यते ॥ ३ ॥

कविरत्नस्य ।

संभूताश्च भवन्ति च प्रतिपदं भूयो भविष्यन्ति च
प्रायः कम्बुनिधेर्न कुक्षिकुहरे संख्यातिगाः कम्बवः ।
एकोप्यत्र स तादृशः समभवत्कः पाञ्चजन्यादृते
यन्नादेन भवन्त्यमूर्भयगलद्भ्रूणाः सुरारिस्त्रियः ॥ ४ ॥

गोशोकस्य ।

सिन्धोरुच्चैः पवनचलनादुच्छलद्भिस्तरङ्गै-
स्तीरं नीतो हतविधिवशाद्दक्षिणावर्तशङ्खः।
दग्धः किं वा भवति न मसी वेति संदेहिनीभिः
शम्बूकाभिः सह परिचयान्नीयते पामरीभिः॥ ५॥

अनुरागदेवस्य।

## १६ मणिः।

कनकभूषणसंग्रहणोचितो
यदि मणिस्त्रपुणि प्रतिरुध्यते।
न स विरौति न चापि न शोभते
भवति योजयितुर्वचनीयता॥ १॥ अचलस्य।

अपि वज्रेण संघर्षमपि पद्भ्यां पराभवम्।
सहन्ते गुणलोभेन त एव मणयो यदि॥ २॥ वाचस्पतेः।

समुद्रेणान्तस्थस्तटभुवि तरङ्गैरकरुणैः
समुत्क्षिप्तोस्मीति त्वमिह परितापं त्यज मणे।
अवश्यं कोपि त्वद्गुणपरिचयाकृष्टहृदयो-
नरेन्द्रस्त्वां कुर्यान्मुकुटमकरीचुम्बितरुचिम्॥ ३॥ कस्यचित्।

न त्याज्या निजभूमिरित्यलमिह भ्रातर्मणीनां गणै-
र्यैरेवायमकारि वारिधिरधो गत्वापि रत्नाकरः।
नैषामत्र गुणग्रहो न गरिमख्यातिर्न वार्घक्रमो
यातास्ते पुनरन्यतः क्षितिभृतां मूर्धानमध्यासते॥ ४॥

तिलचन्द्रस्य।

उपादाता यावन्न भवति भवादृग्गुणवता-
मसत्कल्पास्तावत्त्रिभुवनमहार्हा अपि गुणाः।
अपि प्राग्दैत्यारेर्हृदयवसतेः कौस्तुभमणेः
स किं नासीदब्धौ श्रुतिरपि किमस्य क्वचिदभूत्॥ ५॥

धर्माधिकरणिकरुद्रस्य।

## १७ मरकतम्।

वणिगधिपते किंचिद्ब्रूमस्त्रपामिह मा कृथाः
कथमनिभृतं केयं रीतिः पुरे तव संप्रति।
मरकतमणिः काचो वायं भवेदिति संशये
लवणवणिजां यद्व्यापारः परीक्षितुमर्पितः॥ १॥ नारायणाब्धेः।

इह परिचिता जात्यन्धानामियं न तवोन्नति-
र्गुणपरिचये चक्षुष्मन्तो म्रियन्ति बिडम्बिताः।

कृपणवणिजामल्पीकर्तुं गुणांस्तव केवलं
मरकत मृषा दोषोद्गारः करिष्यति दुर्यशः ॥ २ ॥ जलचन्द्रस्य ।
त्यज निजगुणाभिमानं मरकत पतितोसि मत्सरे वणिजि ।
काचमणेरपि मूल्यं यल्लभसे तदपि ते श्रेयः ॥ ३ ॥ कस्यचित् ।
दुरर्थैर्यत्काचभ्रमभवकलङ्कस्त्वविकृतो-
जगच्चूडाचुम्बिन् मरकत स कस्ते परिभवः ।
यदस्माभिस्तूष्णीं स्थितमिह तवालोचनपथे
तदन्तर्दुष्पूरोदरभरणदैन्यव्यवसितम् ॥ ४ ॥ वल्लणस्य ।
केनासीनः सुखमकरुणेनादरादुद्धृतस्त्वं
विक्रेतुं वा कथमुपनतः केन देशान्तरेस्मिन् ।
अस्मिन्वित्तव्ययभरसहो ग्राहकस्तावदास्तां
नास्ति भ्रातर्मरकतमणे त्वत्परीक्षाक्षमोपि ॥ ५ ॥ मङ्गलस्य ।

## १८ नानारत्नानि ।

कथय किमिदं जात्या ख्यातं किमस्य वराटकैः
कतिभिरथवा लभ्यं चैतत्प्रयोजनमस्य किम् ।
प्रतिपदमिति ग्रामीणानां गणेन लघूकृतं
बत करतले रत्नं कृत्वा विषीदति वाणिजः ॥ १ ॥
वैद्यगदाधरस्य ।

स्फटिकशकलः किं वा नेयं शिला किमु सैन्धवी
किमिति विहितस्तम्भो न स्यादयं करकोपलः ।
इति कथमिह ग्रामीणानामकाण्डविकल्पनैः
शशधरमणे यास्यन्त्येते विडम्बनवासराः ॥ २ ॥ जलचन्द्रस्य ।
आघ्रातं परिचुम्बितं प्रतिमुहुर्लीढं च यच्चर्वितं
क्षिप्तं वा यदि नीरसत्वकुपितेनासि व्यथां मा कृथाः ।
हे माणिक्य तवैतदेव कुशलं शाखामृगेणामुना
यत्त्वं तत्त्वनिरूपणव्यसनिना चूर्णीकृतं नाश्मना ॥ ३ ॥
दूनोकस्य ।

जठरपिठरीमन्ये वारांनिधेरधिशेरते
कठिनमणयो येषां छायाकलापजितं जगत् ।
त्रिजगति पुनः कोयं कोलाहलः कमलापति-
प्रणयसुहृदो रत्नस्योच्चैरहो सदुपग्रहः ॥ ४ ॥ गोपोकस्य ।
अये मुक्तारत्न प्रसर बहिरुद्योतय गृहा-
नपि क्षौणीन्द्राणां कुरु फलवतः स्वानपि गुणान् ।

धिगत्रैवात्मानं जरयसि मुधा शुक्तिकुहरे
महागम्भीरोयं जलधिरिह कस्त्वां गणयति ॥ ५ मुरारेः ।

## १६ स्वर्णम् ।

एते नर्तितमौलयो गुणगणप्रस्तावनाभिर्मणे-
र्जायन्तां वणिजो वयं तु कनक त्वत्कीर्तिवैतालिकाः ।
ते चाम्लानमुखेनहन्त भवता दाहच्छिदावेदना-
मङ्गीकृत्य नरेन्द्रशेखर सुखासीनाः क्रियन्ते यतः ॥ १ ॥
जलचन्द्रस्य ।

स्तोत्राक्षराणि पठितानि वलिः प्रणीतः
क्लृप्तोञ्जलिर्विरचितो बहुशः प्रणामः ।
किं कुर्महे तदपि हेमनिधे भवन्तं
दत्ते न वीक्षितुमपीह स दग्धयक्षः ॥ २ ॥
वद्यगदाधरस्य ।

अद्यं घर्ष शिलायां दह वा दाहेन भिन्धि लौहेन ।
हे हेमकार कनकं मा मां गुञ्जाफलैस्तुलय ॥ ३ ॥ कस्यचित् ।
दाहच्छेदननिकषैरतिशुद्धस्यापि ते वृथा गरिमा ।
यदसि तुलामधिरूढं काञ्चनगुञ्जाफलैः सार्द्धम् ॥ ४ ॥ बाणस्य ।
यद्घृष्टं निकषोपलेप्यमलिनं यट्टङ्किकानिर्दय-
व्यापारेप्यविकारि यच्च शिखिनि क्षिप्तं च न म्लायसि ।
एतस्यामपि शुद्धिसंपदि तुलामारोप्य यत्साधुभि-
र्गुञ्जाभिः समकक्षामित्यवधृतं हा स्वर्ण किं चेष्ट्यताम् ॥ ५ ॥
बलभद्रस्य ।

## २० नदनद्यौ ।

केनेयं श्रीर्व्यसनरुचिना शोण विश्राणिता ते
जाने जानुद्वयसजल एवाभिरामस्त्वमासीः ।
वेगभ्रश्यत्तटरुहवनो दुस्तरावर्तवीचिः
कस्येदानीं कलुषसलिलः कूपभेदी प्रियोसि ॥ १ ॥ शतानन्दस्य ।
आजन्मस्थितयो महीरुह इमे कूले समुन्मूलिताः
कल्लोलाः क्षणभङ्गुराश्च सहसा नीताः परामुन्नतिम् ।
अन्तः प्रस्तरसंग्रहो बहिरपि भ्रश्यन्ति गन्धद्रुमा
भ्रातः शोण न सोऽस्ति यो न हसति त्वत्संपदां विप्लवे ॥ २ ॥
अमरसिंहस्य ।
कतिपयदिवसस्थायी पूरो दूरोन्नतोपि भाविता ते ।
तटिनि तटद्रुमपातनपातकमेकं चिरस्थायि ॥ ३ ॥भोजदेवस्य ।

नेत्रायातपथव्यतीतपयसः सन्त्येव नद्यः शतं
प्रायश्चित्तमुपाचरन्ति कृतिनः स्पृष्ट्वैव यासां पयः ।
या दृष्ट्वैव पुनाति विश्वमखिलं सेयं पुनर्जाह्नवी
विच्छिन्ना क्वचिदाविला क्वचिदतिस्वच्छाम्बुशोष्या क्वचित् ॥४॥
उमापतिधरस्य ।

प्रशान्ताः कल्लोलास्तिमितमसृणं वारि विमलं
विनीतोयं वेशः शममिव नदीनां कथयति ।
तथाप्यासां तैस्तैस्तरुभिरभितस्तीरपतितैः
स एवाग्रे वृद्धौ परिणमति रुद्धोप्यविनयः ॥ ५ ॥ कस्यचित् ।

## २१ सरः ।

मञ्जुस्वनाः शकुनयः सुभगोवतारो
रम्यं च शाद्वलमधस्तटपादपानाम् ।
इत्यादि साधु सकलं कमलाकरस्य
किं त्वाविलं जनितमम्बु नवोदकेन ॥ १ ॥ मङ्गलस्य ।

प्रतिविपिनमनिन्द्यस्वादुविस्फारवारि-
प्रविचरदुरुपत्रिव्यूहनिर्वाहभाजः ।
कति न कति तडागाः सन्ति किंत्वस्य हंस-
प्रवर वहति कस्ते मानसस्य प्रतिष्ठाम् ॥ २ ॥ कस्यचित् ।

वारांधारणमध्वनीनविधुरच्छेदाय भृङ्गस्रजां
हर्षायाम्बुजसंचयः सितगरुत्प्रीत्यै मृणालग्रहः ।
का वा तस्य कथार्थितस्य सरसो यत्तीरजन्माप्यसौ
दूरादेव दृशोः श्रमं हरति नः स्निग्धावलोकस्तरुः ॥ ३ ॥
वैद्यगदाधरस्य ।

अमीषामुष्णांशोः किरणनिकराणां परिचया-
त्सरस्तीक्ष्णं माभूत्तव किल निसर्गः शिशिरिमा ।
दुरात्मानो ह्येते कतिपयपयोबिन्दुरसिका-
न्निरस्यन्तः पान्थांस्त्वयि किमपि शोषं विदधति ॥ ४ ॥
उमापतिधरस्य ।

सलीलं हंसानां पिबति निवहो यत्र विमलं
जलं मोहात्तस्मिन्सरसि रुचिरे चातकयुवा ।
स्वभावाद्वर्वाद्धा न पिबति पयस्तस्य शकुनेः
किमेतेनोच्चैस्त्वं भवति लघिमा चापि सरसः ॥ ५ ॥
शाकटीयशबरस्य ।

## २२ शुष्कसरः ।

निःसारितेम्भासि कूर्मीवलमण्डलेन
कोलव्रजैः कवलितासु मृणालिकासु ।

तीरद्रुमे दवहतेद्य सखेध्वनीन
शोकाय केवलमलोकि सरस्त्वयेदम् ॥ १ ॥ वैद्यगदाधरस्य ।

कासारे मदमत्तवारणगणैराकुम्भमग्नं पयः
पीतं यत्प्रभवोरुवीचिवलनैर्व्याप्तं समस्तं जगत् ।
तस्मिन्नेव रवेः प्रचण्डकिरणश्रेणीनिपीताम्भसि
प्राप्ताः पान्थनखंपचाः प्रतिपदं मध्यस्थलीभूमयः ॥ २ ॥
माधवस्य ।

स्थलं पाशैर्व्याप्तं प्रबलपवनैरम्बुजवनं
जलं क्षीणप्रायं विवरशरणं चाण्डजकुलम् ।
इदानीमेतस्मिन्सरसि चिरसेवाप्रणयिनां
विहङ्गानां भावी स खलु पुटपाकव्यतिकरः ॥ ३ ॥ कस्यचित् ।

वातैः शीकरवर्षिभिः श्रुतिसुखैर्हंसावलीनिस्वनै-
रुन्निद्रैः कमलैः पयोभिरमलैर्नीत्वा परां निर्वृतिम् ।
पश्चात्क्षीणधनां वहन्निजतनुं धन्यो मृणालीच्छला-
दर्थिभ्यः प्रददौ नवेन्दुविशदान्यस्थीनि पद्माकरः ॥ ४ ॥
भव्यस्य ।

मदोष्णप्रागल्भ्याद्वनकरिघटा यत्र विमले
ममज्जुर्निःशङ्कं तटनिकट एवोन्नतकराः ।
गते शोषं दैवाद्धरसरसि तत्रैव तरला
वकग्रासत्रासाद्विशति शफरी पङ्कमधुना ॥ ५ ॥
मधुरशीलस्य ।

## २३ पूर्णसरः ।

घनसमयसरः क भृङ्गमालाः सरसि तदा विहगाः क बन्धुवाचः ।
अकरुण सहशोषिणी मृणाली पुनरपि सेयमधस्त एव मूर्ध्नि ॥ १ ॥
विरिञ्चेः ।

तीव्रार्कद्युतिदह्यमानवपुषा दावानलस्योष्मणा
शोषं दूरमुपागतेन पथि [illegible] ।
भ्राम्यद्दीनदृशा तृषातुरतया कौपीरपोपीच्छता
मज्जद्दन्ति पतत्पतत्रि सुकृतैरेतन्मयाप्तं सरः ॥ २ ॥
क्षितीशस्य ।

आस्तामेव सरोवरेण्य भवतो दुग्धोदलब्धामृत-
स्वादस्पर्द्धि सरोजवृन्दखचितं हंसावतंसं पयः ।

स्फारोल्लोलसुशीतशीकरचयासारप्रसिक्तानिल-
स्पर्शैरेव मनोहरैरपगताः संतापशोषक्लमाः ॥ ३ ॥ गोसोकस्य ।

यत्कूपेष्वपि दूरनिह्नुतपयोलेशेषु नीतं मनो-
यत्खातेष्वपि पङ्कदुर्गसलिलस्तोकेषु दृष्टिः कृता ।
स्मेरोद्दण्डितपुण्डरीकमसकृत्कल्लोललीलामयं
त्वामासाद्य तडाग संप्रति स मे शान्तो निदाघज्वरः ॥ ४ ॥
वैद्यस्य ।

भेकैः कोटरशायिभिर्मृतमिव दमान्तर्गतं कच्छपैः
पाठीनैस्तनुपङ्कपीठलुठनाद्यस्मिन्मुहुर्मूर्छितम् ।
तस्मिन्नेव सरस्यकालजलदेनागत्य तच्चेष्टितं
येनाकुम्भनिमग्नवन्यकरिणां यूथैः पयः पीयते ॥ ५ ॥ छित्तपस्य ।

## २४ मीनः ।

पाठीन मुञ्च कुनदं यदिहाम्बु पीत्वा
मिश्रं निरन्तरपतत्तटभूमिपङ्कैः ।
उन्मज्जतस्तव पतिष्यति कोमलायां
गाढं तनौ कुररचञ्चुशरप्रहारः ॥ १ ॥ वसन्तदेवस्य ।

क्व शकुलाशिशो गम्भीराम्भः सरस्तव जन्मभूः
क्व च नवजलक्रीडारम्भादियं तटसंगतिः ।
तदिह विवरे नीत्वात्मानं कुलीरविवर्जिते
विगमय दिनं यावच्चास्ते वकोटकुटुम्बकम् ॥ २ ॥
भास्करदेवस्य ।

विषमविषधरप्रगाढघोरे सरसि सरस्यपि निस्पृहोसि जीवे ।
शफरपरिहरेदमात्मदेहस्थितिमनुचिन्तयतः क्व नास्ति सौख्यम् ॥३॥
कविचक्रवर्तिनः ।

शफर संहर चञ्चलतामिमां
चिरमगाधजलप्रणयी भव ।
इह हि कोमलवञ्जुलजालके
वसति दुष्टवकोटकुटुम्बकम् ॥ ४ ॥ अभिनन्दस्य ।

सरोरत्नादस्मात्सफर तव नीवारतरल-
प्रणालीसंचारव्यसनमशुभं ते कथमभूत् ।
अहो मुग्धेदानीं निजदुरुपचारव्यवसितां
कुवेणीबद्धः सन्ननुभव दशामुत्फलसि किम् ॥ ५ ॥
कस्यचित् ।

## २५ सर्पः ।

छिद्रानुसारनिपुणत्वमिदं त्वदीयं
दृष्ट्वा गतौ कुटिलतां वदने विषं च ।
मन्ये सरीसृप भवानुचितं मनुष्य-
प्राणापहारविषये विधिना नियुक्तः ॥ १ ॥ कस्यचित् ।

एतस्य जाङ्गलिक नार्पय मन्त्रदर्पा-
दास्ये निजाङ्गुलिमयं खलु कोपि सर्पः ।
अत्रैव यस्य विषमेण विषेण दग्धा-
स्ते त्वादृशा निरसवः पतिताः सहस्रम् ॥ २ ॥ नाचोकस्य ।

यद्ग्रीससे शिखिनमग्निभुवः सहेलं
यद्वा विलोकयसि तार्क्ष्यमवज्ञयैव ।
लीढौषधीपरिवृढोसि यदृच्छया त-
द्वन्दामहे हरभुजङ्ग तवैव जन्म ॥ ३ ॥ वैद्यगदाधरस्य ।

अलमभिमुखैर्बद्धैर्भोगैरलं भ्रमिभिर्दृशो-
रलमविरलैर्गर्जोद्गारैरलं विषवृष्टिभिः ।
किमिह भुजगाः कोपावेगैरमीभिरमुद्रितै-
र्ननु भगवतस्तार्क्ष्यस्यैते वयं स्तुतिपाठकाः ॥ ४ ॥ तस्यैव ।

क्षुद्रास्ते भुजगाः शिरांसि नमयत्यादाय येषामिदं
भ्रातर्जाङ्गलिक त्वदाननमिलन्मन्त्रानुविद्धं रजः ।
जीर्णस्त्वेष फणी न यस्य किमपि त्वादृग्गुणीन्द्रव्रजा-
कीर्णक्ष्मातलधावनादपि भजत्यानम्रभावं शिरः ॥ ५ ॥
उमापतिधरस्य ।

## २६ भेकः ।

अपि नदथ निकामं दर्दुराः किं सुवर्ण-
द्युतिभरमुपनीता नूतनैर्वारिपूरैः ।
अयमचिरविनाशी शोचनीयस्तु भावी
स चिरमवटसीम्नि प्राज्य एव क्रमो वः ॥ १ ॥ नाकोकस्य ।

इयत्पृथ्वीपात्रं तदनु च नभोमण्डलमिय-
दियान्पातालाम्भो जलमपि पृथिव्यामियदिति ।
इति ज्ञात्वा कूपे विदितविषयो नायमपरः
परं मुग्धो भेकः प्रबलतररावं प्रकुरुते ॥ २ ॥ जयनन्दिनः ।

किं नाम दर्दुर दुरध्यवसाय सायं
कायं निपीड्य निनदं कुरुषे रुषेव ।

किं तानि केलिरसितानि सितच्छदाना-
माकर्ण्य कर्णमधुराणि न लज्जितोसि ॥ ३ ॥ कस्यचित्।

श्रुत्वा कुम्भभुवो मुनेरिह दुराचारं क्रमप्यद्भुतं
सिन्धोरन्धुकुटुम्बि दर्दुरकुलं हर्षादिदं ध्यायति।
गाम्भीर्याद्यदि ते न बिभ्यति न वा त्रस्यन्ति भेकीशिशो-
रत्रागत्य सुखं वसन्तु तिमयो जातानुकम्पा वयम् ॥ ४ ॥

जलचन्द्रस्य।

भेकेन क्वणता सरोषपरुषं यत्कृष्णसर्पानने
दातुं कर्णचपेटमुज्झितभिया हस्तः समुल्लासितः।
यच्चाधोमुखमक्षिणी विदधता नागेन तूष्णीं स्थितं
तन्मन्ये विषमान्त्रिणो भगवतः कस्यापि लीलायितम् ॥ ५ ॥

तस्यैव।

## २७ पद्मम्।

दर्पोत्सेकभृतामसाधु चरितं प्रायेण लक्ष्मीभृता-
मामूलं गुणसंग्रहात्तु नलिन त्वच्चेष्टितं किं स्तुमः।
यच्छुष्के सरसि प्रयासि त्रिदशां संवासमर्यादया
संपूर्णं कमनीयकोमलदलं भासि प्रवृद्धाङ्कुरम्।

वसन्तदेवस्य।

कासारशोभिनि नवोदयमानमुग्ध-
संवर्तिकानिवहदाहिनि दारुणेपि।
मध्यंदिनोष्णकिरणे प्रतिपन्नसख्य-
स्मेरं सुखं जयति चित्रचरित्रमब्जम् ॥ २ ॥

योगेश्वरस्य।

धिक्कुमोस्य मधुव्रतस्य चरितं दोषातनीं दुर्दशां
दृष्ट्वा यस्तव पद्मषण्डकुमुदैर्धत्ते रहस्ताण्डवम्।
श्लाघ्यस्त्वं पुनरेक एव यदिह प्रातः समभ्यागते
तान्येवोल्लसितानि सैव सविता तच्चैव कोषार्पणम् ॥ ३ ॥

वैद्यगदाधरस्य।

अत्रैव सरसि जातं विकसितमत्रैव निर्भरं नलिनैः।
कालवशागततुहिनैर्विलीनमत्रैव हा कष्टम् ॥ ४ ॥

कस्यचित्।

कान्तिस्ते यदि निर्मला यदि गुणा लक्ष्मीर्यदि स्थायिनी
मागाः पद्म मंद तथापि गलिता ह्येते शरद्वासराः।

संस्पर्शेन तुषारवारिपृषतामालूनमूर्तेः सरो-
मध्येऽत्रैव वराटकेन भवतः स्थेयं पुनः केवलम् ॥ ५ ॥
उमापतिधरस्य ।

## २८ भ्रमरः ।

शाखिनि शाखिनि कुसुमे कुसुमं कुसुमे च मधुकरकुलानि ।
विरलं सन्मधु कुसुमं विरलो रसतत्त्वविन्मधुपः ॥ १ ॥
वारस्य ।

अन्यासु तावदुपमर्दसहासु भृङ्ग
लोलं विनोदय मनः सुमनोलतासु ।
मुग्धामजातरजसं कलिकामकाले
व्यर्थं कदर्थयसि किं नवमालिकायाः ॥ २ ॥
विद्यापतेः ।

मधुकरगणश्चूतं त्यक्त्वा गतो नवमालिकां
पुनरपि गतो रक्ताशोकं कदम्बतरुं ततः ।
तदपि सुचिरं स्थित्वा कुन्दे प्रयाति सरोरुहं
परिचितगुणद्वेषी लोको नवं नवमीहते ॥ ३ ॥ कस्यचित् ।
येनामोदिनि केसरस्य मुकुले पीतं मधु स्वेच्छया
नीता येन निशा शशाङ्कधवला पद्मोदरे शारदी ।
भ्रान्तं येन मदप्रवाहसलिले गण्डस्थले दन्तिनां
सोऽयं भृङ्गयुवा करीरविटपे बध्नाति दृष्टिं कुतः ॥ ४ ॥
कस्यचित् ।

अशोके शोकार्तः किमपि वकुले व्याकुलमना-
निरानन्दः कौन्दे सह च सहकारैर्न रमसे ।
कुसुम्भे विस्रम्भं यदिह भजसे कण्टकशतै-
रसंदिग्धं मुग्धभ्रमर भवितासि क्षतवपुः ॥ ५ ॥ कस्यचित् ।

## २९ स्वर्गभ्रमरः ।

मीलन्तु पङ्कजवनानि दलन्तु वृक्षाः
शुष्यन्तु दानसरितः करिणां कपोले ।
तेमी वयं मधुलिहो भगवान्स येभ्यः
पातुं समर्पयति गण्डतलं गजास्यः ॥ १ ॥ वैद्यगदाधरस्य ।
नन्दनजन्मा मधुपः सुरतरुकुसुमेषु पीतमकरन्दः ।
दैवादवनिमुपेतः कौटजकुसुमे समीहते वृत्तिम् ॥ २ ॥
कस्यचित् ।

छायाशीतलितात्सकाञ्चनशिलात्खेलत्कृतार्थार्थिन-
स्तत्तन्निर्मितचित्रमञ्जरिगृहात्[illegible]रात् ।
घ्रात्वाप्यद्‌भुतसौरभोरुलहरीः कल्पद्रुमान्नैव य-
द्वेगाद्धावति मञ्जु गुञ्जति परं तत्कोयमिन्दिन्दिरः ॥ ३ ॥

वल्लभस्य ।

अनभिलषतः श्रीलीलाब्जे परागविलेपनं
त्रिदशकरिणः पातुं दानप्रवाहमवाञ्छतः ।
त्रिदशसुमनोगन्धाघ्राणं विमुक्तवतः सखे
बत खलु शिवा सन्तुष्टस्य द्विरेफ तव स्थितिः ॥ ४ ॥

मङ्गलस्य ।

निरानन्दः कौन्दे मधुनि विधुरो बालबकुले
रसाले सालम्बो लवमपि लवङ्गे न रमते ।
प्रियङ्गौ नासङ्गं रचयति न चूते विचरति
स्मरंल्लक्ष्मीलीलाकमलमधुपानं मधुकरः ॥ ५ ॥ छित्तपस्य ।

## ३० पङ्कजमधुपः ।

त्वल्लीलातरलेन मत्तकरिणा रुग्णे च मन्नाकरे
प्राणास्ते यदि वल्लभास्तदपि किं निष्पङ्कजा मेदिनी ।
दूरीकृत्य तु पङ्कजं मधुप हे तस्यैव यद्गण्डयो-
र्दानाम्भो निरतोसि तद्वयमहो वक्तुं च लज्जामहे ॥ १ ॥

जलचन्द्रस्य ।

हुताशज्वालाभे स्थितवति रवावस्तशिखरे
पिपासुः किञ्जल्कं प्रविशति सरोजं मधुकरः ।
तदन्तःसंरोधं न गणयति संध्यासमयजं
जनोर्थी नायासं गणयति किलैकान्ततृषितः ॥ २ ॥

कस्यचित् ।

विगलतु नाम मधूकं परिणतिमभ्येतु हन्त सहकारः ।
न मधुदरिद्रो मधुपः शङ्के पङ्केरुहे जयति ॥ ३ ॥ जह्नोः ।

[illegible]सुभगं संगतमभू-
त्प्रसूनैरुन्निद्रैः सह बहुभिरेव प्रतिवनम् ।
उदन्या न क्वापि व्यरमदरविन्दे परममी
पिबन्ति स्वच्छन्दं रसमुदरपूरं मधुलिहः ॥ ४ ॥

शाटोकस्य ।

इह परिमलो यत्र व्यक्तो न तत्र मधुश्रियो
मधु समधिकं यस्मिंस्तस्मिन्न गन्धसमृद्धयः ।

इति मरुवकं निन्दन्कुन्दादपेतकुतूहलः
कमलमधिकं स्मारं स्मारं विषीदति षट्पदः ॥ ५ ॥

उमापतिधरस्य ।

## ३१ चूतभ्रमरः ।

धन्यस्त्वं सहकार संप्रति फलैः काकान् शुकान्पूरय-
न्पूर्वं तु त्वयि मुक्तमञ्जरिभरोऽच्छिद्रे य इन्दिन्दिरः ।
आक्रीडन्ननिशं स नैति फलितं यत्त्वां विकाशैकभुक्
तद्धर्मोऽस्य फलाशया परिचयः कल्पद्रुमेऽप्यस्ति किम् ॥ १ ॥

वल्लणस्य ।

निश्चेतुं मकरन्दबिन्दुजनितानन्दारविन्दाकर
क्रीडानिस्पृहयालुमानसतया मन्दायमानादरः ।
स्फारोद्गच्छदपूर्वमञ्जरिभरप्रादुर्भवत्सौरभं
श्रद्धालुर्न कथं प्रयातु सहसा माकन्दमिन्दिन्दिरः ॥ २ ॥

तस्यैव ।

अयमिह मुग्धो मधुपः परिहृतसहकारमञ्जरीपुञ्जः ।
असरलमरसमसारं शाकोटकविटपमनुसरति ॥ ३ ॥

कस्यचित् ।

स्वादयन्तु चिरं नाम कोकिलाश्चूतकोरकान् ।
तादृक् परिमलं वेत्ति यदि धन्यो मधुव्रतः ॥ ४ ॥

वसुकल्पस्य ।

वसन्ते सन्त्येव प्रतिवनमनिद्रालुसुमनो-
मनोज्ञप्रारम्भा मधुरमधुसंभारसुहृदः ।
परोलक्षावृक्षाः परमिह रसालेषु रसिकः
सलीलं रोलम्बः पिबति मधुसारं सरभसः ॥ ५ ॥

वनमालिनः ।

## ३२ केतकीभ्रमरः ।

त्वां हित्वा मकरन्दमन्दिरममुं फुल्लारविन्दं बला-
च्चुम्बन्नूतनकेतकीं प्रति मुहुर्यत्कण्टकैः कीलितः
उद्भ्रान्तस्य मलीमसस्य मुखरस्योन्मत्तचित्तस्य ते
रेरे चञ्चलचञ्चरीक तदिदं कर्मानुरूपं फलम् ॥ १ ॥

अज्ञोकस्य ।

त्यक्त्वा सरोजमधुपानरसं च रम्यं
यद्धावितोऽसि कुसुमं प्रति केतकीनाम् ।

अस्यैव ते फलमहो अनयस्य भूतं
किं खिद्यसे मधुप कण्टकविद्धपक्षः ॥ २ ॥ कस्यचित् ।
पत्त्राणि कण्टकसहस्रदुरासदानि
वार्तापि नास्ति मधुनो रजसान्धकारम् ।
आमोदमात्ररसिकेन मधुव्रतेन
नालोकितानि तव केतकि दूषणानि ॥ ३ ॥ सरस्वत्याः ।
हित्वा तन्मधुसद्मपद्मविपिनं सौरभ्यमालाहृतः
किं रे भृङ्ग मुधैव धावसि मधुप्रत्याशया केतकीः ।
एताः कण्टककोटिसंकटदलद्द्रोणीपुटोत्पीडितं
गर्भे बिभ्रति धूलिजालकलिलैरापूरितं केशरैः ॥ ४ ॥
नरसिंहस्य ।
आमोदो बहलः शशाङ्ककिरणच्छायो दलानां चयो
मृद्वी केशरसंहतिर्मलयजक्षोदोपमा रेणवः ।
केतक्याः कुसुमस्य साधु सकलं दोषस्त्वयं केवलं
विघ्ना न प्रसरन्ति यन्मधुलिहो द्वारि स्थितैः कण्टकैः ॥ ५ ॥
कस्यचित् ।

## ३३ पर्वतः ।

कैलाश रे पशुपतिस्थितिपात्रमात्र-
संरूढगर्वमिह पर्वत संत्यजाशु ।
दृष्टोसि किन्नहि सलीलसमुत्थितैक-
पौलस्त्यहस्तकमलोपरि पुष्कराभः ॥ १ ॥ दामोदरस्य ।
मुरारातिर्लक्ष्मीं त्रिपुरविजयी शीतकिरणं
करीन्द्रं पौलोमीपतिरपिच लेभे जलनिधेः ।
त्वया किं तल्लब्धं कथय मथितो मन्दरगिरे
शरण्यः शैलानां यदयमदयं रत्ननिलयः ॥ २ ॥
कामदेवस्य ।
दृष्टा न द्विरदावली न चमरीपुच्छानिलः सेवितो
नैवासादि कदापि मौलिसविधे छत्रायमाणः शशी ।
नीताः क्षौणिभुजो न पादपदवीं धिग्दैवमम्भोनिधौ
मग्नस्यैव गिरीन्द्रपुत्र भवतो मैनाक जातं वयः ॥ ३ ॥
वैद्यगदाधरस्य ।
एकस्यायमुदेति मूर्धनि गिरेरन्यस्य चैष क्रमा-
दस्तं याति कलानिधिस्तदनयोरस्तः प्रशस्तोचलः ।

को नामोदयिनं करोति न शिरोमाणिक्यमस्तं पुन-
र्यान्तं यः कुरुते भवानिव स दुष्प्रापोयमुच्चैःशिराः ॥ ४ ॥
पुण्डरीकस्य ।

ध्वान्तास्कन्दितलोकलोचनजगज्जीवातुमुद्यत्वरं
सूरं मूर्ध्नि दधातु पूर्वशिखरी नैवात्र चित्रोदयः ।
प्राप्तास्तं दिवसे गतायुषि परिक्षीणांशुमेतं पुनः
कुर्वन्मौलिगतं करोति चरमश्चित्रं धरित्रीधरः ॥ ५ ॥

## ३४ मलयः ।

किं तेन हेमगिरिणा रजताद्रिणा वा
यत्र स्थिता हि तरवस्तरवस्त एव ।
वन्दामहे मलयमेव यदाश्रयेण
शाकोटनिम्बकुटजा अपि चन्दनानि ॥ १ ॥ कस्यचित् ।
चम्पकतरुणा सार्धं स्पर्धा शाकोटकस्य युक्तैव ।
अस्मिन्मलयमहीभृति सर्वे किल चन्दनंतरवः ॥ २ ॥
मुष्टिकस्य ।

मातङ्गाञ्छतशः पुषाण शतशो व्यालीसुतान्संवृणु
प्रीणीथाः शतशस्तु गण्डदृषदः श्रीखण्डशैलेच्छया ।
आस्वर्गस्थलमामहीतलमथापातालमाविष्कृतं
त्वत्कीर्तिस्तु न चन्दनक्षितिरुहादन्यः समालोक्यते ॥ ३ ॥
भट्टवेतालस्य ।

भ्रातश्चन्दनशैल मुञ्च जडतां विस्तारयन्सौरभं
गच्छन्नेव विलासिभिर्मरुदयं निर्व्याजमालिङ्ग्यताम् ।
तिष्ठन्नेव पटीरकोटरदरीदर्वीकरोत्तम्भित-
स्फारोत्फुल्लफणासहस्रचुलुकग्रासेन निर्वर्त्स्यते ॥ ४ ॥
कस्यचित् ।

इतस्तावन्नेत्रे वलय मलयाद्रे पतिरपा-
मपारस्त्वत्पादप्रणयपरतन्त्रो निवसति ।
अथात्मानं किं न स्मरसि कुलशैलं किमयशः-
पताकाः सर्पौघैः प्रतिशिखरिशाखासु वहसि ॥ ५ ॥ वसु...।

## ३५ शरभः ।

उन्मुक्तक्रमहारि शैलशिखरात्क्रामन्तमन्यो धरः
कोत्र त्वां शरभीकिशोरपरिषद्धौरेय धर्तुं क्षमः ।

तस्मादुद्गमकेलिलङ्घितकलादुर्वीतलादुद्व्रज
त्वद्ध्रासाय स एव कीर्तिकनकज्योत्स्ना ? गिरीणां पतिः ॥ १ ॥
वल्लणस्य ।

यस्यानुद्धुरगन्धवानकणिकातङ्कार्तिनानादरी-
कोणोदञ्चदुरोनिगूहितशिरःपुच्छा हरीणां गणाः ।
दृप्यद्दुर्जयगन्धसिन्धुरजयोत्खातेन का मे स्तुतिः
स्मेरोयं सरभः परं हृदि घृणामायाति जातस्मयः ॥ २ ॥
तस्यैव ।

अपि मृगपतिना करीन्द्रकुम्भस्थलदलनोद्धतपौरुषेण यस्य ।
भयचकितदृशा प्रनष्टमुच्चैः स हि सरभीकुलराजचक्रवर्ती ॥३॥
माधवस्य ।

यः पृथ्वीवलये सुविक्रमकथासीमास्थितिर्लाघव-
क्रीडान्यक्कृतमारुतिर्मृगपतेर्निःसीमदर्पज्वरः ।
तादृक्षादृगुदञ्चदञ्चितचर्यैराश्चर्यकारी दिशा-
मीशानां सरभः कथं स हि भवेदर्वाग्गिरां गोचरः ॥ ४ ॥
मकरन्दस्य ।

नखज्योत्स्नागुच्छस्नपितगजगण्डस्थलभिदां
मृगेन्द्राणां जेतस्तव समरभूमीषु शतशः ।
हते वा नीते वा वत लघुतरां शोच्यपदवीं
शुनीनां नाथेऽस्मिन्सरभ रभसस्यानवसरः ॥ ५ ॥ कस्यचित् ।

## ३६ सिंहः ।

मृगेन्द्रं वा मृगारिं वा हरिं व्याहरतां जनः ।
तस्य द्वयमपि क्रीडा क्रीडादलितदन्तिनः ॥ १ ॥ कस्यचित् ।
किं जातैर्बहुभिःकरोति हरिणी पुत्रैरकार्यक्षमैः
पत्रेणापि वनान्तरे विचलता यैः सार्धमुत्त्रस्यति ।
एकेनापि करीन्द्रकुम्भदलनव्यापारशक्तात्मना
सिंही दीर्घपराक्रमेण बलिना पुत्रेण गर्वायते ॥ २ ॥ भानोः ।
उत्क्रान्तं गिरिकूटलङ्घनसहं ते वज्रसारा नखा-
स्तत्तेजश्च तदूर्जितं स च नगोन्माथी निनादो महान् ।
आलस्यादविमुञ्चता गिरिगुहां सिंहेन निद्रालुना
सर्वं विश्वजयैकसाधनमिदं लब्धं न किंचित्कृतम् ॥ ३ ॥
कस्यचित् ।

विस्रं वपुः परवधप्रवणं च कर्म-
तिर्यक्तयैव विदितः सदसद्विवेकः ।

इत्थं न किंचिदपि चारु मृगाधिपस्य
तेजस्तु तत्किमपि येन जगद्वराकम् ॥ ४ ॥ वसुन्धरस्य ।

असंज्ञाः खल्वेते जलशिखिमरुद्धूमनिचयाः
प्रकृत्या गर्जन्ति त्वयि तु भुवनं निर्मदमदः ।
प्रसीद प्रारम्भाद्विरम विजयेथाः क्रुधमिमां
हरे जीमूतानां ध्वनिरयमुदीर्णो न करिणाम् ॥ ५ ॥
अमरसिंहस्य ।

## ३७ सिंहशावः ।

नाभ्यस्तमाक्रमणमङ्कुरिता न दंष्ट्रा
स्फीतं न वर्ष्म नखरैर्दृढिमा न लब्धः ।
नादस्तथापि मृदुरेव स कोऽपि सिंह-
शावस्य येन विमदाः करिणो भवन्ति ॥ १ ॥
नाकोकस्य ।

संप्राप्य केशरिकिशोरमरण्यमेत-
दित्युद्भयं भ्रमति यूथमनेकपानाम् ।
एषोऽप्यजातसटमंसतटं विधूय
तन्मांसगृध्नुरसटोऽपि नखान्नियुङ्क्ते ॥ २ ॥ मङ्गलस्य ।

व्याधूयांसावनुदितसटौ भावमञ्जु ध्वनन्तः
पाणी नातिस्फुटकररुहौ ग्राविण कण्डूयमानाः ।
चक्षुः कोपात्कुटिलमरुणं बिभ्रतः सिंहशावा-
दृष्ट्या चण्डध्वनितजलदं व्योम निर्मालयन्ति ॥ ३ ॥
तस्यैव ।

अनुदितसटावसौ नातिस्फुटाः करजांकुरा-
दशनमुकुलोद्भेदस्तोको मुखे मृदु गर्जितम् ।
मृगपतिशिशोर्नास्त्यद्यापि क्रिया स्वकुलोचिता
मदकृतमहो गन्धस्यान्ध्यं व्यपोहति दन्तिनाम् ॥ ४ ॥
तस्यैव ।

हंहो सिंहकिशोरक त्यजसि चेत्कोपं वदामस्त्वया
हत्वैवं करिणां सहस्रमखिलं किं लब्धमायुष्मता ।
इत्थं कर्तुमहं समर्थ इति चेद्धिङ्मूर्ख किं सर्वतो
नालं प्लावयितुं जगज्जलनिधिर्यद्धैर्यमालम्बते ॥ ५ ॥
वीर्यमित्रस्य ।

## ३८ जरत्सिंहः ।

शक्तिर्नाक्रमणेऽस्य दन्तनखरं तन्मूलमांसावलि-
ग्लानं लोचनमन्धमुद्गतबलिन्यासाङ्कशीर्णं वपुः ।
तद्भोः क्रीडत कुञ्जराधिपतयः स्वच्छन्दमन्तर्मृगाः
कम्पं मुञ्चत केशरी विधिवशात्प्राप्तो जरादुर्दशाम् ॥ १ ॥

नाकोकस्य ।

नभसि चरतामम्भोदानां निशम्य रवं मना-
गनिभृतगुरुध्वानैर्यस्य प्रभिन्नमभून्नभः ।
बत परिणतः कालः कोऽयं करेणुघटाहत-
क्षितिरुहमटत्कारान्पार्श्वे शृणोति स केशरी ॥ २ ॥

वैद्यस्य ।

वदनमदशनं श्लथा नखानां परिणतिरस्थिरघर्घरो निनादः ।
इति वहति दशापदं मृगेन्द्रे बत कलभैरुपभुज्यतेऽटवीयम् ॥३॥

तस्यैव ।

यन्निद्रालसकण्ठनादकलिकां श्रुत्वैव दूरादितः
प्रत्येकं स हि मूर्छया निपतितो गन्धद्विपानां गणः ।
तस्यैवाद्य मृगाधिपस्य पुरतः प्रोन्मुक्तचण्डस्वना
निष्कम्पं विचरन्ति दर्दुरवसापानोन्मदाः फेरवाः ॥ ४ ॥

गोसोकस्य ।

आस्तां तावदसीमपौरुषजुषः संमानितात्यद्भुत-
प्रारम्भाभ्यधिकक्रियस्य स खलु प्राच्यः प्रचारो हरेः ।
जीर्णस्यापि च विन्ध्यकन्दरदरीद्वारावताराद्गमै-
रङ्गैरङ्गभृतो दलन्ति दरतो गन्धेन गन्धद्विपाः ॥ ५ ॥

वल्लणस्य ।

## ३९ गजः ।

अकस्मादुन्मत्त प्रहरसि किमध्वक्षितिरुहं
ह्रदं दन्ताघातैर्विदलसि किमुत्फुल्लसलिलम् ।
तदा जानीमस्ते करिवर मदोद्गारमसमं
सटां सुप्तस्यापि स्पृशसि यदि पञ्चाननशिशोः ॥ १ ॥

नारायणस्य ।

तापो नापगतस्तृषापि न कृशा धौता न धूली तनो-
र्न स्वच्छन्दमकारि कन्दकवलः का नाम केली कथा ।
दूरान्मुक्तकरेण हन्त करिणा स्पृष्टा न वा पद्मिनी

प्रारब्धो मधुपैरकारणमहो झंकारकोलाहलः ॥ २ ॥

आचार्य—गोपीकस्य ।

एणश्रेणिः शशकनिकरः शल्लकीनां कदम्बं
कोकव्यूहः स्पृशति सुखितां यत्र तत्रापि कुञ्जे ।
को नामास्मिन्बत हतवने पादपस्तादृगुच्चै-
र्यस्यच्छायामयमधिवसत्युष्णरुग्णो गजेन्द्रः ॥ ३ ॥

कस्यचित् ।

मध्ये विन्ध्यवनं सलीलवसतिः स्वच्छन्दसत्पद्मिनी-
कन्दैर्यस्य सदाशितंभवविधिः क्रीडाकरिण्यः शतम् ।
तल्पं शैवलिनीदलानि मिलितो दैवान्मरूणां तटे
जिह्मस्ताम्यति संस्मरन्ननुदिनं विन्ध्यं स गन्धद्विपः ॥ ४ ॥

अमरसिंहस्य ।

जिघृक्षुर्वा मुक्तां दशनमथवा हन्ति करिणां
स चाण्डालव्याधो गणयति न लाभापचयिताम् ।
पुराणः प्रत्यग्रं फलमिह हि विक्रीय कतिचित्
स नागेन्द्रो जीवन्कति न कति लक्षाणि लभते ॥ ५ ॥

त्रिपुरारिपालस्य ।

## ४० वन्यगजः ।

इह व्याधव्यूहः पटुघटितयन्त्रप्रहरणो
मृगेन्द्राणां वल्गत्प्रखरनखराणां कुलमिह ।
इहालङ्घ्यः शैलो वहलतरपङ्का सरिदिह
प्रदीप्तोग्निर्मध्येवनमहह कष्टं करिपतेः ॥ १ ॥

कस्यचित् ।

करिन्मा गर्जोच्चैर्मृगपतिरिहास्तेस्य निकटे
न दृष्टस्त्वं दैवादपसर सुदूरं द्रुतमितः ।
न किं पश्यस्यग्रे खरनखरनिर्दारितकरि-
प्रकीर्णास्थिश्रेणीधवलितमिदं शैलकटकम् ॥ २ ॥

संग्रामचन्द्रस्य ।

एतस्मिन्घनवद्धसंपदि वनोत्सङ्गे नवाप्तोष्मभिः
स्वच्छन्दं गमितः सुखेन कतिभिः कालो न दन्तावलैः ।
धिग्जातोसि तदात्र दग्धसमये दन्तिन्यदा नोदकं
नो वृक्षो न तृणस्तेन केवलमयं दावानलः क्रीडति ॥ ३ ॥

वैद्यस्य ।

हे नागेन्द्र पुलिन्दपत्तनमितः पार्श्वे सुदूरे गिरि-
र्वल्मीकस्य न कस्यचित्तव पदारोपान्न रूपान्तरम्।
वन्यामग्नकरेणुकारुणिकतामास्थाय मास्थाः स्थली
र्मा लुम्पन्ति पुरा पुराटविनटत्पूरोच्चया वीचयः॥ ४॥

गाङ्गोकस्य।

मदसलिलकृतान्ध्यैः षट्पदैर्जातलील-
व्रज गज वनमन्यच्चण्ड शाखिप्रकाण्डम्।
इह वहलपलाशोद्दामरम्ये तवासौ
न खलु कदलषण्डे गण्डकण्डूविनोदः॥ ५॥ गुरोः।

## ४१ मत्तगजः।

गले पाशस्तीव्रश्चरणयुगयुग्मे च निगडो
दृढः कक्षाबन्धः शिरसि सृणिघातः खरतरः।
नरः स्कन्धारूढो बत रमणयोग्येपि समये
न जानीमो मूढ द्विरदवर कस्मात्तव मदः॥ १॥

नङ्गदत्तस्य।

अयं दूरभ्रान्तः पटुतरपिपासाकुलमनाः
कपोले ते मत्तद्विप निपतितः षट्पदयुवा।
त्वमप्येतां पीनश्रवणदलदोलाव्यसनितां
विमुञ्च स्वाच्छन्द्यादपनयतु तावत्तृषमिमाम्॥ २॥ सुरभेः।

नीवारप्रसवाग्रमुष्टिकवलैर्यो वर्धितः शैशवे
पीतं येन सरोजिनीदलपुटे होमावशिष्टं पयः।
तं दानावसरे तु मत्तमधुप व्यालोलगण्डं गजं
सानन्दं सभयं च पश्यति मुहुर्द्वारे स्थितस्तापसः॥ ३॥

मनोकस्य।

दानक्लिन्नकरस्य कुञ्जरपतेः स्वच्छन्दसंवर्धनैः
क्षीयन्ते यदि कोटयोप्यपचयः किं तेन भूमीभुजाम्।
येनैकेन रणाङ्गणप्रणयिना निर्जित्य शत्रोः परं
दीयन्ते निजनायकाय वसुधाचक्राधिपत्यश्रियः॥ ४॥

वसुदेवसेनस्य।

ग्राम्यामग्रे करेणुं स्वयमुपनयता येन बद्धोसि पाशै-
र्येन क्षुण्णं शिरस्ते सृणिभिरमसृणैर्येन वाह्यः कृतोसि।
तत्पादाङ्गुष्ठसंज्ञापरवशहृदयो द्रष्टुकामानमन्तू-
अन्तूनभ्येषि हन्तुं त्वमसि गजपते सत्यमेको मदान्धः॥ ५॥

उमापतिधरस्य।

## ४२ पङ्कपतितगजः ।

दूरादेव करञ्जसर्जसरलप्रायान्विलोक्य द्रुमा-
न्क्षुत्क्षामो विकलः करी क्षितिभृतः पादान्तिके प्रस्थितः ।
मोहादागत एव निर्भरदरीदुर्गे निरालम्बनो-
निर्मग्नः किमयं करोति भगवान्यस्य प्रतीपो विधिः ॥ १ ॥

शंकरदेवस्य ।

यल्लीलामदमेदुरा मधुलिहो यद्दन्तकान्तित्विषः
शीतांशोः श्रियमावहन्ति गमनाद्भ्रश्यन्ति यस्याचलाः ।
जानीमः किमकाण्डचाण्डमगुणान्दैवस्य येन क्षणा-
न्मग्नः कासरकेलिपङ्किलतटोपान्ते स दन्तावलः ॥ २ ॥

शालूकस्य ।

रटितमनुचितं ते कः करास्फालकालः
प्रचलितमतिमात्रं गात्रनिर्मज्जनाय ।
कथमपि पतितस्त्वं दुस्तरे पङ्कराशौ
कुरु करिवर धैर्यं दुस्तरा दैवरीतिः ॥ ३ ॥

पाम्पाकस्य ।

करेणुर्नाहूता निजकवलभागप्रणयिनी
न चामृष्टः स्नेहात्करकिसलयेनापि कलभः ।
स येनासौ दर्पात्प्रतिगजजिगीषारभसतः
क्रुधा धावन्मग्नो ह्रदपयसि कष्टं करिपतिः ॥ ४ ॥

त्रिपुरारिपालस्य ।

न पश्यत्येवाशाः श्रयति न विषादं च मनसा
समुद्धारे शक्तं भुवि कमपि नान्यं गणयति ।
स जम्बाले मग्नो निजगरिमगम्भीररभस-
स्फुरद्रोमोद्भेदः श्लथयति करी जीवनरसम् ॥ ५ ॥

तस्यैव ।

## ४३ बद्धगजः ।

रे रेवातटकेलिलम्पटवपुः शोकं वृथा मा कृथाः
कुम्भिन्कुम्भसमाहृतं पिब पयो बन्ध्यैव विन्ध्यस्मृतिः ।
ताभिः काननकुञ्जरीभिरभितो दैवेन दूरीकृतो
वेल्लत्पल्लवशल्लकीवनलताकुञ्जेषु ते विभ्रमः ॥ १ ॥

कङ्कणस्य ।

घासग्रासं गृहाण त्यज करिकलभ प्रेमबन्धं करिण्यां
पश्य बाशग्रन्थिव्रणानामविरतमधुना देहि पङ्कानुलेपम् ।

दूरीभूतास्तवैते शबरवरवधूविभ्रमोद्भ्रान्तदृष्टा-
रेवातीरोपकण्ठच्युतकुसुमरजोधूसरा विन्ध्यपादाः ॥ २ ॥

भर्तृमेण्ठस्य ।

त्यक्तो विन्ध्यगिरिः पिता भगवती मातेव रेवा नदी
ते ते स्नेहनिबन्धबन्धुरधियस्तुल्योदया दन्तिनः ।
त्वल्लोभान्ननु हस्तिनि स्वयमिदं बन्धाय दत्तं वपु-
स्त्वं दूरे ध्रियसे लुठन्ति च शिरःपीठे कठोरांकुशाः ॥ ३ ॥

तस्यैव ।

नो मन्ये दृढबन्धनक्षतमिदं नैवाङ्कुशोद्घाटनं
स्कन्धारोहणताडनात्परिभवं नैवान्यदेशागमम् ।
चिन्तां ये जनयन्ति चेतसि परं स्मृत्वा स्वयूथं वने
सिंहत्रासितभीतभीरुकलभा यास्यन्ति कस्याश्रयम् ॥ ४ ॥

गम्पाकस्य ।

अपि क्षुद्रो माभून्मतिमहिमगर्वो मनसि वः
करी यातो बन्धं यदिह विनयत्रस्तविजयी ।
अयं क्रोधाध्मातस्त्यजति विनयं चेन्मदवशा-
त्ततः स्कन्धावारं न किमखिलमेवाकुलमति ॥ ५ ॥

त्रिपुरारिपालस्य ।

## ४४ मृगः ।

शान्तेपि स्वयमेव दावशिखिनि क्रूरं किराताधिपे
चापं संकलयत्यपि श्लथयति व्याधे च तां वागुराम् ।
सारङ्गस्य न पश्यतः सहचरीमुद्भिन्नबाष्पाम्भसो-
र्निर्दग्धं वपुराहतानि परितो मर्माणि रुग्णा गतिः ॥ १ ॥

जलचन्द्रस्य ।

नादत्से हरिताङ्कुरान्कचिदपि स्थैर्यं न यद्गाहसे
यत्पर्याकुललोचनोसि करुणं कूजन्दिशः पश्यसि ।
दैवेनान्तरितप्रियोसि हरिण क्षीणोसि यत्प्रत्यहं
प्रत्यद्रि प्रतिकाननं प्रतिनदि प्रत्यूषरं धावसि ॥ २ ॥

केशटस्य ।

वन्यैः प्राणिति काननेषु हरिणस्तद्गात्रवैरी निजः
क्रूरोरण्यपतिस्तदत्र शरणं शान्तोस्त्यदूरे मुनिः ।
इत्यस्मिन्नुपसेदिवानयमसावस्यैव दुर्दैवतो
माभैषीरिति भाषणेप्यकरुणो जातोऽध वाचंयमः ॥ ३ ॥

रत्नमालीय पुण्ड्रोकस्य ।

नासन्नेपि पदानि शष्पविपिने क्षामे दृशौ न क्षिप-
त्यच्छाच्छेषु च निर्झरेषु रसनानालीमुदन्यातुरः ।
न स्वस्थो बत कौतुकादपि सुहृद्गोष्ठीषु तिष्ठासति
ध्यायन्मेकलकन्यकावनमविच्छिन्नाश्रुवेगो मृगः ॥ ४ ॥

पीताम्बरस्य ।

दुर्गारण्यदरीषु भूधरघनच्छाये शयालुस्तृणा-
न्यास्वाद्योदरपूरमच्छसुलभैरम्भोभिराप्यायितः ।
एष प्रेङ्खदपाङ्गभङ्गिषु सहाधीती कुरङ्गीदृशां
क्रूरव्याधकुलेषु हन्त पिशितैः स्वैरेव वैरी मृगः ॥ ५ ॥

धर्मयोगेश्वरस्य ।

## ४५ व्याधोपहतमृगः ।

त्यक्तं जन्मवनं तृणाङ्कुरवती मातेव मुक्ता स्थली
विश्रामस्थितिहेतवो न गणिता बन्धूपमाः पादपाः ।
बालापत्यवियोगकातरमुखी त्यक्ताध्वमार्गे मृगी
मृग्यन्तः पदवीं तथाप्यकरुणा व्याधा न मुञ्चन्ति माम् ॥ १ ॥

धर्मपालस्य ।

छित्त्वा पाशमपास्य कूटरचनां भित्त्वा बलाद्वागुरां
पर्यन्ताग्निकलापजालकुटिलान्निर्गत्य दूरं वनात् ।
व्याधानां शरगोचरादतिजवेनोत्प्लुत्य गच्छन्मृगः
कूपान्तःपतितः करोतु विगुणे किं वा विधौ पौरुषम् ॥ २ ॥

कस्यचित् ।

प्रियायां स्वैरायामतिकठिनगर्भालसतया
किराते चाकर्णं धृतधनुषि धावत्यनुपदम् ।
प्रियाप्रेमप्राणप्रतिभयवशाकूतविकलो
मृगः पश्चादालोकयति च मुहुर्याति च मुहुः ॥ ३ ॥

कालिदासस्य ।

भुवो वन्या मग्नाः शिशुरपि च(?)तेकरः
कुरङ्गो हन्तारः सविध इति संतापतरलः ।
अये नौकारूढ प्रतिकृतिमतिस्त्वन्मुखदृशो
मुहुः पश्यन्मज्जत्यकरुण तथापि प्रहरसि ॥ ४ ॥

तिलचन्द्रस्य(?) ।

यद्येतद्विपिनं विपन्नमहह क्षुण्णं किमेतत्सर-
स्तच्चेत्किं पुनरग्रतो ननु धनुर्ध्वानः पटीयानयम् ।

अद्य श्वो विजनिष्यमाणगृहिणीसंचारचिन्ताचम-
त्कारक्लान्तमना मनागवनतग्रीवो मृगस्ताम्यति ॥ ५ ॥
तस्यैव ।

४६ दावोपहतमृगः ।

घर्मक्लान्तिभरालसां घनमरुद्व्यालोलदावानल-
ज्वालाजालसमाकुलां सहचरीमालोक्य लोलेक्षणाम् ।
वेगाद्दूरविनिर्गतोपि सपदि व्यावृत्त्य धावन्मृगो
गच्छन्तीं स्मृतिशेषतामुपगतः स्नेहस्य किं दुष्करम् ॥ १ ॥
सुरभेः ।

चिरयति हरिणी हरन्ति जीवं शवरशरास्तरुवह्नयः स्फुरन्ति ।
इति बत हरिणः क्षणं वनान्तर्विशति विषीदति मूर्छति प्रयाति ॥२॥
जलचन्द्रस्य ।

मृग विसृज विषादं दग्धवल्मीककूट-
स्फुटनकटुविगन्धो नश्वरोयं हुताशः ।
जलधरजलधारोत्कण्ठसारङ्गतृष्णा-
च्छिदुरमुदिग्मालामेदुरा द्यौरिदानीम् ॥ ३ ॥
धर्मयोगेश्वरस्य ।

इतो दावज्वाला स्थलभुव इतो जालजटिला
इतो व्याधो धावत्यनुपदमयं चक्रितधनुः ।
इतोप्यग्रे तिष्ठत्ययमजगरो विस्तृतमुखः
क्व यायात्किं कुर्यान्मृगशिशुरयं दैववशगः ॥ ४ ॥
कस्यचित् ।

व्योमार्धे ज्वलितो रविः कवलितं दावानलैः काननं
धूम्याभिर्न दिशः स्फुरन्ति परितः पन्थाः शिलादन्तुरः ।
इत्थं शोणितसिक्तसृक्कणि यथाप्राणं मृगे धावति
व्याधेनापि शरासने करुणया नारोपिताः पत्रिणः ॥ ५ ॥
उमापतिधरस्य ।

४७ मृगी ।

अनुगृहाण शिशूनतिलङ्घिता
शबरवारिविहारवनस्थली ।
विसृज कातरतामिदमग्रतो
हरिणि कारुणिकस्य तपोवनम् ॥ १ ॥ कस्यचित् ।
हरिणि भिल्लसमाजसमाकुलं
व्रज सरोथ किमत्र विलम्बसे ।

विशति पातुमपो न तपोवना-
दिदमभक्ष्यपला कपिलापि गौः ॥ २ ॥ चपलदेवस्य ।

हरिणि सानुनि मानुषवर्जिते
चर विसृज्य न निर्भरमर्भकान् ।
तव तरक्षुकुलक्षुभितोदरे
वसुमतीभृति निर्वृतिरेव का ॥ ३ ॥ तस्यैव ।

इह निभृतनिपातमूकपादं वलयितकार्मुकवल्लयः किराताः ।
भवदलसविलोकनानभिज्ञा मृगगृहिणि प्रहरन्ति गच्छ दूरम् ॥४॥
मान्धोकस्य ।

आदाय मांसमखिलं स्तनवर्जमङ्ग
मां मुञ्च वागुरिक याहि कुरु प्रसादम् ।
अद्यापि शष्पकवलग्रहणानभिज्ञा-
मद्वर्त्मचञ्चलदृशः शिशवो मदीयाः ॥ ५ ॥ छित्तपस्य ।

## ४८ नानापशवः ।

अम्भो भजस्व चिरमस्य यथाभिलाष-
मेतन्न ताण्डवय सैरिभ काननं च ।
दुश्चेष्टितेन यदनेन भृशं तवैष
ध्वस्ताशयो भवति निष्कलुषस्तडागः ॥ १ ॥
वैद्यगदाधरस्य ।

नामीभिः प्रसवैः स्वयं निपतितैर्भूमौ विधत्ते धृतिं
नारोढुं परिपाकमेदुरफलाः शक्नोति शाखाशिखाः ।
अप्रज्ञातनिजप्रभावकुपितः कोकूयमानो रुषा-
ङ्कुर्वानर-सूनुरेष लवलीक्षोणीरुहं कर्षति ॥ २ ॥
उमापतिधरस्य ।

यश्चाण्डालगृहाङ्गणेषु वसतिः कौलेयकानां कुले
जन्म स्वोदरपूरणं च विघसैर्न स्पर्शयोग्यं वपुः ।
तन्मृष्टं सकलं त्वयाद्य शुनक क्षोणीपतेराज्ञया
यत्त्वं काञ्चनशृङ्खलावलयितः प्रासादमारोहसि ॥ ३ ॥
माधवस्य ।

पूतः श्रौतपरिष्क्रियाभिरवहीभावाय ? यो दीक्षितः
श्लाघ्या यस्य गयाशिरःसहचरी तुल्योऽश्वमेधेन यः ।
नासावेधनतश्चिरेण कलितश्चक्रत्रिशूलाङ्कितो-
धिक्कर्माणि तुरुष्कवेश्मनि सुराकाण्डालवाही वृषः ॥ ४ ॥
साञोकस्य ।

उच्छ्रायो जनभीतिहेतुरधिकं वैकृत्यमुद्ग्रीवता
सर्वत्र प्रतिपर्व विक्रमभवः क्रूरो मरुर्जन्मभूः ।
यस्योच्चैः कटुकण्टकप्रणयिता धिक्कष्टमुष्ट्रे पशौ
तस्मिन्राजपरिग्रहः स च महाशब्दद्वयीभाजनम् ॥ ५ ॥

गोविन्दस्य ।

## ४९ तरुः ।

शाखानामुपरि स्थितैः शकुनिभिर्दूरादगृहीता दिशः
सद्योभुक्तफलैर्विवृत्य कपिभिः पश्यद्भिरेव स्थितम् ।
छायापास्तपरिश्रमैश्च पथिकैरात्मा परं रक्षितो-
न क्षुद्रैर्निपतन्निशातपरशावात्मार्पितः शाखिनि ॥ १ ॥

अभिनन्दनस्य ।

मूर्धारोपणसत्कृतैर्दिशि दिशि क्षुद्रैर्विहङ्गैर्द्रुतं
छायादानानिराकृतश्रमभरैर्नष्टं मृगैर्भीरुभिः ।
हा कष्टं फललोलुपैरपसृतं शाखामृगैश्चञ्चलै-
रेकेनैव दवानलव्यतिकरः सोढः परं शाखिना ॥ २ ॥

कस्यचित् ।

सुच्छायं फलभारनम्रशिखरं सर्वार्तिशान्तिप्रदं
त्वामालोक्य सुभूरुह खलु वयं मार्गं विहायागताः ।
अन्तस्ते यदि कोटरोदरचलद्व्यालावलीविस्फुर-
द्वक्त्रोद्वान्तविषानलार्ति भयदं धन्यस्तदानीं भवान् ॥ ३ ॥

विद्यायाः ।

व्याकुर्महे बहु किमस्य तरोः सदैव
नैसर्गिको यदुपकाररसः परेषु ।
उन्मूलितोपि मरुता बत वारिदुर्गे
मार्गे यदन्यजनसंक्रमतामुपेतः ॥ ४ ॥ कस्यचित् ।

सोढप्रौढहिमक्लमानि शनकैः पत्राण्यघः कुर्वते
संभाव्यच्छदवाञ्छयैव तरवः केचित्कृतघ्नव्रताः ।
नामन्यन्त तदातनीमपि निजच्छायाक्षितिं तैः पुन-
स्तेषामेव तले कृतघ्नचरितैः शुष्यद्भिरप्यास्यते ॥ ५ ॥

अचलसिंहस्य ।

## ५० कल्पतरुः ।

सर्वार्थिनामभिमतानि फलन्नपि त्वं
कल्पावनीरुह न मानवतामुपास्यः ।

यस्मात्त्वया न विहितो विदुषां विशेष-
स्तेषामकारि विफलः सकलप्रयासः ॥ १ ॥

नाकोकस्य ।

बालवामनवृद्धानां नत्वा यो न फलप्रदः ।
तास्मिन्कल्पतरौ स्तब्धे लब्धेनापि फलेन किम् ॥ २ ॥

राजकुजदेवस्य ।

पत्राणि प्रथमं द्रुतानि विकुलैरुत्खातमूलः क्रमा-
त्कीटैः कल्पमहीरुहः स पतितो भग्नाः शतं वल्लयः ।
एकेभ्योपि पुनः प्ररोहति भृशं तस्याङ्कुरग्रामणीः
पूर्वाशाधिपतिः प्रसीदति स चेद्देवो दयावान्हरिः ॥ ३ ॥

बलभद्रस्य ।

निष्पन्नाः कति नाम नामरपुरोपान्तेषु भूमीरुहः
श्लाघ्यस्तत्र स एव कल्पविटपी यत्रासतेमी गुणाः ।
संकल्पाः फलदोहदानि फलितं रत्नानि वृत्तिर्जग-
त्क्लेशच्छेदनिदानमुन्नतिरनुल्लङ्घ्या यशो दुर्जयम् ॥ ४ ॥

शरणस्य ।

स्वर्णैः स्कन्धपरिग्रहो मरकतैरुन्मीलिताः पल्लवाः
मुक्ताभिस्तबकश्रियो मधुलिहां वृन्दानि नीलोपलैः ।
संकल्पानुविधायि यस्य फलितं कस्तस्य धत्ते तुलां
धिग्जातिं द्रुमसंकथासु यदयं कल्पद्रुमोपि द्रुमः ॥ ५ ॥

गदाधरनाथस्य ।

## ५१ चन्दनः ।

श्रमच्छित्त्यै छायां भज पथिक हे चन्दनतरो-
रिह व्यालव्रातः पुनरिति भयं मा खलु कृथाः ।
इदानीमेतास्मिन्कृतवसतयः सन्ति शिखिनः
स्वनैरेषां रम्यैरपि हि फणिनः काप्यपसृताः ॥ १ ॥

अचलसिंहस्य ।

आमोदैस्ते दिशि दिशि गतैर्दूरमाकृष्यमाणाः
साक्षाल्लक्ष्मीं बत मलयज द्रष्टुमभ्यागताः स्मः ।
पश्यामः किं सुभग भवतः क्रीडति क्रोड एव
व्याडस्तुभ्यं भवतु कुशलं मुञ्च नः साधयामः ॥ २ ॥

तस्यैव ।

क्षिप्तश्चेन्मलयाचलेन्द्र भवतः पादोपजीवी निज-
स्तैरुत्पाट्य निकुञ्जनिर्झरपयःपूरैः पटीरद्रुमः ।

तन्निर्यातु जहातु पन्नगकुलं तापं निहन्तु श्रियं
धत्तां विन्दतु वन्द्यतां त्रिजगतां त्वत्कीर्तिमुन्मुद्रयन् ॥ ३ ॥

साञ्जनन्दिनः

ककुभि ककुभि भ्रामं भ्रामं विलोक्य विलोकितं
मलयजसमो दृष्टोऽस्माभिर्न कोऽपि महीरुहः ।
उपचितरसो दाहच्छेदैः शिलातलघर्षणै-
रधिकमधिकं यत्सौरभ्यं तनोति मनोहरम् ॥ ४ ॥

भामहस्य ।

क्व मलयजतटी जन्मस्थानं क्व ते च वनेचराः
क्व खलु परशुच्छेदः क्वासौ दिगन्तरसंगतिः ।
क्व च खरशिलापट्टे घृष्टिः क्व पङ्कसरूपता
मलयज सखे मागाः खेदं गुणास्तव वैरिणः ॥ ५ ॥

मलयजस्य ।

५२ अश्वत्थः ।

छायां यस्य निषेव्य पिप्पलतरोराकृष्य शाखाः शतं
भुक्तं प्रागिति लज्जया गजपते किं नात्र विश्रम्यते ।
दैवेनेदृशयोग एव घटितो यत्त्वादृशां कोटिभि-
स्तादृक्षादृगयं कुतः पुनरभूदेतादृशः पल्लवैः ॥ १ ॥

ईश्वरभद्रस्य ।

सत्यं पिप्पल पादपोत्तम घनच्छायोन्नतेन त्वया
सन्मार्गोऽयमलंकृतः किमपरं त्वं मूर्तिभेदो हरेः ।
किं चान्यत्फलभोगकण्ठमुखरास्त्वामाश्रिताः पत्रिणो
यत्पुंस्कोलिककूजितं विदधते तन्नानुरूपं परम् ॥ २ ॥

शालिकनाथस्य ।

नोन्मीलन्तु नितम्बिनीकरतलस्पर्धाभृतः पल्लवाः
प्रत्युद्यान्तु न वेणनाभिमधुरा मोदाः प्रसूनश्रियः ।
नाभूवन्फलसंपदो मधुरसप्रस्यन्दभाजस्तथा-
प्यश्वत्थस्य गतः सुखेन जगतां वन्द्यस्य जन्मग्रहः ॥ ३ ॥

उमापतिधरस्य ।

साक्षान्नैष करोति कामपि मुदं नाहत्यहन्त्यापदो
न प्रीणाति मनीषिणां श्रवणमप्याश्वासनासूक्तिभिः ।
तस्याम्भोधिसुतापतेर्भगवतोऽधिष्ठानमात्रादसौ
दुःस्वप्नान्विनिवेदितानपहरत्यश्वत्थभूमीरुहः ॥ ४ ॥ तस्यैव ।

पत्राणि त्रुटितानि कीटपटलैरामूलमुन्मूलिताः

शाखा वन्यमतङ्गजैर्न करभैरास्वाद्य मुक्तास्त्वचः ।
स्थाणुः केवलमस्ति पिप्पलतरोस्तत्रापि शीतातुरै-
र्ग्रामीणैः परितः कुठारपतनारम्भः परामृश्यते ॥ ५ ॥

तस्यैव ।

## ५३ चूतः ।

तैस्तैर्जन्मप्रभृतिविदितैर्दोहदैः प्राक् प्रयत्ना-
त्सिक्त्वा सिक्त्वा कथमपि घटीयन्त्रमुक्तैः पयोभिः ।
नीत्वा चूतं फलसमुदयावाप्तियोग्यामवस्थां
तत्र स्नेहं त्यजसि किमिवोद्यानपाल क्षणेन ॥ १ ॥

कस्यचित् ।

दग्धाः केपि दवानलेन कतिचिद्वात्यारयान्दोलनै-
र्व्यापन्नाः कुलिशाभिघातरुजया केचिद्विसृष्टासवः ।
एकः क्लान्तजनाश्रयो विजयसे चूत त्वमुर्वीरुहां
धिग्दैवं भवतोपि कीटपटलैरन्तःप्रवेशः कृतः ॥ २ ॥

वैद्यगदाधरस्य ।

हे चूतद्रुम किं मुधैव मधुपान्प्रीणासि धिक्कोकिला-
ञ्जल्पन्तो मधुराणि नित्यमलिना नैते धिरस्थायिनः ।
तानुल्लासय पल्लवाननुदिनं यैर्गृहितामुन्नतिं
बिभ्राणः प्रतिपर्व निर्भरफलैरुत्तुङ्गतां यास्यति ॥ ३ ॥

वैद्यत्रिविक्रमस्य ।

यो दृष्टः स्फुटदस्थिसंपुटमुखान्निर्यत्प्रबलाङ्कुरो-
लब्धः स द्विदलादिकक्रमवशादारूढशाखाशतः ।
स्निग्धं पल्लवितो घनं मुकुलितः स्फारच्छदं पुष्पितः
सोत्कर्षं फलितो भृशं च विनतः कोप्येष चूतद्रुमः ॥ ४ ॥

कस्य चित् ।

सुगन्धिः कोपि स्यात्कुसुमसमये कोपि विटपी
शलाटौ सामोदः फलपरिणतौ कोपि सुरभिः ।
प्रसूनप्रारम्भात्प्रभृति फलपाकावधि पुन-
र्जगत्येकत्रैव स्फुरति सहकारे परिमलः ॥ ५ ॥

उमापतिधरस्य ।

## ५४ अशोकः ।

छायातिसान्द्रशिशिरा नवपल्लवानि
स्निग्धानि मुग्धसुरभिः स्तवकप्रबन्धः ।

स्थित्वा फलानि सदृशानि विधेहि मा वा
दृष्ट्वैव ते मुखमशोक वयं विशोकाः ॥ १ ॥ नाकोकस्य ।

सन्तु स्वादुफलाः शतं परिमलश्लाघ्यप्रसूनावली-
संबाधाश्च शतं वसन्तसमये वैशेषिकाः शाखिनः ।
उत्फुल्लस्तबकस्रगुज्ज्वलनवप्रोत्खेलवल्लिर्यथा
कङ्केल्लिः श्रियमस्य पुष्यति तथा कः प्रेक्षणीयोपरः ॥ २ ॥
तस्यैव ।

कियन्तः सन्त्येते जगति तरवः कोपि न पुनः
प्रसूनार्थं नारीचरणपरिचर्यागतिरभूत् ।
प्रमोदादन्तश्चेद्वलसि फलवाञ्छा वद तदा
वराशोकश्लाघ्यो भवतु कतरो दोहदविधिः ॥ ३ ॥
जलचन्द्रस्य ।

केषां चित्कुसुमोदयादनु विना तेनापि केषांचन
स्फायन्ते धरणीरुहामिह दिनैर्द्वित्रैः फलश्रेणयः ।
पुष्पश्रेणिषु पद्मरागपदवीपत्रेषु कान्ताकर-
श्रीरित्येव फलादृते बत गतः कङ्केल्लिजन्मग्रहः ॥ ४ ॥
उमापतिधरस्य ।

किं ते नम्रतया किमुन्नततया किं ते घनच्छायया
किं ते पल्लवलीलया किमनया चाशोकपुष्पश्रिया ।
यत्त्वन्मूलनिषण्णखिन्नपथिकस्तोमः स्तुवन्नन्वयं
न स्वादूनि मृदूनि खादति फलान्याकण्ठमुत्कण्ठितः ॥ ५ ॥
कविराजस्य ।

## ५५ शाल्मलिः ।

पुष्पं रक्षतु कण्टकैः परिमलेनानन्दयन्केतकीः
किं चासौ पनसः सुधासहचरस्वादातिहृद्यं फलम् ।
नामोदः कुसुमे फलेषु न रसस्तत्किं मुधा शाल्मले
काण्डं निर्भरमावृणोषि विषमैरामूलतः कण्टकैः ॥ १ ॥
नाकोकस्य ।

मूलं कण्टककर्परैरुपचितं निःसारमन्तर्वपु-
र्निर्गन्धं कुसुमं फलं क्षुधि मुधा पत्रै र्न कृत्यं क्वचित् ।
वृद्धिर्गृध्रपरिग्रहाय तदहो वक्तव्यमन्यत्परं
भ्रातः शाल्मलिवृक्ष नास्ति भवतः किं चिन्महत्त्वोचितम् ॥२॥
कस्यचित् ।

आहूतः परितो दिगन्तगतिभिः शाखाभिराडम्बरैः
किं रे जाल्म जवेन शाल्मलिफलप्रत्याशया धावसि ।
तस्मिन्नेकपदे भिदेलिमफलव्यालोलतूलोत्करै-
रध्वानोपि निमीलिताक्ष भटता न प्रेक्षणीयाः पुरः ॥ ३ ॥

जलचन्द्रस्य ।

प्रसारः शाखानां स्थगितगगनाभोगमहिमा
समृद्धिः शोणाम्भोरुहवनसमाना सुमनसाम् ।
प्रकाण्डश्रीर्वाचामपि न विषयः शाल्मलितरो-
स्तथाप्यंशुश्रेणीमयमनुपभोग्यं वत फलम् ॥ ४ ॥

उमापतिधरस्य ।

एतस्मिन्कुसुमे स्वभावमहति प्रायो गरीयः फलं
रम्यं स्वादु सुगन्धि शीतलमलं प्राप्तव्यमित्याशया ।
शाल्मल्याः परिपाककालकलनारोधेन कीरः स्थितो
यावत्तत्पुटसंधिनिर्गतपतत्तूलं फलात्पश्यति ॥ ५ ॥

शालिकनाथस्य ।

## ५६ मार्गतरुः ।

यच्छायामतनुं तनोषि मधुरैः प्रीणासि यत्त्वं फलै-
र्यन्नम्रोसि यदुन्नतोसि चतुरे यद्वर्तसे वर्त्मनि ।
यत्पान्थैरपरैरपि प्रतिपथं प्रस्तूयसे प्रायश-
स्तन्नाथ्वाथ क्षितिज त्वमेव पथिकैर्विश्रान्तये चिन्त्यसे ॥ १ ॥

कस्यचित् ।

उपरि मिहिरः क्रूरः क्रूरास्तलेचलभूमयो-
वहति पवनः पांशूत्कर्षी कृशः सरसो रसः ।
अहह न जहत्येते प्राणांस्तदेव किमध्वगा-
यदि न भवतः पत्रच्छत्रं विशन्ति महीरुह ॥ २ ॥

पुरुसेनस्य ।

आसीद्यस्तव पुत्रकस्त्रिचतुरैः पत्राङ्कुरैरावृतो-
मेघोन्मुक्तजलैकजीवनविधिः सन्मार्गलब्धास्पदः ।
सोयं संप्रति वासरैः कतिपयैरध्वन्यपुण्योच्चयैः
संपन्नः फलनम्रपल्लवततिच्छायोपलिप्तावनिः ॥ ३ ॥

सुरभेः ।

ये पूर्वं परिपालिताः फलदलच्छायादिभिः पत्रिणो-
विश्रामद्रुम कथ्यतां तव विपत्काले क्व ते सांप्रतम् ।

एताः संनिधिमात्रदर्शितपुरस्कारास्तु धन्यास्त्वचो
यासां छेदनमन्तरेण पतितो नायं कुठारस्त्वयि ॥ ४ ॥
वित्तोकस्य ।

किं जातोसि चतुष्पथे यदि घनच्छायोसि किं छायया
युक्तश्चेत्फलितोसि किं फलभरैराढ्योसि कस्मान्नतः ।
हे सद्वृक्ष सहस्व संप्रति शिखाशाखाशताकर्षण-
क्षोभामोटनभञ्जनानि जनतः स्वैरेव दुश्चेष्टितैः ॥ ५ ॥
कस्यचित् ।

## ५७ मरुतरुः ।

फणी मूलश्वभ्रे वपुरविरलं कीटपटलैः
शिरो गृध्रश्रेणीविधुरितमधः कण्टकचितम्
इतीदं जानीमश्चिरमपथभाजस्तव तरो
तथाप्यस्यामस्मारुहि भुवि भवानेव शरणम् ॥ १ ॥
वैद्यगदाधरस्य ।

प्रथममेव गुरु क्व मरुद्रुमे तरणितापकृतापदि पल्लवम् ।
यदपि किं चिदुच्छ्रितमाशुतत्कवलितं करभैरतिभैरवैः ॥ २ ॥
चपलदेवस्य ।

आश्यानैर्गलितं दलैर्वत कथाशेषाः प्रसूनश्रियो-
नोद्भेदोपि फलं प्रति प्रतिदिशं याता निराशाः खगाः ।
आपातालविशुष्कमूलकुहरोन्मीलज्जटासंतति-
स्तूष्णीमस्ति तथाप्यकालजलदं ध्यायन्मरुक्ष्मारुहः ॥ ३ ॥
पीताम्बरस्य ।

नासाग्रे पवनः परं नयनयोरापः क्रिया चेतसि
स्थैर्यं दाहभरेषु किंनु विदिताचे नैता मरुक्षोणयः ।
यत्राशाशतसंभ्रमेण पथिकैर्लब्धोपि भूमीरुह-
स्तेषामेव निदाघबिन्दुनिचयैः सेकस्थितिं वाञ्छति ॥४॥
सोढगोविन्दस्य ।

कल्याणं नः किमधिकमतो वर्तनार्थं यदस्मा-
ल्लूत्वा वृक्षानहह दहसि भ्रातरङ्गारकार ।
किं त्वेतस्मिन्नशनिपिशुनैरातपैस्तापिताना-
मध्वन्यानामपयसि मरुप्रान्तरे कोभ्युपायः ॥ ५ ॥
गदाधरस्य ।

## ५८ नानातरवः ।

न्यग्रोधे फलशालिनि स्फुटरसं किंचित्फलं पच्यते

बीजान्यङ्कुरगोचराणि कतिचित्सिध्यन्ति तत्रापि च ।
एकस्तत्र स कश्चिदङ्कुरवरो बध्नाति तामुन्नतिं
यामध्वन्यजनः स्वमातरमिव क्लान्तिच्छिदे धावति ॥ १ ॥
शालिकनाथस्य ।

केनात्र चम्पकतरो बत रोपितोऽसि
कुग्रामपामरजनान्तिकवाटिकायाम् ।
यत्र प्ररूढनवशाकविवृद्धलोभ-
गोभग्नवाटघटनोचितपल्लवोऽसि ॥ २ ॥ वीरस्य ।

फलानां संभारैरधरय तरूनुन्नततया
स्पृशाकाशं सर्वाः स्थगय परिणाहैरपि दिशः ।
तथापि ध्वाङ्क्षेभ्यो न पुनरितरः कोऽपि विहगः
फलार्थी निम्ब त्वां प्रकृतिविरसं धावति मुदा ॥ ३ ॥
विश्वेश्वरस्य ।

पृथुत्वात्सौरभ्यान्मधुरतरभावाच्च पतितैः
क्षुधा तप्तैः कुक्षिंभरिभिरिह सेवा तव कृता ।
तदात्वव्यामुग्धैरनुदिवसमस्वास्थ्यजननी
न दृष्टा तेऽस्माभिः पनस परिणामे विरसता ॥ ४ ॥
उमापतिधरस्य ।

परार्थे यः पीडामनुभवति निर्व्याजमधुरो
यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः ।
न संप्राप्तो वृद्धिं सपदि हतदैवात्समुचितां
किमिक्षोर्दोषोऽयं स पुनरगुणाया मरुभुवः ॥ ५ ॥
वाक्पतेः ।

## ५६ मरुः ।

शमीषण्डस्तावत्खदिरवनमस्माच्च परत-
स्ततो बब्बोलीनामपि गहनमुत्कीटविरुतम् ।
इतः कर्कन्धूनां वनमनु यवासस्थलमिदं
क्व कल्याणः पन्थाः पथिक हतदेशो मरुरयम् ॥ १ ॥
कस्यचित् ।

हे धाराधर विश्वमेव भवता साधारणं सिञ्चता
कस्ताकस्मिकदुर्दिनेन समये को नाम नामोदितः ।
एतस्यैव मरोर्मरालललनालीलानभिज्ञैस्तटै-
रापातालविशुष्कसैकतभुवस्तापोऽपि नापोहितः ॥ २ ॥
कस्यचित् ।

भ्रामं भ्राममनङ्गभूपरिसरे सारङ्ग निश्चापलं
वास्तव्यो भव मा पुनर्मरुपथप्रस्थानवाञ्छां कृथाः ।
यत्रादुर्बलदोर्बलैर्गुणगणव्यासक्तपात्रान्तरै-
र्लभ्यन्ते पुरुषैः परं कतिपयैः कौपाः पयोबिन्दवः ॥ ३ ॥
उमापतिधरस्य ।

भ्रातः पान्थ मरीचिकामपमृषावाःपूरपूर्णानिमा-
नुद्दिश्य प्रबलप्रसृत्वरतृषाक्लेशान्ध किं धावसि ।
नन्वेते मरुमेदिनीपरिसरा यैरस्ति गोपायितं
क्रूरैर्न स्वपरोपकारि सकलं पातालमूले पयः ॥ ४ ॥ तस्यैव ।

पायं पायं पिब पिब पयः सिञ्च सिञ्चाङ्गमङ्गं
भूयो भूयः कुरु सखे मज्जनोन्मज्जनानि ।
एषां शेषश्रमशतचद्दुर्दुःखिताध्वन्यबन्धुः
सिन्धुर्दूरीभवति पुरतो मारवः पान्थ पन्थाः ॥ ५ ॥
अनपालस्य ।

## ६० मेघः ।

अभ्युन्नतोसि सलिलैः परिपूरितोसि
त्वामर्थयन्ति विहगास्तृषितास्तथैते ।
कालः पयोधर परोपकृतेस्तवायं
चण्डानिलव्यतिकरे क्व भवान्क ते वा ॥ १ ॥ वाञ्छाकस्य ।

अये पाथोवाह स्थगय ककुभोन्यास्तत इत-
स्त्यजैतां सीमानं वसति मुनिरस्यां कलशभूः ।
उदञ्चत्कोपेस्मिन्सजलधिरपि स्थास्यति न ते
यतः पायं पायं सलिलमिह शौर्यं प्रथयसि ॥ २ ॥ वैद्यस्य ।

आकल्पं यदि वर्षसि प्रतिदिनं धारासहस्रैस्तथा-
ऽप्यम्भोधौ कलयत्यगाधजठरे कस्तावकीनं श्रमम् ।
अम्भोद क्षणमात्रमुज्झसि पयः पृष्ठे यदि क्ष्माभृतां
तत्किं न प्रसरन्ति निर्झरसरिद्व्याजेन ते कीर्तयः ॥ ३ ॥
वासुदेवस्य ।

एते ते पुरतो मरुस्थलभुवः प्रोच्चण्डदावानल-
ज्वालालीढकठोरसूरकिरणप्लुष्टच्छदाः शाखिनः ।
तानेतानवधीर्य खिन्नवपुषो दुःशीलझञ्झानिल-
क्रीडाभिर्न पयोद गन्तु मुचितं वेलाभिषिक्तंद्रुमान् ॥ ४ ॥
योगोकस्य ।

अये पश्यावस्थामकरुणसमीरव्यतिकर-
स्फुरद्दावज्वालावलिजटिलमूर्तेर्विटपिनः ।
अभ्रं कालक्षेपं त्यज जलद गम्भीरमधुरैः
किमेभिर्निर्घोषैः सृज झटिति झात्कारि सलिलम् ॥ ५ ॥

अचलसिंहस्य ।

## ६१ जलद-श्लाघा ।

आश्वास्य पर्वतकुलं तपनोष्मतप्तं
निर्वाप्य दावविधुराणि च काननानि ।
नानानदीनदशतानि च पूरयित्वा
रिक्तोऽसि यज्जलद सैव तवोत्तमा श्रीः ॥ १ ॥ कस्यचित् ।

क्रूराः शैलभुवो निरभ्रपरुषः पूषा ललाटन्तपः
पांशुः पादनखंपचः प्रतिदिशं वात्या करीषंकषा ।
एतस्यां मरुसीम्नि जाङ्गलतटीनिष्ठ्यूतदावानल-
क्लाम्यत्पान्थकुलान्यकालजलद त्वं त्रातुमेकः क्षमः ॥ २ ॥

धर्मयोगेश्वरस्य ।

उपैति क्षाराब्धिं वहति बहुवातव्यतिकरं
पुरो नानाभङ्गाननुभवति पश्यैष जलदः ।
कथंचिल्लब्धानि प्रवितरति तोयानि जगते
गुणं वा दोषं वा न गणयति दानव्यसनिता ॥ ३ ॥

वल्लणस्य ।

सचेन्मूर्छन्मत्स्यावलिरपि निपीतः पतिरपां
ततो वान्तः किं तद्व्यवसितमगस्त्येन तपसा ।
घनः श्लाघ्यः पीत्वा कियदपि पयस्तस्य हि वम-
न्विभर्त्येतद्विश्वं तमपि किल रत्नाकरयति ॥ ४ ॥

साञ्झनन्दिनः ।

धिग्धिक् तानुदधीन्स्तुमस्तु जलदं येभ्यः समभ्यर्थितैः
पाथोभिः पदवीं निदाघविकलां यः प्लावयन्वर्षति ।
यद्यस्याप्युदरे भवेदगणितस्तावन्मणीनां गण-
स्तत्किं नैष करोति रत्नकरकासारैः समृद्धं जगत् ॥ ५ ॥

कविपण्डितश्रीहर्षस्य ।

## ६२ मेघनिन्दा ।

निपीता श्वेतांशोर्जलद जगदाह्लादनकरी
मरीचिर्मय्योषा वहसि किमु खद्योतनिवहान् ।
किमेते कर्तारः कुमुदवनमुन्निद्रमुदधेः

किमानन्दं मन्दीकृततिमिरवृन्दाः किमु दिशः ॥ १ ॥
जलचन्द्रस्य ।

दूरोत्सारितराजहंस जलद प्राप्योन्नतिं नूतनां
कोटिं कामपि सांप्रतं मलिनिमा नीतस्त्वया यन्निजः ।
यत्संभूय बकैरमीभिरहह त्वं भूषणोत्प्रेक्षणा-
दात्मानं बहु मन्यमान गगनं गर्जारवैरश्नुषे ॥ २ ॥ हरेः ।

आशाः खर्वय गर्वगातिमुखरानुन्नादिनो बर्हिणः
सर्वांस्त्रासय गर्जितैः कलगिरो हंसान्समुत्सारय ।
द्रागास्कन्दय मित्रमण्डलमलं सद्वर्त्म संदूषय
भ्राम्यन्नब्द नयत्ययं न पवनो यावद्दशां कामपि ॥ ३ ॥
सरसीरुहस्य ।

तडित्तेजःपुञ्जैर्जनयसि दृशोः कामपि रुजं
गरीयोगर्जाभिः प्रकटयसि कर्णद्वयभिदाम् ।
यदम्भोबिन्दूनां प्रणयपरिपाकोयमखिल-
स्तदस्यैवाम्भोधेर्जलधर न धैर्यं कलयसि ॥ ४ ॥
अभिनन्दस्य ।

एतेषु रे तरुणमारुतधूममान-
दावानलीकवलितेषु महीरुहेषु ।
अम्भो न चेज्जलद मुञ्चसि मा विमुञ्च
वज्रं पुनः क्षिपसि निर्दय कस्य हेतोः ॥ ५ ॥ विश्वेश्वरस्य ।

## ६३ चातकः ।

तृषार्तैः सारङ्गैः प्रतिजलधरं भूरि विरुतं
घनैर्मुक्ता धाराः सपदि पयसस्तान्प्रति मुहुः ।
खगानां के मेघाः क इह विहगा वा जलमुचा-
मयाच्यो नार्तानामनुपहरणीयो न महताम् ॥ १ ॥
भर्तृहरेः ।

नभसि निरवलम्बे सीदता दीर्घकालं
त्वदभिमुखनिविष्टोत्तानचञ्चूपुटेन ।
जलधर जलधारा दूरतस्तावदास्तां
ध्वनिरपि मधुरस्ते न श्रुतश्चातकेन ॥ २ ॥ अचलसिंहस्य ।

अभिपतति घनं शृणोति गर्जाः सहति शिलाः सहते तडित्तरङ्गान् ।
विसहति मरुतं रुतं विधत्ते जलपृषते कियतेपि चातकोयम् ॥ ३ ॥
तस्यैव ।

अब्धिर्यद्यवधीरितो ननु तदा तस्मान्निपीयाम्बुदै-
र्वान्तान्याचमसि क्वाकुाभजलिर्लवानुत्तानचञ्चूपुटः ।
तत्ते निस्त्रप नीचतैवमुचिता निर्वक्तुमेतत्कथं
विश्वः केन गुणेन मानिषु पुरः सारङ्ग संगीयते ॥४॥ तस्यैव ।

चञ्चुः कदर्थयितुमर्जयितुं च ताप-
मध्वश्रमेण परिशोषयितुं शरीरम् ।
अभ्युल्लसज्जलधरभ्रमसंभ्रमेण-
धिग्धूमकूटमभिधावति चातकोयम् ॥ ५ ॥ तस्यैव ।

## ६४ दैवोपहतचातकः ।

दृष्ट्वा तोयभरावनम्रनिविडप्रारम्भमम्भोधरं
तृष्णार्त्तः किल रौति यावदसकृत्तोयाशया चातकः ।
तावच्चञ्चलचञ्चुकोटरकुटीकोष्ठे लुठन्तः स्फुटं
दृश्यन्ते करकोत्कराः किमपरं कोप्येष वामो विधिः ॥ १ ॥
शरणस्य ।

अस्योदरे बहुमनोरथमन्थरेण
संचिन्तितं किमपि चेतसि चातकेन ।
हा कष्टमिष्टफलदानविधानहेतो-
रम्भोधराद्भवति संप्रति वज्रपातः ॥ २ ॥ लडहचन्द्रस्य ।

सिन्धोरेव कियज्जलं कलसभूर्यत्पाणिपात्रे दधौ
तत्पीतं कियदम्बुदैः कियदितो वान्तं कियद्वा स्थितम् ।
तत्पातुं व्यवसायदीनमनसो धावन्त्यमी संभ्रमा-
दावर्तैर्मरुतां तदप्यपहृतं धिक् चातकान्धिग्विधिम् ॥ ३ ॥
लक्ष्मीधरस्य ।

वीजैरङ्कुरितं लताभिरुदितं वल्लीभिरुज्जृम्भितं
कन्दैः कन्दलितं जनैश्च मुदितं धाराधरे वर्षति ।
भ्रातश्चातक पातकं किमपि ते सम्यङ्न जानीमहे
येनास्मिन्न पतन्ति चञ्चुपुटके छिन्नाः पयोबिन्दवः ॥ ४ ॥
वसुकल्पस्य ।

अयि चातकचञ्चुपुटात्स्खलयति जलदोदबिन्दुमनिलश्चेत् ।
द्विज एव भाग्यहीनो जीवनदाता कृती जलदः ॥ ५ ॥
शब्दार्णवस्य ।

## ६५ अनन्यगतिकचातकः ।

विष्वक् प्लावयता जगन्ति जलद प्रीतस्त्वया वारिभिः

सारङ्गोपि यदि प्रसङ्गपतितः केयं विशेषज्ञता ।
सानन्दाः स्तुमहे चिराय चरितं तस्यैव तेन त्वयि
क्षीणोपि क्वचिदेव नाम्भसि मनागारोपि चञ्चुपुटः ॥ १ ॥

जलचन्द्रस्य ।

वदत विदितजम्बूद्वीपसंवृत्तवार्ताः
क्वचिदपि यदि दृष्टं वारिवाहं विहाय ।
सरिति सरसि सिन्धौ चातकेनार्पितोऽसा-
वतिबहलपिपासापांशुलः कण्ठनालः ॥ २ ॥

लक्ष्मीधरस्य ।

त्वं गर्ज नाम विसृजाम्बुद नाम्बु नाम
विद्युल्लताभिरभितर्जय नाम भूयः ।
प्राचीनकर्मपरतन्त्रनिजप्रवृत्ते-
रेतस्य पश्य विहगस्य गतिस्त्वमेव ॥ ३ ॥ कस्यचित् ।

नीहाराकरसारसागरसरित्कासारनीरश्रियं
त्यक्त्वा तोयद चातकेन भवतःसेवा समालम्बिता ।
तस्यैतत्फलितं यदुद्धतशिलासंताडनं मस्तके
गाढं गर्जसि वज्रमुज्झसि तडिल्लेखाभिरातर्जसि ॥ ४ ॥

कस्यचित् ।

यन्मूर्धानमशिक्षितो नमयितुं निम्नेषु तेनोच्चकै-
रारूढः पदमादरेण जलद त्वां याचते चातकः ।
यद्यस्मै विमुखो भवानपि पयोधाराः करोतु ततः
पद्मारोपितचञ्चुरेष जरयत्वङ्के पिपासारसम् ॥ ५ ॥

कस्यचित् ।

## ६६ मनस्विचातकः ।

गङ्गा शम्भुशिरोजलं जलनिधिर्देवस्य लक्ष्मीपतेः
शय्याक्षालनवारि वारि सरसः क्लीबस्य निन्द्य सताम् ।
नद्यस्ताः शतशोन्ययोषित इति त्यक्तोपभोगो युवा
सारङ्गः सततोन्नतेन शिरसा धाराधरं याचते ॥ १ ॥

कस्यचित् ।

किं नैव सन्ति भुवि तामरसावतंसा-
हंसावलीवलयिनो जलसंनिवेशाः ।
को दुर्ग्रहो ग्रहवतः खलु चातकस्य
पौरन्दरीं यदभिवाञ्छति वारिधाराम् ॥ २ ॥ कस्यचित् ।

एक एव खगो मानी सुखं जीवति चातकः ।
अर्थित्वं याति शक्रस्य न नीचमुपसर्पति ॥ ३ ॥

कस्यचित् ।

तृषार्तां शोचन्तीं न गणयति दीनां गृहवतीं
न दीनः पत्राभ्यां स्थगयति शिशूनालपति वा ।
कुटुम्बी सारङ्गः प्रसरति निदाघे[illegible]
कुलस्य स्वस्यायं पथि न पदमल्पं श्लथयति ॥ ४ ॥

गोसोकस्य ।

यदस्मादस्माभिश्चिरविहितसेवैरपि घना-
दनाप्ताः सारङ्गैः कतिपयपयःशीकरकणाः ।
द्विषन्तो वेशन्तं भृशमपलपन्तः पतिमपा-
मपार्थीकुर्वन्तः सरितमनुयामस्तदपि तम् ॥ ५ ॥

अवन्तिकद्रव्यस्य ।

## ६७ हंसः ।

गतं तद्गाम्भीर्यं तटमुपगतं जालिकशतैः
सखे हंसोत्तिष्ठ त्वरितममुतो याम सरसः ।
न यावत्पङ्काम्भःकलुषिततनुर्भूरि विरस-
न्बकोटो वाचाटश्चरणयुगलं मूर्ध्नि कुरुते ॥ १ ॥

डिम्बोकस्य ।

प्रालेयांशुमरीचिनालधवलानास्वाद्यकन्दाङ्कुरा-
न्पीतं यैर्जलजन्मकेशरपरिष्वङ्गाधिवासं पयः ।
हंसास्तेपि सखे तडाग भवतः क्रीडासहस्राविणो
जाताः पङ्किलबालवीरणदलद्रो[illegible]जलग्राहिणः ॥ २ ॥

जलचन्द्रस्य ।

स्थित्वा चिरं नभसि निश्चलतारकेण
मातङ्गसङ्गकलुषां नलिनीं विलोक्य ।
उत्पन्नमन्युपरिघर्घरनिस्वनेन
हंसेन साश्रु परिवृत्त्य गतं (न) नु लीनम् ॥ ३ ॥ कस्यचि[illegible] ।

ककुभि ककुभि ध्वान्तलुब्धं वितत्य विधाय च
श्रुतिपुटभिदो गर्जाः श्रेयः कृतं परमम्बुदैः ।
कथमितरथा जातोद्वेगः समुज्झितपल्वलः
कनककमलोत्तंसे हंसः स नन्दति मानसे ॥ ४ ॥

अचलसिंहस्य ।

तटमुपगतं पद्मे पद्मे निवेशितमाननं
प्रतिपुटकिनीपत्रच्छायं प्रतिक्षणमासितम् ।
नयनसलिलैरुष्णैरुष्णीकृता जलवीचयो
जलद् मलिनां हंसेनाशां विलोक्य गमिष्यता ॥ ५ ॥

छित्तपस्य ।

## ६८ राजहंसः

उत्क्रान्तभेककुलकीर्णजले तडागे
कोप्यस्ति नाम यदि नान्यगतिर्विकोटः ।
उत्फुल्लपद्मसुरभीणि सरांसि हित्वा
न स्थातुमर्हति भवानिह राजहंस ॥ १ ॥ शंकरस्य ।

गाङ्गमम्बु शुभ्रमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः ।
राजहंस तव सैव शुभ्रता चीयते न च न चापचीयते ॥ २ ॥

सुरभेः ।

छायामाश्रय पुण्डरीकमिलितां मध्येसरःशीकरं
सानन्दो भव राजहंस भवतः स्यान्नाम पक्षोन्नतिः ।
मञ्जीरेण तथापि च ध्वनिरयं निर्णीयते लीलया
योस्माकं परिचारिकाचरणयोः खेलाभिरुत्कूजति ॥ ३ ॥

उमापतिधरस्य ।

... ... ... ... ... ... ॥ ४ ॥
... ... ... ... ... ... ॥ ५ ॥

## ६९ कोकिलः ।

धिक्कुब्जाम्बुजवेत्रवेतसवनान्येतानि तत्ते पिक
व्याहारैः प्रणयादमीषु मधुरैरेभिः किमुन्मुद्रितैः ।
नेह त्वत्सुहृदो रसालतरवः श्रुत्वा भवद्भाषितं
येषामस्थिभिरप्युपात्तमुकुलैरात्तेक्ष्क्रियन्ते मुदः ॥ १ ॥ हरेः ।
उद्यानानि न सर्वदा परि[illegible]ध्यासते
भूमौ नोपविशन्ति ये खलु रजःसंपर्कतर्कादिव ।
तेषामप्यतिपूजनीयवपुषां नूनं पिकानामियं
धिक्कष्टं परपुष्टतेति किमपि प्राचां फलं कर्मणाम् ॥ २ ॥

तस्यैव ।

उद्यत्सौरभगर्भनिर्भरमि[illegible]कुरश्रीभृतो
माकन्दानवलोक्य यः प्रतिदिशं सानन्दमुत्कूजितः ।

भ्रातर्वैद्य विधीयते तव कियद्यावन्मया भेषजम् ॥ २ ॥

उमापतिधरस्य ।२७

पन्थाः प्रज्वलितः स्फुरन्ति परितः क्रूराः कृशानुत्विषः
कान्तारद्रुमधर्मदीधितिरपि व्योमार्धमारोहति ।
अस्माभिः श्रमविह्वलैरिह करच्छायासमालम्बिभि-
र्न ज्ञाताः परितः किरातशिबिरव्याप्ता वनश्रेणयः ॥ ३ ॥

तीरभुक्तीयसर्वेश्वरस्य

तद्ब्रह्माण्डमिह क्वचित्क्वचिदपि लीनौ क्वचिन्नीरदा-
स्ते द्वीपान्तरशालिनो जलधयः क्वापि क्वचित्पर्वताः ।
आश्चर्यं गगनस्य कोऽपि महिमा सर्वैरमीभिः स्थितै-
र्दूरे पूरणमस्य शून्यमिति यन्नामापि नाच्छादितम् ॥ ४ ॥

केशरस्य ।

समालम्ब्यान्योन्यं मसृणचरणाः कम्पनजुषो
न याताः के पारं सति जलधिबन्धे कपिभटाः ।
तटादेकोऽर्वाचश्चकितसुरसिद्धस्थितिसमु-
त्समुत्प्लुत्य प्रायात्परमपरपारं स हनुमान ॥ ५ ॥ छित्तपस्य ।

श्रीधरदासकृतेऽस्मिन्सदुक्तिकर्णामृते चतुर्थोयम् ।
सत्कर्मण्यपदेशप्रवाह उपदेशतां भजतु ॥ १ ॥

इतिमहामाण्डलिकश्रीधरदासकृतौ सदुक्तिकर्णामृते
अपदेशप्रवाहोनाम चतुर्थः ॥ वीचयः ७२ । श्लोकाः ३६० ॥

## उच्चावचप्रवाहवीचयः ।

मनुजस्तुरङ्गगावो पशवः पारावतो वलाका च ।
नानाखगाश्च गिरयो वनस्रवन्त्यौ विशेषनदी ॥ १ ॥
पद्माकरः प्रशस्तः सरसी चक्रश्च चक्रवाकी च ।
दिग्देशौ वीरधनुर्भङ्गौ हनुमत्प्रभृतिशौर्यम् ॥ २ ॥
रावण एतस्य शिरश्छेदो दूतोनुवादसंवादः ।
कवयो नानाकवयः प्रत्येककविर्मनस्विकवयश्च ॥ ३ ॥
कविदानं गुणिगर्वो वाणी काव्यं च काव्यमात्सर्यम् ।
काव्यमलिम्लुचसज्जनदुर्वृत्तौ सुजनदुर्जनौ मिलितौ ॥ ४ ॥
धन्य उदात्तो मानी कृपणः सेवकमनस्विमजमानौ ।
दुरधीशसेवकश्च क्षुद्रोदय दुःखितोथ दारिद्र्यम् ॥ ५ ॥
तत्सचटु दरिद्रगृही तद्गृहिणी तद्गृहं जरा वृद्धः ।
अनुशयनिर्वेदावथ विचारविचिकित्सिते च शमाविघ्नः ॥ ६ ॥

अर्द्ध-शमः कारुणिकः शान्त्याशंसा कृतार्थशान्तश्च।
शान्तिगतो निष्कमनिस्पृहवनगमनोत्सुकास्तपोविपिनम् ॥७॥
तापसबहुविषयशमौ ज्ञानी भवितव्यता च दैवं च।
कालपितृवनसमस्योच्चावचप्रतिराजसंस्तुतयः ॥ ८ ॥
इति षट्काशिकसप्ततिवीचिभिरिह सरसकोमलैरेभिः।
उच्चावचप्रवाहं श्रीधरदासः कृती कृतवान् ॥ ६ ॥

१ मनुष्यः।

अङ्गुष्ठाग्रिमवक्रिताङ्गुलिरसौ पादार्धेनरुद्धभूः
पार्श्वोद्वेगकृतो निहत्य कफणिद्वन्द्वेन दंशान्मुहुः।
न्यग्जानुद्वययन्त्रयन्त्रितघटीवक्त्रान्तरोद्यस्खल-
द्धाराध्वानमनोहरं सखि पयो गां दोग्धि गोपालकः ॥ १ ॥
कस्यचित्।

तैस्तैर्जीवोपहारैर्गिरिकुहरशिला संश्रयामर्चयित्वा
देवीं कान्तारदुर्गां रुधिरमुपतरु क्षेत्रपालाय दत्त्वा।
तुम्बीवीणाविनोदव्यवहितसरकामह्नि जीर्णे पुराणीं
हालां मालूरकोषैर्युवतिसहचरा वर्वराः शीलयन्ति ॥ २ ॥
कस्यचित्।

एताश्चन्द्रोदयेस्मिन्नविरलमुषलोत्क्षेपदोलायमान-
स्निग्धश्यामाग्रपीनस्तनकलसनमत्कण्ठनालाग्ररम्याः।
उद्वेल्लद्बाहुवल्लीः [illegible]श्रेण्यः पामराणां
गेहिन्यो दीर्घगीतिध्वनिजनितसुखास्तण्डुलान्कण्डयन्ति ॥३॥
शरणस्य।

रज्जुक्षेपरयोन्नमद्भुजलताव्यक्तैकपार्श्वस्तनी
सूत्रच्छेदविलोलशङ्खवलयश्रेणीझणत्कारिणी।
तिर्यग्विस्तृतपीवरोरुयुगला पृष्ठानतिव्याकृता-
भोगश्रोणिरुदस्यति प्रतिमुहुः कूपादपः पामरी ॥ ४ ॥ तस्यैव।
एतास्ता दिवसान्तभास्करदृशो धावन्ति पौराङ्गनाः
स्कन्धप्रस्खलदंशुकाञ्चलधृतिव्यासङ्गबद्धादराः।
प्रातर्यात-कृषीवलागमभिया प्रोत्प्लुत्य वर्त्मच्छिदो-
द्दृष्टक्रय्यपदार्थमूल्यकलनव्यग्राङ्गुलिग्रन्थयः ॥ ५ ॥
तस्यैव।

२ तुरङ्गः।

पश्चात्खुरद्वितयखण्डितभूमिभाग-
मूर्ध्वीकृताग्रचरणद्वयमुग्रहेषम्।

तानेवाद्य फलाशया परिरटल्लुग्ठाककाकावली-
वाचालानुपलभ्य कोकिलयुवा जातः स वाचंयमः ॥३॥

तस्यैव ।

दात्यूहाः सरसं रसन्तु सुभगं गायन्तु केकाभृतः
कादम्बाः कलमालपन्तु मधुरं कूजन्तु कोयष्टयः ।
दैवाद्यावदसौ रसालविटपिच्छायामनासादय-
न्निर्विण्णः कुटजेषु कोकिलयुवा संजातमौनव्रतः ॥ ४ ॥

रामदासस्य ।

परभृतशिशो तावन्मौनं विधेहि नभस्तलो-
त्पतनविधये पक्षौ स्यातां न यावदिमौ क्षमौ ।
ध्रुवमपरथा द्रष्टव्योसि स्वजातिविलक्षण-
ध्वनितकुपितध्वाङ्क्षत्रोटीपुटाहतिजर्जरः ॥ ५ ॥

अचलसिंहस्य ।

## ७० शुकः ।

प्रतिजागृहि दुस्त्यजं वपुः शुक शोकं ननु मा वृथा कृथाः ।
क्व वनं क्व च पञ्जरोदरं तव दोषः स्फुटवादिता न चेत् ॥ १ ॥

अचलसिंहस्य ।

अपि शाकुनिक कृतोऽञ्जलिरितरे न कतीह जीवनोपायाः ।
हत्वा शुकान्किमेतद्विपिनमसारस्वतं कुरुषे ॥ २ ॥

वैद्यगदाधरस्य ।

एकत्र प्राकृतैः साम्यमन्यत्र परतन्त्रता ।
शुकस्य परितोषाय न वनं न च पत्तनम् ॥ ३ ॥

उमापतिधरस्य ।

अयि खलु वधिराधिराज कीरं
तुदसि शलाकनिपातनेन मोहात् ।
अनिशमपि सुधानिधानवाणी
रचयतु मौनमुखोस्तु वा समस्ते ॥ ४ ॥ गोपीकस्य ।

भ्रातः कीर किमत्र नीरसतरुस्कन्धे मधुस्यन्दिभि-
र्व्याहारैस्तव वस्तुवर्णितकथाबन्धैर्मुधायं श्रमः ।
नैते दाडिमशाखिनः परिणतैर्येषां फलैरन्तरं
निर्भिद्यापि गुणान्प्रवक्तुमशठैराविष्क्रियन्ते मुदः ॥ ५ ॥

नौलिकस्य ।

## ७१ नानापक्षिणः ।

स्वामिन्खञ्जन मुञ्च मुञ्च फणभृद्भोगाधिरोहग्रहं
तद्विश्राम्यतु नः फलं किमपि यद्गन्येन देयं त्वया ।
दैवादेष यदि प्रदीप्तगरलस्त्वां दन्दशूको दशे-
द्विश्वालोककरी तदा शरदियं स्यादेव दृग्वञ्चिता ॥ १ ॥

वैद्यगदाधरस्य ।

आजन्मैव तमःसुहृत्कुटिलता वक्त्रे गिरां निर्गमो
ग्रामोत्सादकरः श्मशानविटपी प्रायेण यस्य प्रियः ।
त्रिग्धातः ससृजे स एष मलिनः क्रूरः कथं कौशिकः
सृष्टो वा किमकल्प्यतास्य भवता कल्पान्तमायुः स्थिरम् ॥२॥

तस्यैव ।

अयि चकोरकुटुम्बिनि कातरे
तिरय पक्षपुटेन कुटुम्बकम् ।
बहु गतं कियदप्यवशिष्यते
व्यपगतं तिमिरैरुदितः शशी ॥ ३ ॥ पाम्पाकस्य ।

क्रमगलितैः शिखिपिच्छैरभिमतमास्तां वनेन किं शिखिनः ।
कुतुकिन्न पुनर्लाभो विषधरविषमं वनं भविता ॥ ४ ॥

कस्यचित् ।

आभ्यदुभ्योपि गृहे गृहे कटुतरामप्यालपद्भ्यो गिरं
गृह्णद्भ्योपि बलादमेध्यमथवावज्ञां व्रजद्भ्योपि च ।
शय्योत्थायमुपासते वसतिमित्येतावतायं नृणां
काकेभ्यो वलिरस्ति कोकिलबलिः केनापि नाकर्णितः ॥ ५ ॥

कस्यचित् ।

## ७२ उच्चावचम् ।

भ्रातः पश्य निकृत्य चन्दनतरूञ्शाकोटकं रोपते
सारासारविचारिणी मतिरिह ग्रामे जनानां कुतः ।
तद्यावद्द्वयमस्य सेकसलिलं वोढुं न मृष्यामहे
तावत्सत्वरमेव पामरजनग्रामादितो गम्यताम् ॥ १ ॥

कस्यचित् ।

दन्तैरुत्पतितं स्फुरन्ति वलयो निष्कालिमानः कचाः
आधिन्देवमपेत्मेव करणग्रामेण लुप्ता मतिः ।
अस्मिन्नप्रतिकारदारुणजराव्याधौ दयार्द्रात्मनो-

मूर्धावगाहनविहस्तनिजाश्ववार-
भाराज्जनः परिजहार खलं तुरङ्गम् ॥ १ ॥ धोयीकस्य।
कृतशीकरवृष्टिकेशरैरसकृत्स्कन्धमबन्धुरं धुवन्।
अपिबच्चरणाग्रताडितं तुरगः पङ्किलमापगापयः ॥ २ ॥ तस्यैव
आघ्रातक्षोणिपीठः खुरशिखरसमाकृष्टरेणुस्तुरङ्गः
पुञ्जीकृत्याखिलाङ्घ्रीन्क्रमवशात्रिनमज्जानुकं मुक्तकायः।
पृष्ठान्तःपार्श्वकण्डूव्यपनयनवशादुद्विस्त्रिरुद्वार्तिताङ्गः
प्रोत्थाय द्राङ् निरीहः क्षणमथ वपुरास्यानुपूर्व्ये धुनोति ॥३॥
विक्रमादित्यस्य।
पश्चादङ्घ्री प्रसार्य त्रिकनतिविततं द्राघयित्वाङ्गमुच्चै-
रासज्याभुग्नकण्ठं क्षणमुपरि सटां धूलिधूम्रां विधूय।
घासग्रासाभिलाषादनवरतचलत्प्रोथतुङ्गस्तुरङ्गो
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण ॥४॥
तस्यैव।
कुर्वन्नाभुग्नपृष्ठो मुखविकटकटिः कन्धरामातिरश्चीं
लोलेनाहन्यमानां तुहिनकणमुचा चञ्चता केशरेण।
निद्राकण्डूकषायं कषति निविडितश्रोत्रशुक्तिस्तुरङ्ग-
स्त्वङ्ग............प्रतनुवुषकणं कोणमक्ष्णः खुरेण ॥ ५ ॥
तस्यैव।

## ३ गौः।

व्यक्तस्नायुवृतास्थिपञ्जरभरो रोमन्थनिद्रालसः
प्रातर्गोमयलिप्तपुच्छचरणोऽप्युत्थातुकामः स्वयम्।
पूर्वव्यूढिविभावन परिवृढैरुत्तोलितः स्पन्दते
वृद्धोक्षस्त्रिकभङ्गलब्धरुधिरात्काकाद्भिया विद्रुतः ॥ १ ॥
कस्यचित्।
अग्रे वितत्य चरणौ विनमय्य कण्ठ-
मुत्थाप्य वक्त्रमभिहत्य मुहुश्च वत्साः।
मात्राविवर्तितमुखं मुखलिह्यमान-
पश्चार्धसुस्थमनसः स्तनमुत्पिबन्ति ॥ २ ॥ चक्रपाणेः।
तिर्यक्क्षीक्षणविषाणयुग्मचलनव्यानम्रग्रीवाननः
किंचित्कुञ्चितलोचनः खुरपुटैराचोटयन्भूतलम्।
निश्वासैरतिजर्जरैर्बुषकणाजालं खले विक्षिप-
न्नुक्षा गोष्ठतटीषु लब्धविजयो गोवृन्दमास्कन्दति ॥ ३ ॥
योगेश्वरस्य।

उपनिहितलीषासार्गलद्वारमारा-
त्परिचकितपुरन्ध्रीसारिताभ्यर्णभाण्डम् ।
पवनरयतिरश्चीर्वारिधाराः प्रतीच्छ-
न्विशति वलितशृङ्गः पामरागारमुक्षा ॥ ४ ॥ कस्यचित् ।
कर्णाभ्यर्णारिशृङ्गक्षतिरुधिररसास्वादनाबद्धगर्ध-
ध्वाङ्क्षच्छायात्तभीतिप्रतिहतधवलीवर्गसंवर्धनेच्छुः ।
शीलत्या क्रुद्धगोपीलगुडहतिनमत्पृष्ठवंशः कथंचि-
त्प्रातः केदारनीरं कलमदलभिया कूणिताक्षो महोक्षः ॥ ५ ॥
कस्यचित् ।

## ४ नानापशवः ।

पश्योदञ्चदवाञ्चदञ्चितवपुः पश्चार्धपूर्वार्द्धभाक्
स्तब्धोत्तानितपृष्ठनिष्ठितमनाग्भुग्नाग्रलांगूलभृत् ।
दंष्ट्राकोटिविशंकटास्यकुहरः कुर्वन्सटामुत्करा-
मुत्कर्णः कुरुते क्रमं करिपतौ क्रूराकृतिः केशरी ॥ १ ॥
सुबन्धोः ।
उच्चश्मश्रुर्व्यात्तवक्त्रः प्रविततरसनापल्लवालीढसृक्का-
पिङ्गोग्रभ्रान्तनेत्रः पुलकिततरलोत्तानलांगूलनालः ।
कुत्राप्यक्रान्तिगामी क्वचिदतिपिहितः क्वापि तुङ्गाग्रगात्र-
श्चित्रव्याघ्रो यमत्तुं प्रमदवनमृगीतर्णकांस्तूर्णमेति ॥ २ ॥
योगेश्वरस्य ।
आकुञ्जीकृतपृष्ठमुन्नतबलद्ग्रीवाग्रमुच्चैर्भया-
न्नतं[illegible]निवेशितैकनयनं निष्कम्पकर्णद्वयम् ।
लालाकीर्णविदीर्णसृक्कविकसद्दंष्ट्राकरालाननः
श्वा निःश्वासनिरोधपीवरगलं मार्जारमास्कन्दति ॥ ३ ॥
तस्यैव ।
दुर्वारकेलिकलडिम्भभयादिदानीं
व्यालम्बिलोलकुचकम्बलभारमन्दा ।
संदश्य विश्लथमुदञ्चयता मुखेन
शावं शुनी नयति शालिपलालकूटम् ॥ ४ ॥ शुभाङ्कस्य ।
विलेभ्यो निष्क्रान्तं प्रतिनवहरिद्रारसनिभं
प्रियापृष्ठाश्लेषप्रण[illegible] ।
स्वरान्सानुस्वारान्विविधतदवस्थाविघटितं
कुलं मण्डूकानामुदयगलगण्डं विकुरुते ॥ ५ ॥
तस्यैव ।

## ५ पारावतः ।

असौ गिरेः शीतलकन्दरस्थः पारावतो मन्मथचाटुदक्षः ।
घर्मालसाङ्गीं मधुराणि कूजन्संवीजते पक्षपुटेन कान्ताम् ॥ १ ॥

पाणिनेः ।

किञ्चित्कुञ्चितचञ्चुचुम्बनसुखस्फारीभवल्लोचनं
स्वप्रेमोचितचारुचाटुकरणैश्चेतोर्पयन्ती मुहुः ।
कूजन्ती विनतैकपक्षतिपुटेनालिङ्गय लीलालसं
धन्यं कान्तमुपान्तवर्तिनमियं पारावती सेवते ॥ २ ॥

मातङ्गराजस्य ।

कलक्वणितगर्भेण कण्ठेनाघूर्णितेक्षणः ।
पारावतः परिभ्रम्य रिरंसुश्चुम्बति प्रियाम् ॥ ३ ॥ दण्डिनः ।

प्रातर्वारविलासिनीजनरणन्मञ्जीरमञ्जुस्वनै-
रुद्बुद्धः परिधूय पक्षतिपुटं पारावतः सस्पृहम् ।
किंचित्कुञ्चितलोचनां सहचरीं संचुम्ब्य चञ्च्वा चिरं
मन्दान्दोलितकण्ठकुण्ठितगलः सोत्कण्ठमुत्कूजति ॥ ४ ॥

विक्रमादित्यस्य ।

पक्षाभ्यां सहितौ प्रसार्य चरणावेकैकशः पार्श्वयो-
रेकीकृत्य शिरोधरोपरि शनैः पाण्डूदरे पक्षती ।
निद्राशेषविशेषरक्तनयनो निर्याय नीडोदरा-
दाक्रान्तविदारिताननपुटः पारावतो जृम्भते ॥ ५ ॥

शृङ्गारस्य ।

## ६ बकः ।

गत्वा पुरः कतिचिदेव पदानि वेगा-
दाकुञ्चितैकचरणो निभृतीकृताक्षः ।
स्वैरं विदूरविततीकृतकन्धरोयं
मीनं सरोम्भसि निभालयते बलाकः ॥ १ ॥ कामदेवस्य ।

बलाकाः पान्थानां शिशिरसरसीसीम्नि सरता-
ममी नेत्रानन्दं ददति चरणान्दोलनसुखाः ।
धुनाना मूर्धानं गलविलविशत्स्फारशफर-
स्फुरत्पुच्छानच्छद्युतिशबलवाष्पारुणदृशः ॥ २ ॥

मधुकण्ठस्य ।

हरति पुरतः पार्श्वे पश्चाद्वलन्तमनन्तरं
शफरमपरित्राणं गृह्णन्बकस्तटिनीतटे ।

प्रविचलगरुत्पालिर्दत्तापरापरसत्वर-
श्चिचतुरखरत्रोटीकोटिप्रहार इतस्ततः ॥ ३ ॥ पियाकस्य ।
उद्ग्रीवस्तिमितेक्षणस्तत इतः पश्यन्निलीय स्थितं
पादोद्घृष्टिपरस्परप्रतिभयभ्रान्तं चलत्पक्षतिः ।
द्राक्त्रोटीपुरकोटिकुण्ठितरयं प्राक्तिर्यगूर्ध्वीकृतं
गर्भान्तःप्रणयीचकार शफरं कासारचारी वकः ॥ ४ ॥
कस्यचित् ।
पयसि सरसे स्वच्छे मत्स्याभिघृक्षुरितस्ततो
वलितनयनं मन्दं मन्दं पदं निदधद्बकः ।
वियति विधृतैकाङ्घ्रिस्तिर्यग्विवर्तितकन्धरो-
दलमपि चलत्सप्रत्याशं मुहुर्मुहुरीक्षते ॥ ५ ॥
योगेश्वरस्य ।

## ७ नानापक्षिणः ।

उत्प्लुत्य दूरं परिधूय पक्षा-
वधो निरीक्ष्य क्षणबद्धलक्ष्यः ।
मध्येजलं चञ्चति दत्तझम्पः
समत्स्य उत्सर्पति मत्स्यरङ्कः ॥ १ ॥ कस्यचित् ।
नीडादपक्रम्य विधूय पक्षौ वृक्षाग्रमारुह्य ततः क्रमेण ।
उद्ग्रीवमुत्पुच्छमुदेकपादमुच्चूडमुत्कूजति ताम्रचूडः ॥ २ ॥
मधोः ।
इह सरसि सलीलं चारुपत्रे विधुन्व-
न्दरतरलिततिर्यक्चञ्चुकण्डूयिताङ्गः ।
अनुसरति सरागः प्रेयसीमग्रयाता-
मनुपदसमुदञ्चत्कण्ठनालो मरालः ॥ ३ ॥ शिशोकस्य ।
चञ्चच्चञ्चलचञ्चुवाञ्छितचलच्चूडाग्रमुग्रं पत-
च्चक्राकारकरालकेशरशटास्फारस्फुरत्कन्धरम् ।
वारंवारमुदङ्घ्रिलङ्घनघनप्रेङ्खन्नखक्षुण्णयोः
कामं कुक्कुटयोर्द्वयं द्रुतपदं क्रूरक्रमं युध्यति ॥ ४ ॥
कस्यचित् ।
उत्पुच्छः प्रमदोल्लसद्वपुरधोविस्रंसिपक्षद्वयः
स्वैरालोकगतिक्रमेण परितो भ्रान्त्वा सलीलं मुहुः ।
उत्कण्ठालसकूजितः कलरुतां भूयोरिरंसारस-
न्यग्भूतां चटकःप्रियामनुसरत्युद्वेपमानः स्वयम् ॥ ५ ॥
सोह्लोकस्य ।

## ८ गिरयः ।

माद्यद्दिग्गजगण्डभित्तिकषणैर्भग्नस्रवच्चन्दनः
पादालक्तकरक्तमौक्तिकशिलः सिद्धाङ्गनानां गतैः ।
क्रन्दत्कन्दरगह्वरो जलनिधेरास्फालितो वीचिभिः
सेव्योयं मलयाचलः किमपि मे चेतः करोत्युत्सुकम् ॥ १ ॥
श्रीहर्षस्य ।

एताः स्थानपरिग्रहेण शिवयोरत्यन्तकान्तश्रियः
प्रालेयाचलमेखलावनभुवः पुष्णन्ति नेत्रोत्सवम् ।
व्यावल्गद्बलवैरिवारणवरप्रत्यग्रदन्ताहति-
श्वभ्रप्रस्रवदभ्रसिन्धुसवनप्रस्निग्धदेवद्रुमाः ॥ २ ॥

कस्यचित् ।

छन्नोपान्ता निकुञ्जैस्तरुणशुकफलश्यामलैः कीचकानां
शैलेयप्रस्तराभिः सुभगपरिसराः पीवरीभिः शिलाभिः ।
एते ते रुद्धरेवारयमुखरतया यौवनोद्दामकाम-
व्यापारोत्താललीलाचतुरवनचरीबन्धवो विन्ध्यपादाः ॥ ३ ॥
योगेश्वरस्य ।

इमास्ता विन्ध्याद्रेः शुकहरितवंशीवनघना-
भुवः क्रीडालोलद्विरदरदनारुग्णतरवः ।
लताकुञ्जे यासामुपनदि रतक्लान्ततरुणी-
कपोलस्वेदाम्भःपरिचयनुदो वान्ति मरुतः ॥ ४ ॥ तस्यैव ।

करिकवलनशिष्टैः शाकशाखाग्रपत्रै-
ररुणसरणयोमी सर्वतो भीषयन्ते ।
चलितशबरसेनादत्तगोशृङ्गचण्ड-
ध्वनिचकितवराहव्याकुला विन्ध्यपादाः ॥ ५ ॥

कमलायुधस्य ।

## ९ अटवी ।

प्रत्यासन्नसरांसि कोकिलवधूलीलासुहृन्दि च्छद-
च्छायालिप्तककुम्भि कोरकहसद्वीरुन्धि विन्ध्याटवी ।
अन्तर्दत्तमनोजरुञ्जि रुचिरद्रुमारुंहि भृङ्गाकुल-
स्वच्छन्दाम्पि लतागृहाणि दधती कांचिन्मुदं यच्छति ॥ १ ॥
मधोः ।

मिथःक्रीडत्क्रोडावलिविलसितोत्खाततटिनी-
तटी लुब्धोद्गर्जद्गजगहनगर्भेयमटवी ।
गुहाभिर्व्याघ्राणां जरदजग[illegible]षां
घटत्कारं घोरं प्रतिरववहाभिर्द्रढयति ॥ २ ॥ कस्यचित् ।

सर्पश्वासमरुत्तरङ्गतरलाः क्वापि क्वचिच्छ्वापद-
स्फारोद्गीर्णगिरो निरन्तरतमस्तारुण्यमग्नाः क्वचित् ।
क्वापि क्रूरकृशानुदुर्मुखकथाशेषीकृतक्ष्मारुह-
श्चेतः संप्रति कम्पयन्ति परितो गम्भीरभीमा भुवः ॥ ३ ॥

जलचन्द्रस्य ।

क्षुण्णक्ष्मारुहवीथयो विदलितग्रावोपलग्रन्थयः
सिंहस्वीकृतमत्तवारणवधूबद्धार्तकोलाहलाः ।
एताः पल्लवयन्ति चेतसि भयं भल्लूकहिक्कारवै-
रातङ्कात्पतयालुबालहरिणीगर्भाविला भूमयः ॥ ४ ॥ तस्यैव ।

इह महिषविषाणव्यस्तपाषाणपीठ-
स्खलनसुलभरोहिद्गर्भिणीभ्रूणहत्याः ।
कुहरविहरमाणप्रौढभल्लूकहिक्का-
चयचकितकिरातन्यस्तशस्त्रा वनान्ताः ॥ ५ ॥ मुरारेः ।

## १० नदी ।

भान्त्येताः शैवलिन्यो वनमहिषखुरक्षुण्णपाठीनपृष्ठ-
ग्रासव्यग्रोद्र(?)न्दप्रविरलचरणन्यासमुद्राङ्कपङ्काः ।
निःशङ्कोद्भ्रान्तकङ्कत्रसदुरगवधूसंभ्रमोत्फालमूर्छ-
द्भेकार्तस्वानदीर्घीकृतरवविरसत्कीचकग्रन्थिबन्धाः ॥ १ ॥

कस्यचित् ।

व्यक्तव्याघ्रपदाङ्कपङ्क्तिनिचितोम्मुद्रार्द्रपङ्कोदरा-
स्तोयोत्तीर्ण[illegible]क्षुण्णस्थलीवालुकाः ।
सान्द्रस्थूलनलोपरोधविषमाः शङ्क्यावताराः पुरः
संत्रासं जनयन्ति कुञ्जसरितः काचाभनीलोदकाः ॥ २ ॥

अन्तर्भग्नकरेणवः कलभकव्यारुग्णकन्दाङ्कुरैः
सामोदाः परितः प्रमत्तमहिषश्वासोल्लसद्वीचयः ।
संमोदं जनयन्ति शैलसरितः सुच्छायकच्छस्थली-
सीमानो जलसेकशीतलशिलानिद्रालुरोहिद्गणाः ॥ ३ ॥

जलचन्द्रस्य ।

जलरयदलत्कूलोत्सङ्गाः प्रलम्बिलतागृह-
स्तिमितगतिभिर्वेणीबन्धैर्विशृङ्खलवीचयः ।
स्थपुटित-शिलासोपानेषु प्रकामतराङ्गिताः
शिखरिसरितो नेत्रानन्दं किरन्ति समन्ततः ॥ ४ ॥

तस्यैव ।

वीचीसंक्रमदन्तुराः कलरवैर्वाचालिताः सारसै-

रानन्दं जनयन्ति पूरगरिमोत्तानीभवद्वालुकाः।
भ्रान्तागन्तुकराजहंसपरिषत्पादाङ्कमुद्राभृतः।
प्रस्थद्मारुहतल्पसुप्तकुरराः स्रोतस्वतीभूमयः॥ ५॥

कस्यचित्।

## ११ विशेष-नदी।

कूजद्भिर्वनकुक्कुभैर्मदकलं वाचालतीरद्रुमा-
बिभ्राणा विकचाब्जकेशररजःपिङ्गास्तरङ्गावलीः।
स्रोतःक्षामविपाण्डुसैकतसुखासीना रसत्सारसा-
धन्येयं तमसानदी हरति मे दृष्टापि मार्गश्रमम्॥ १॥

कस्यचित्।

एते मेकलकन्यकाप्रणयिनः पातालमूलस्पृशः
संत्रासं जनयन्ति विन्ध्यभिदुरा वारां प्रवाहाः पुरः।
हेलोन्मूलितमर्दितप्रतिहतव्यावर्तितप्रेरित-
न्यक्कस्वीकृतनिह्नुतप्रकटितप्रोद्धूततीरद्रुमाः॥ २॥

कस्यापि।

मज्जन्मातङ्गहस्तच्युतमदमदिरामोदमत्तालिजालं
स्नानैः सिद्धाङ्गनानां कुचयुगविलसत्कुङ्कुमासङ्गपिङ्गम्।
सायं प्रातर्मुनीनां कुशकुसुमचयच्छन्नतीरस्थलीकं
पायाद्वो नर्मदाम्भः करिकरमकराक्रान्तरंहस्तरङ्गम्॥ ३॥

क्षितपस्य।

इयं सा कालिन्दी कुवलयदलस्निग्धमधुरा
मदान्धव्याकूजत्तरुणजलरङ्कुप्रणयिनी।
पुरा यस्यास्तीरे सरभसतृष्णं मुरभिदो-
गताः प्रायो गोपीनिधुवनविनोदेन दिवसाः॥ ४॥

शरणस्य।

इदं तत्कालिन्दीतटमिह हि कंसासुरभिदो-
यशः शृण्वद्वक्त्रस्खलितकवलं गोकुलमभूत्।
भ्रमद्वेणुक्वाणप्रणयमसृणोत्तारमधुर-
स्वराभिर्गोपीभिर्दिशि दिशि समुद्गीर्णमनिशम्॥ ५॥

केशटस्य।

## १२ तडागः।

अविरतमधुपातागारमिन्दिन्दिराणा-
मभिसरणनिकुञ्जं राजहंसीकुलस्य।
प्रविततबहुशालं सद्म पद्मालयाया-
वितरति रतिमक्ष्णोरेष लीलातडागः॥ १॥ लक्ष्मणसेनस्य।

वीचीसमीरधुतकाञ्चनपुण्डरीक-
पर्यस्तकेशरपरागपिशङ्गिताम्भः ।
अच्छोदमैक्षत स देवपुरन्ध्रिपाद-
लाक्षारुणीकृतशिलातलतीरलेखम् ॥ २ ॥ रत्नाकरस्य ।
मदतरलमरालप्रेयसीचञ्चुकोटि-
क्रकचविदलितानि व्यक्तमिन्दीवराणि ।
निविडयति तडागे यत्र लीलावतीनां
कुवलयदलदामश्यामलो दृष्टिपातः ॥ ३ ॥ जलचन्द्रस्य ।
लुठद्वीचीमौलिः परिपतति पूर्वं चरणयो-
रथोरू गृह्णाति स्पृशति जघनाभोगमभितः ।
करौ धत्ते मध्ये कलयति समाश्लिष्यति कुचौ
कचानप्यादत्ते प्रियइव तडागो मृगदृशाम् ॥ ४ ॥ गोवर्धनस्य ।
एतन्मानिनि मानसं सुरसरो निर्लूनहेमाम्बुजं
पार्वत्या पतिपूजनार्थममुतो गङ्गासरिन्निर्गता ।
अस्माच्चित्रशिखण्डिभिश्च परमे ब्रह्मण्युपादीयते
स्नानोत्तीर्णवृषाङ्कभस्मरजसां सङ्गात्पवित्रं पयः ॥५॥ राजशेखरस्य ।

## १३ प्रशस्त-तडागः ।

भ्राम्यद्भृङ्गालिदोलाविदलितकुमुदामोदमेदस्विवातो-
द्वेल्लत्कल्लोलमालाचलकमलकटाकूतहूताध्वनीनाः ।
पाथोनाथोपहासोल्लसितसितरदाकारविस्फारफेना-
स्तेनाखन्यन्त दन्तद्युतिविशदयशोहंसनीडस्तडागः ॥ १ ॥
भट्टनारायणस्य ।
तेनाखानि जलावगाहनरसव्यासक्तपौराङ्गना-
पर्यस्यत्कवरीविकीर्णकुसुमस्मेरोर्मिमालं सरः ।
यस्मिन्नच्छतया निधाय नयने मर्त्यैः सकौतूहलं
लक्ष्यन्ते भुजगाधिराजनगरीवामभ्रुवां विभ्रमाः ॥ २ ॥
उमापतिधरस्य ।
उन्मीलल्लीलनीलोत्पलदलदलनामोदमेदस्विपूर-
क्रोडक्रीडद्द्विजालीगरुदुरुमरुदास्फालवाचालवीचिः ।
एतेनाखानि शाखानिवहनवहरित्पर्णपूर्णद्रुमाली-
व्यालीढोपान्तशान्तव्यथपथिकदृशां दत्तरागस्तडागः ॥ ३ ॥
कविपण्डितश्रीहर्षस्य ।
तडागास्ते नानानिलचपलपद्माकरलस-

द्रसत्त्रोद्दामोदाकुलमधुकरालीकवलिताः ।
कृतास्तोयक्रीडाकुलकुवलयाक्षीकुचतट-
त्रुटद्वीचीवेल्लत्कुररकुलकोलाहलपुषः ॥ ४ ॥ विश्वेश्वरस्य ।
अथायतनसंनिधौ भगवतो भवानीपते-
र्मनोहरमचीखनद्भुवनभूषणं भूपतिः ।
विगाहनकुतूहलोत्तरलपौरसीमन्तिनी-
पयोधरभरत्रुटद्विकटवीचिमुद्रं सरः ॥ ५ ॥ वसुकल्पस्य ।

## १४ चक्रवाकः ।

तीरात्तीरमुपैति रौति करुणं चिन्तां समालम्बते
कान्तां ध्यायति निश्चलेन मनसा योगीव युक्तेक्षणः ।
स्वच्छायामवलोक्य कूजति पुनः कान्तेति हृष्टः खगो-
धन्यास्ते खलु ये विमुक्तविषयाः कष्टं परं सङ्गिनाम् ॥ १ ॥
कस्यचित् ।

लीलाम्भोरुहकाननेन विशति ध्वान्तोत्कराशङ्कया
स्वक्रीडोच्छलिताश्च वारिकणिकास्ताराभ्रमात्पश्यति ।
सत्रासं मुहुरीक्षते च चकितो हंसं हिमांशुभ्रमा-
न्न स्वास्थ्यं भजते दिवापि विरहाशङ्की रथाङ्गाह्वयः ॥२॥ धर्मपालस्य ।
मित्रे क्वापि गते सरोरुहवने बद्धानने क्लाम्यति
क्रन्दत्सु भ्रमरेषु वीक्ष्य दयिताश्लिष्टान्पुरः सारसान् ।
चक्राह्वेण वियोगिना बिसलता नोत्खण्डिता नोज्झिता
वक्त्रे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ॥३॥ ?वसेनस्य ।
पश्चालिङ्ग त्वरयति मनो दुर्बला वासरश्री-
रात्श्लिष्टासि क्षपय रजनीमेकिका चक्रवाकि ।
नान्यासक्तो न खलु कुपितो नानुरागच्युतो वा
दैवाधीनः सपदि भवतीमस्वतन्त्रस्त्यजामि ॥ ४ ॥ भानोः ।
भङ्क्त्वा भीतो न भुङ्क्ते कुटिलबिसलताकोटिमिन्दोर्वितर्का-
त्ताराकारास्तृषार्तो न पिबति पयसां विप्रुषः पत्रसंस्थाः ।
छायामम्भोरुहाणामलिकुलशबलां वेत्ति सन्ध्यामसन्ध्यां
कान्ताविच्छेदभीरुर्दिनमपि रजनीं मन्यते चक्रवाकः ॥ ५ ॥
रजकसरस्वत्याः ।

## १५ चक्रवाकी ।

आवेपते भ्रमति सर्पति मोहमेति
कान्तं विलोकयति कूजति दीनदीनम् ।

अस्तं हि भानुमति गच्छति चक्रवाकी
हा जीवतोपि मरणं प्रियविप्रयोगः ॥ १ ॥ कस्यचित् ।
न कुरु काकुरुतैर्विकलं शुचो-
जहिहि पालय बालकुटुम्बिनम् ।
सखि रथाङ्गकुटुम्बिनि तद्विधे
व्यतिकरे किमिदं परिभाव्यते ॥ २ ॥ गोसोकस्य ।
पक्षावुत्क्षिपति क्षितौ निपतति क्रोडं नखैरुल्लिख-
त्युद्ग्रीवेण च चक्षुषा सहचरं ध्यात्वा मुहुर्वीक्षते ।
चक्राङ्गी दिवसावसानसमये तत्तत्करोत्याकुला
येनालोहितमण्डलोपि कृपया यात्येष नास्तं रविः ॥ ३ ॥
साहसाङ्कस्य ।
एकेनार्कं हुतवहशिखापाटलेनास्तसंस्थं
पश्यत्यक्ष्णा सजलललितेनापरेण स्वकान्तम् ।
अह्नश्छेदे दयितविरहाशङ्किनी चक्रवाकी
द्वौ संकीर्णौ रचयति रसौ नर्तकीव प्रगल्भा ॥ ४ ॥ मधोः ।
सूर्ये चास्तमुपागते कमलिनीषण्डे च निद्रालसे
चक्री कान्तवियोगदुःसहशिखिज्वालावलीताडिता ।
प्रत्युत्कूजति मूर्छति श्वसिति च व्याघूर्णते ताम्यति
भ्राम्यत्युद्भ्रमति क्षमामिव निजप्राणान्मुहुर्निन्दति ॥ ५ ॥
धर्मपालस्य ।

## १६ दिशः ।

अमरयुवतिगीतोद्ग्रीवमारङ्गशृङ्गो-
ल्लिखितशशिसुधाम्भःशाद्वलारामरम्याम् ।
सुरपतिगजगण्डस्रंसिदानाम्बुधारा-
प्रसवसुरभिमाशां वासवीयां नमामि ॥ १ ॥ उमापतिधरस्य ।
सेयं मेकलमेखलानि[illegible]दलद्वीचीनदन्नर्मदा
केषां नाम न लोच[illegible]यायोर्दिग्दक्षिणा प्रीणनम् ।
काञ्चीपत्तनकामिनीन[illegible]योरावर्जिता विभ्रमै-
रध्वन्याः क्व वापरे मुनिरतोऽगस्त्योपि नावर्तते ॥ २ ॥
[illegible]कस्य ।
वेलाशै[illegible]लशिलाशालूकमज्जत्पयो-
वाहव्यूहवराहविभ्रमवती प्रीणाति दिग्वारुणी ।
अस्यां कुड्मलयन्करान्परिहरन्नाशास्त्यजन्पद्मिनी-
र्बिभ्रत्का[illegible]नरागमम्बरमणिः सर्वात्मना लीयते ॥ तस्यैव

अस्तु स्वस्त्ययनाय दिग्धनपतेः कैलासशैलाश्रय-
श्रीकण्ठाभरणेन्दुविभ्रमदिवानक्तंभ्रमत्कौमुदी ।
यत्रालं नलकूवराभिसरणारम्भाय रम्भास्फुट-
त्पाण्डिम्नेव तनोस्तनोति विरहव्यग्रापि वेशग्रहम् ॥ ४ ॥

जयदेवस्य ।

प्राचीमभ्रेभकुम्भस्तनकलसलसन्मौलिकामिन्द्रपत्नीं
श्रीखण्डक्षोदलेखा दरखचितमुखीं कालकान्तामवाचीम् ।
संध्यासिन्दूरमुग्धामुदकपरिवृढप्रेयसीं च प्रतीचीं
वन्दे यक्षेन्द्रजायां तरलसुरसरित्तारहारामुदीचीम् ॥ ५ ॥

जलचन्द्रस्य ।

## १७ देशः ।

पर्णं नागरखण्डमार्द्रसुभगं पूगीफलं फालयः
कर्पूरस्य च यत्र कोपि चतुरस्ताम्बूलयोगक्रमः ।
देशः केरल एष केलिसदनं देवस्य शृङ्गारिण-
स्तं दृष्ट्वा कुरु कोमलाङ्गि सफले द्राघीयसी लोचने ॥ १ ॥

राजशेखरस्य ।

वाक्सत्त्वाङ्गसमुद्भवैरभिनयैर्नित्यं रसोल्लासतो
वामाङ्ग्यः प्रणयन्ति यत्र मदनक्रीडामहानाटकम् ।
अत्रान्ध्रास्तव दक्षिणेन त इमे गोदावरीस्रोतसां
सप्तानामपि वारिधिप्रणयिनां द्वीपान्तरालिश्रिताः ॥ २ ॥

तस्यैव ।

यत्क्षेमं त्रिदिवाय वर्त्म निगमस्याङ्गं च यत्सप्तमं
स्वादिष्ठं च यदैक्षवादपि रसाद्यल्लुब्ध यद्वाङ्मयम् ।
तद्यस्मिन्मधुरं प्रसादि रसवत्कान्तं च काव्यामृतं
सोयं सुभ्रु पुरोविदर्भविषयः सारस्वती जन्मभूः ॥ ३ ॥

एतन्मालवमण्डलं विजयते सौ[illegible]ः
संपद्विभ्रमधामभिः किमपरं शृङ्गारसारैर्जनैः ।
यत्रारुह्य विचित्रचित्रवडभीर्लीलाशिलासद्मनां
नीयन्ते जलदोदयेषु दिवसाः कान्तासखैः कामिभिः ॥ ४ ॥

तस्यैव ।

क्रीडत्किंनरकामिनीविहसितज्योत्स्नावलक्षीकृताः
कस्तूरीमददुर्दिनार्द्रसुरभीः प्राग्ज्योतिषीया भुवः ।
नीहारस्थलसंचरिष्णुचमरीलाङ्गूलसंमार्जनी-
हेलोन्मृष्टनमेरुपुष्परजसो द्रष्टुं समीहामहे ॥ ५ ॥ वसुक[illegible]स्य ।

## १८ वीरः ।

याते कार्मुकविद्यया परिभवं सार्धं गणानां गणैः
षड्वक्त्रे समयं विलङ्घ्य जयिनीमुद्दिश्य शार्ङ्गि स्थिते ।
हस्तोदस्तपरश्वधः स्वशपथैर्यः स्तम्भितः शम्भुना
विश्वे पश्यत कौतुकं भृगुपतेस्तस्यैव रामोऽङ्कुशः ॥ १ ॥
शिह्लणस्य ।

धात्रीमेकातपत्रां समिति कृतवता चण्डदोर्दण्डदर्पा-
द्वाःस्थाने पादनम्रप्रतिभटमुकुटादर्शबिम्बोदरेषु ।
उत्क्षिप्तच्छत्रचिह्नं प्रतिफलितमपि स्वं वपुर्वीक्ष्य किञ्चित्
सासूयं येन दृष्टाः क्षितितलविलसन्मौलयो भूमिपालाः ॥२॥
जयदेवस्य ।

साधुम्लेच्छनरेन्द्र साधु भवतो मातैव वीरप्रसू-
र्नीचेनापि भवद्विधेन वसुधा सुक्षत्रिया वर्तते ।
देवे कुप्यति यस्य वैरिपरिषन्माराङ्कमल्ले पुरः
शस्त्रं शस्त्रमिति स्फुरन्ति रसनापत्रान्तराले गिरः ॥ ३ ॥
उमापतिधरस्य ।

आ लङ्कानाथनारीस्तनतरलपयोवीचिमुद्रात्समुद्रा-
दा स्वर्गङ्गातरङ्गावलिविरलशिलादुस्तरादुत्तराद्रेः ।
आ प्राक्शैलासुरस्त्रीसुरतगतिविदो मग्नभास्वन्मृगाङ्का-
दा च प्राचेतसाब्धेर्भवतु मम पुरः कोपि यद्यस्ति वीरः ॥ ४ ॥
तस्यैव ।

इह विजयिनि वंशे कीर्तिधाराकलाप-
स्नपितसकललोकः श्रीयशोविग्रहोऽभूत् ।
जलघट इव युद्धोत्तालभूपालदर्प-
ज्वलनशमनलीलाकोविदः कोपि वीरः ॥ ५ ॥ विश्वेश्वरस्य ।

## १९ धनुर्भङ्गः ।

रामे रुद्रशरासनं तुलयति स्मित्वा स्थितं पार्थिवैः
शिञ्जासज्जनतत्परे च हसितं दत्त्वा मिथस्तालिकाम्
आरोप्य प्रचलाङ्गुलीकिसलये म्लानं गुणास्फालने
स्फाराकर्षणभग्नपर्वणि पुनः सिंहासने मूर्च्छितम् ॥ १ ॥
राजशेखरस्य ।

रुन्धन्नष्ट विधेः श्रुतीर्मुखरयन्नष्टौ दिशः क्रोडय-
न्मूर्त्तीरष्ट महेश्वरस्य दलयन्नष्टौ कुलक्ष्माभृतः ।

तान्यक्ष्णा वधिराणि पन्नगकुलान्यष्टौ च संपादय-
न्नुन्मीलत्ययमार्यदोर्बलचलत्कोदण्डकोलाहलः ॥ २ ॥ मुरारेः ।
दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत-
टङ्कारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः ।
द्राक्पर्यस्तकपालसंपुटमिलद्ब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ॥ ३ ॥
भवभूतेः ।
यद्भ्रान्तः कठोरं त्रिपुरविघटनाख्यातिविख्यातवीर्यं
छिन्दद्दर्पं भुजानां दशमुखजयिनः कार्तवीर्यार्जुनस्य ।
जीवाकृष्टैरिवार्तैर्मृडमृडनिनदैरिष्टदेवं स्मरत्त-
द्रामेणोदारधाम्ना धनुरमितबलं भग्नमर्धेन्दुमौलेः ॥ ४ ॥
सरसीरुहस्य ।
उत्क्षिप्तं सह कौशिकस्य पुलकैः सार्धं मुखैर्नामितं
भूपानां जनकस्य संशयधिया साकं समास्फालितम् ।
वैदेहीमनसा समं च सहसाकृष्टं ततो भार्गव-
प्रौढाहंकृतिकन्दलेन सहितं तद्भग्नमैशं धनुः ॥ ५ ॥ गदाधरस्य ।

## २० हनुमदादि शौर्यम् ।

वक्तीति वानरबलानि हसन्हनूमा-
न्मद्रोमवल्लिषु दृढं कुरुतावलम्बम् ।
येनैव सागरमहं लघु लंघयामि
किं सेतुना समरकर्मणि वो नयामि ॥ १ ॥ राजशेखरस्य ।
नीलेन सैन्यपतिना प्रभुताडनान्ते
मुक्तस्तथा किलकिलाध्वनिरेष रौद्रः ।
अद्यापि वाञ्छति सरोजभवः श्रवांसि
शङ्के यथा करयुगेन मुधा पिधातुम् ॥ २ ॥ तस्यैव ।
कियानेष क्षाराम्बुधिरयममुष्याम्बुनिवहो
न कुम्भेनाप्यस्यात्मजकरपुटेनैव तुलितः ।
भवद्भिः सप्तैते ननु कपिचमूचक्रपतयः
सहेलं पीयन्तां चुलुकचुलुकैरम्बुनिधयः ॥ ३ ॥ गोसोकस्य ।
भुजस्तम्भैरेभिः परिघगुरुभिर्लुण्ठतहठा-
द्यशांसि स्वच्छन्दं रणविपणिपण्यानि कपयः ।
असाध्यं स्यादेतद्यदि च तदमीषामकृपणाः
क्रये सन्त्येवामीलिखितपठिता मूल्यमसवः ॥ ४ ॥ तस्यैव ।

मूर्ध्ना जाम्बवतोभिवाद्य चरणावापृच्छ्य सेनापती-
नाश्वास्याश्रुमुखान्मुहुः प्रियसखान्प्रेष्यान्समादिश्य च ।
आरम्भं जगृहे महेन्द्रशिखरादम्भोनिधेर्लङ्घने
रंहस्वी रघुनाथपादरजसामुच्चैः स्मरन्मारुतिः ॥५॥ अभिनन्दस्य ।

## २१ रावणः ।

दोर्दण्डास्त इमे त्रिलोचनगिरेरुत्तम्भसंभाविता-
स्तान्येतानि (मुखाम्बुजानि) दशभिर्दिग्भिर्यदाज्ञा कृता ।
यस्याद्यापि स एव वीर्यमहिमा तस्मिन्नरस्तापसः
शोच्यः सोपि रिपुः सचैव कुपितस्तस्यापि दूतः कपिः ॥ १ ॥
कस्यचित् ।

धन्यः श्रीदशकन्धरः परमयं रक्षोगणग्रामणी-
रेषा सा निकषा परं तनयसूर्यस्याः सुतो रावणः ।
द्वारे निर्जरशेखरार्चितपदद्वन्द्वाश्चिरं वृत्रहा
यस्य स्थानविलम्बकारणकथा ताम्यन्मनास्तिष्ठति ॥ २ ॥
कस्यचित् ।

रुद्रादेस्तुलनं स्वकण्ठविपिनच्छेदी हरेर्वासनं
कारावेश्मनि पुष्करस्य च जयो यस्येदृशः केलयः ।
सोहं दुर्गमबाहुदण्डसचिवो लङ्केश्वरस्तस्य मे
का श्लाघा गुणजर्जरेण धनुषा कृष्टेन भग्नेन वा ॥३॥ कस्यचित् ।

भग्नं भग्नमुमापतेरजगवं बाली क्षतश्च क्षत-
स्तालाः सप्त हता हताश्च जलधिर्बद्धश्च बद्धश्च सः ।
आः किं तेन सशैलसागरधराधारोरगेन्द्रास्पदं
सार्द्रिं रुद्रमुदस्यतो निजभुजाआनात्यसौ रावणः ॥४॥ कस्यचित् ।

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ।
धिग्धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमोभिर्भुजैः ॥ ५ ॥
कस्यचित् ।

## २२ रावणशिरश्छेदः ।

कण्ठच्छेदविशीर्यमाणरुधिरप्राग्भारभग्नद्युते-
र्येन स्मेरमुखेन होमशिखिनः संधुक्षणाकाङ्क्षिणा ।
भ्रूभङ्गः शितिकण्ठकण्ठफणिने फूत्कारहेतोः कृतः
शौटीर्यव्रतनुष्टधूर्जटिरसौ किं वर्ण्यते रावणः ॥ १ ॥ कस्यचित् ।

स्वसत्त्वस्योद्रेकादपि दश शिरांसि स्वयमयं

सकृच्छित्त्वा छित्त्वा भुजपरिघमृष्टासृगभितः।
मुखानां स्मेराणां सरभसविकाशादुदयिनां
किमद्राक्षील्लक्ष्मीं पतितपतितानां निपतताम् ॥ २ ॥ कस्यचित्।
निस्त्रिंशप्रतिबिम्बितेपि यदुरःकम्पो न वीरव्रत-
प्रौढिः सेति न चन्द्रहासमधुनोत्कण्ठच्छिदा पर्वणि।
जूहुषुः स्वशिरांसि शंकरपुरोहाकारवैरेण यः
स्वाहाकारमुदाहरन्न स दशग्रीवो गिरां गोचरः ॥ ३ ॥ कस्यचित्।
श्रीकण्ठस्य पुरः परस्परबलाधिक्षेपकक्षावतां
बाहूनां दशकद्वयं दशशिरश्छेदे विवादाकुलम्।
प्रत्येकं शमयत्यसावभिमतव्याक्षेपसापत्रप-
श्छिन्धि त्वं जुहुधि त्वमित्युपदिशन्नेकः परं रावणः ॥ ४ ॥
कस्यचित्।
लूनेपश्च ततश्चतुष्टयमिति स्रक्संनिवेशैः शिरः-
पद्मैरन्यतमावलोकनमितैरुच्छालितैरर्चितः।
हस्तस्पर्शवशेन मूर्ध्नि दशमं मूर्धानमध्यासय-
ञ्शम्भोरुद्धतसाहसैकरसिकः केन स्तुतो रावणः ॥ ५ ॥
छित्तपस्य।

## २३ दूतः।

एकस्मिन्नवपातितेपि शिरसि क्रोधोपशान्तिः कुतः
.........यास्वमूर्धपतनं दृष्टं न यत्रारिणा।
एतन्मूर्धबहुत्वतः फलमिदं त्वत्तो मया लप्स्यते
छिन्नं छिन्नमवेक्ष्य राक्षसपते यस्माद्धसूंस्त्यक्ष्यसि ॥१॥ कस्यचित्।
अज्ञानाद्यदि वाधिपत्यरभसादस्मत्परोक्षे हृता
सीतेयं प्रतिमुच्यतां शठ मरुत्पुत्रस्य हस्ते द्रुतम्।
नो चेल्लक्ष्मणमुक्तमार्गणगणच्छेदोच्छलच्छोणित-
च्छत्रच्छन्नदिगन्तमन्तकपुरं पुत्रैर्वृतो यास्यसि ॥ २ ॥ कस्यचित्।
रेवाम्भोगर्भमज्जद्विविधवरवधूहस्तयन्त्रोत्थिताभिः
क्रीडन्स्वच्छन्दमद्भिः स्मरसि यदकरोदर्जुनः कार्तवीर्यः।
तद्दोष्णां यच्च रामो रणभुवि विदधे वेगवल्गत्कुठारः
प्रायः पौलस्त्य सा ते श्रवणपरिगता किं न वार्तेति विद्मः ॥ ३ ॥
कस्यचित्।
कुले पौलस्त्यानां न निजममलं जन्म कलितं
बहोः कालान्नालांचितमतुलमुच्चैः स्वमयशः।
प्रसूनं पुष्पेषोः शरमसहता किं च भवता

स पत्री सौमित्रेरशनिसहधर्मा न गणितः ॥ ४ ॥ गोसोकस्य ।
शिरोभिर्मा देवीः शिव इव न ते दास्यति पुन-
र्दशं दध्याः सेतावधिजलधि कैलाससुभटः ।
हितं तन्मूर्धन्यां मम जनकदोर्दण्डविजय—
स्फुरत्कीर्तिस्तम्भ त्यज कमलबन्धोः कुलवधूम् ॥ ५ ॥
गदाधरस्य ।

## २४ संवादानुवादः ।

द्यामालोकयतां कलाः कलयतां छायाः समाचिन्वतां
क्लेशः केवलमङ्गुलीर्दलयतां मौहूर्तिकानामयम् ।
धन्या सा रजनी तदेव सुदिनं धन्यः स एव क्षणो
यत्राज्ञातचरश्चिरान्नयनयोः सीमानमेति प्रियः ॥ १ ॥ वसुधरस्य ।
तेषां त्वं निधिरागसामसहना मानोन्नता साप्यतो
गन्तव्यं भवता न तद्गृहमिति त्वं वार्यसे यासि चेत् ।
गाढं मेखलया बलान्नियमितः कर्णोत्पलेनाहतः ।
क्षिप्तः पादतले तदेकशरणो मन्ये चिरं स्थास्यति ॥२॥ छित्तपस्य ।
जाने साऽसहना तथाहमसकृन्मरयङ्गणस्थे पुन-
स्तस्याः संभविता स साध्वसरसः कोपि प्रकोपापहः ।
येनोद्यत्पुलकप्रकम्पविकलैरङ्गैः क कर्णोत्पलं
कुत्रात्मा क च मेखलेति गलितः प्रायः स मानग्रहः ॥ ३ ॥
वसुन्धरस्य ।
अन्या साधिगता त्वया क युवती यस्याः स मानग्रही
याते लोचनगोचरं प्रियतमे संप्रत्यपक्रामति ।
अस्माकं पुनरुग्रपुरुषशताश्लेषप्रगल्भात्मना-
मेतादृश्यनभिज्ञपूरुषपरिष्वङ्गे कुतः साध्वसम् ॥ ४ ॥
क्षित्तपस्य ।
अस्माभिः कलितं पुरा न भवती भुक्ता नृभिः कैरपि
प्रौढा मानवशालिनीति चलितं चेतः सकामं त्वयि ।
धिक् त्वां संप्रति सद्भुजङ्गजनतासंश्लेषमातन्वती
गम्या सर्वजनस्य वारवनितेवोत्क्षेपणीयासि नः ॥५॥ वसुन्धरस्य ।

## २५ कविः ।

त्रैलोक्यमुदरे विष्णोस्तादृगेव व्यवस्थितम् ।
तादृगन्यादृगप्यस्ति हृदये तु महाकवेः ॥ १ ॥ वसुकल्पस्य ।
यन्नेत्राख्निभिरीक्षते न गिरिशो नाष्टाभिरप्यब्जभूः

स्कन्दो द्वादशभिस्तथा न मघवा चक्षुःसहस्रेण यत् ।
संभूयापि जगत्त्रयस्य नयनैर्द्रष्टुं न यत्पार्यते
प्रत्याहृत्य दृशौ समाहितधियः पश्यन्ति तत्पण्डिताः ॥ २ ॥
शालिकनाथस्य ।

उदन्वच्छन्ना भूः स च पतिरपां योजनशतं
सदा पान्थः पूषा गगनपरिमाणं कलयति ।
इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः ।
सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥ ३ ॥ राजशेखरस्य ।
निदानं विद्यानां कुलगृहमपारस्य यशसः ।
कलासंपद्रत्नव्रततिविटपानां सुरतरुः ।
शुचिक्षौणीन्द्राणां सुचरितकथादर्पणतलं
प्रकृत्या गम्भीरः कविरिति हि शब्दो विजयते ॥४॥ कस्यचित् ।

॥ ५ ॥

## २६ नानाकवयः ।

बाणः सृष्टिमपूर्ववस्तुविषयामेकोत्र निर्व्यूढवा-
न्निष्णातः कविकुञ्जरेन्द्रचरिते मार्गे गिरां वा गुरुः ।
वेधाविन्ध्यपुलिन्दपामरवधूभूगोलझञ्झानिल-
प्रायेर्थे वचनानि पल्लवयितुं जानाति योगेश्वरः ॥ १ ॥
भवानन्दस्य ।

अस्तंगतभारविरवि कालवशात्कालिदासविधुविधुरम् ।
निर्वाणबाणदीपं जगदिदमद्योति रत्नेन ॥ २ ॥ भोजदेवस्य ।
बाणः प्राणिति केशटः स्फुटमसौ जागर्ति योगेश्वरः
प्रत्युज्जीवति राजशेखरगिरां सौरभ्यमुन्मीलति ।
मेनायं कलिकालपुष्पधनुषो देवस्य शिक्षावशा-
दाकल्पं वसुकल्प एव वचसि प्रागल्भ्यमभ्यस्यति ॥ ३ ॥
वसुकल्पस्य ।

उन्नीतो भवभूनिता प्रतिपदं बाणे गते यः पुरा
यश्चीर्णः कमलायुधेन सततं येनागमत्केशटः ।
यः श्रीवाक्पतिराजपादरजसां संपर्कभूतिश्चिरं
दिष्ट्या श्लाघ्यगुणस्य कस्यचिदसौ मार्गः समुन्मीलति ॥ ४ ॥
अभिनन्दस्य ।

सुबन्धौ भक्तिर्नः क इह रघुकारे न रमते
धृतिर्दाक्षीपुत्रे हरति हरिचन्द्रोपि हृदयम् ।
विशुद्धोक्तिः शूरः प्रकृतिमधुराभारविगिर-
स्तथाप्यन्तर्मोदं कमपि भवभूतिर्वितनुते ॥ ५ ॥ कस्यचित् ।

## २७ प्रत्येककविः ।

विकचकुमुद क्रोड क्रीडन्मधुव्रतझांकृते-
र्मदकलकुहूकण्ठोत्कण्ठाविपाञ्चितपञ्चमात् ।
अभिनववधूप्रेमालापादपि श्रुतिसंमदं
विदधति कवेर्दङ्कस्यैताः सुधामधुरा गिरः ॥१॥ टङ्कस्य
प्रयोगव्युत्पत्तौ प्रतिपदविशेषार्थकथने
प्रसत्तौ गाम्भीर्ये रसवति च काव्यार्थघटने ।
अगम्यायामन्यैर्दिशि परिणतेरर्थवचसो-
र्मतं चेदस्माकं कविरमरसिंहो विजयते ॥२॥ शालिकनाथस्य ।
पातुं कर्णरसायनं रचयितुं वाचः सतां संमता-
व्युत्पत्तिं परमामवाप्तुमवधिं लब्धुं रसस्रोतसः ।
भोक्तुं स्वादु फलं च जीविततरोर्यद्यस्ति ते कौतुकं
तद्भ्रातः शृणु राजशेखरकवेः सूक्तीः सुधास्यन्दिनीः ॥३॥ शङ्कार्णवस्य
धिग्धिक् तान्समयान्परिश्रमरुजो वक्तुं गिरा नीरसा-
यत्रामूर्तिपतन्ति वल्लणगुणोत्खातामृतप्रीतयः ।
रोम्णां नृत्यभुवो विलोचनपयः पूराब्धिचन्द्रोदयाः
साहित्यप्रतिगाडगर्वगलनं ग्लानिक्रियाहेतवः ॥ ४ ॥ वल्लणस्य ।
देवीं वाचमुपासते हि बहवः सारं तु सारस्वतं
जानीते नितरामसौ गुरुकुलाक्लिष्टो मुरारि कविः ।
अब्धिर्लङ्घित एव वानरभटैः किं त्वस्य गम्भीरता-
मापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः ॥५॥ मुरारेः ।

## २८ मनस्विकविः ।

विन्यस्ता विकचप्रसूनघटनाचार्येण कण्ठाचिता
मालेयं भुजगभ्रमेण भवता जन्मान्ध किं धूयते ।
एतस्याः क्षतिरस्तु नाम कियती संवीतहासोद्गमा
स्त्वामन्योन्यकरार्पणप्रणयिनः पश्यन्ति विश्वे जनाः ॥ १ ॥
जलचन्द्रस्य ।
अवधेहि क्षणमेहि भ्रातर्भावक भावय गिरं नः ।
चरमे चकास्ति चेतसि मूकस्वप्नोपमो भावः ॥२॥ गोसोकस्य ।

स्तम्भाव श्रेहि निमिषं पठामि सूक्तीः स्वचित्तनिर्वृतये ।
मा बुध्यस्व न तावद्धागुल्काभिः कदर्थयसि ॥ ३ ॥ वल्लणस्य ।
श्रीमद्भिर्द्रविणव्ययव्यतिकरक्लेशादवज्ञायसे
द्वेषाम्भःपरिपूर्णकर्णकुहरैर्नाकर्ण्यसे सूरिभिः ।
इत्थं व्यार्थितवाञ्छितेषु हि मुधैवास्मासु किं खिद्यसे
मातः काव्यसुधे कथं क्व भवतीमुन्मुद्रयामो वयम् ॥ ४ ॥
तस्यैव ।
अर्वाचीनवचःप्रपञ्चसुखिनां दुःशिक्षितानां पुरो
गम्भीरं कविपुङ्गवस्य किमहो सर्वस्वमुद्घाट्यते ।
व्यर्थं कर्दमगन्धगौरवहतग्रामीणगोष्ठीमुखे
कोयं नाम सचेतनोस्ति य इह प्रस्तौति कस्तूरिकाम् ॥ ५ ॥
तस्यैव ।

## २६ कविदानम् ।

निष्पन्ने सति चन्द्रचूडचरिते तत्तन्नृपप्रक्रिया-
जातैः साङ्केमरातिराजकशिरोरत्नावलीनां त्रयम् ।
तप्तस्वर्णशतानि विंशतिशतीरूप्यस्य लक्षत्रयं
ग्रामाणां शतमन्तरङ्गकवये चाणक्यचन्द्रो ददौ ॥ १ ॥ उमापतेः ।
दन्तिव्यूहं कनककलितं चामरे हेमदण्डे
यो गौडेन्द्रादलभत कविक्ष्माभृतां चक्रवर्ती ।
ख्यातो यश्च श्रुतिधरतया विक्रमादित्यगोष्ठी-
विद्याभर्तुः खलु वररुचेराससाद प्रतिष्ठाम् ॥ २ ॥ धोयीकस्य ।
कनककुण्डलमण्डितभाषिणे शकरिपुर्विषयान्दश विद्विषः ।
मगधकेकयकेरलकोशलान्करिशतं च मदालसलोचनम् ॥ ३ ॥
अमरोः ।
अमुष्मै चौराय स्वरसहतमृत्युप्रतिभिये
प्रभुः प्रीतः प्रादादुपहतवसादद्वयकृते ।
सुवर्णानां कोटीर्दश दशनकोटिक्षतगिरी-
न्करीन्द्रानप्यष्टौ मदमुदितगुञ्जन्मधुलिहः ॥ ४ ॥ तस्यैव ।
श्लोकोयं हरिषाभिधानकविना देवस्य तस्याग्रतो
यावद्यावदुदीरितः शकवधूवैधव्यदीक्षागुरोः ।
तावत्तावदुपोढसान्द्रपुलकस्तस्मै स देवो ददौ
लक्षं लक्षमखण्डितं मधुकरव्यालोलगण्डान्गजान् ॥ ५ ॥
तस्यैव ।

## ३० गुणिगर्वः ।

षट् तर्कानपि शब्दशासनमपि स्थाने स्थितं पञ्चभि-
र्मीमांसाद्वयमप्यनन्यसदृशीं साहित्यविद्यामपि ।
विद्मः किं च महाविकल्पबहुलज्वालावलीतापिते-
ष्वास्माकेषु न जल्पवह्निषु पुनः कैः कैः पतङ्गायितम् ॥ १ ॥
तपस्विनः ।

तावत्तार्किकचक्रवर्तिपदवी तावत्कवीनां गिर-
स्तावच्चाप्रतिमल्लतामदभरः साहित्यपाण्डित्ययोः ।
यावन्न प्रतिपर्व निर्भरसुधानिर्व्याजबीजं क्षणा-
द्वाग्वल्ल्यो विलसन्ति कर्णकुहरे श्रीदेवबोधेरिताः ॥ २ ॥
देवबोधस्य ।

बिन्दुद्वन्द्वतरङ्गिताग्रसरणिः कर्ता शिरोबिन्दुकं
कर्मेत्यन्वयकल्पनां विदधते ये केऽपि तेभ्यो नमः ।
ये तु ग्रन्थसहस्रशाणकषणत्रुट्यत्कलङ्कैर्गिरा-
मुल्लासैः कवयन्ति वल्लणकविस्तेष्वेव संनह्यते ॥ ३ ॥ वल्लणस्य ।

यथा यूनस्तद्वत्परमरमणीयापि रमणी
कुमाराणामन्तःकरणहरणं कैव कुरुते ।
मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः
किमस्या नाम स्यादरसपुरुषानादरभरैः ॥ ४ ॥ श्रीहर्षस्य ।

सर्वस्वं गृहवर्त्ति कुन्तलपतिर्गृह्णातु तन्मे पुन-
र्भाण्डागारमखण्डमेव हृदये जागर्ति सारस्वतम् ।
भोः क्षुद्रास्त्यजत प्रमोदमचिरादेष्यन्ति मन्मन्दिरं
हेलान्दोलितकर्णतालकरटिस्कन्धाधिरूढाः श्रियः ॥ ५ ॥
बिह्लणस्य ।

## ३१ वाणी ।

सुवर्णालङ्कारा प्रकटितरसाश्लेषनिपुणा
स्फुरद्वैदर्भोक्तिर्ललितपदबन्धक्रमगतिः ।
लसद्भूयोभावा मृदुरपि विमर्दोचिततनुः
कवीन्द्र त्वद्वाणी हरति हरिणाक्षीव हृदयम् ॥ १ ॥ साकोकस्य ।

घनरसमयी गभीरा वक्रिमसुभगोपजीविता कविभिः ।
अवगाढा च पुनीते गङ्गा वङ्गालवाणी च ॥ २ ॥ वङ्गालस्य ।

वाणी व.सुरलोकं [illegible]पिदेवि तत्रैव ।
संप्रतिकाव्यपरिश्रमवधिरैरवधीरणां यासि ॥ ३ ॥
त्रिपुरारिपालस्य ।

पिपासुः पीयूषं त्वमसि सरसस्वादुमधुराः
श्रुतिभ्यामश्रान्तः पिब मधुरमृद्वीः कविगिरः ।
अथैताः संतोषं विदधति न चेच्चेतसि ततः
सुधापि स्यान्मन्ये पृथुवमथुलाभाय भवतः ॥ ४ ॥ धञ्जोकस्य ।
इयं गौरुद्दामा तव निबिडबन्धापि हि कथं
नवैदर्भादन्यच्चरति सुलभत्वेपि हि कथम् ।
अबन्ध्या च ख्याता भुवि कथमगम्या कविवृषैः
कथं वा पीयूषं स्रवति वद दुग्धापि कविभिः ॥ ५ ॥
शब्दार्णवस्य ।

## ३२ काव्यम् ।

यदेतद्वागर्थव्यतिकरमयं किंचिदमृतं
तदानन्दस्यन्दैः सहृदयमनांसि स्नपयति ।
इदं काव्यं तत्त्वं स्फुरति तु यदत्रानुपरमं
तदन्तर्बुद्धीनां स्फुटमथ च वाचामविषयः ॥ १ ॥ हृषीकेशस्य ।
कवलयति न चेतस्तस्य दारिद्र्यदुःखं
न च पिशुनजनोक्तिः कर्णकण्डूं करोति ।
वरकविकृतगोष्ठीबन्धगन्धोपभोगे
य इह मधु वमन्तीं काव्यचिन्तां करोति ॥ २ ॥ व्याडेः ।
एतत्कवीन्द्रमुखचन्द्रमसः कदाचि-
त्काव्याभिधानममृतं यदि नागलिष्यत् ।
संसारिणां विविधदुःखसहस्रभाजां
चेतोविनोदसदनं किमिहाभविष्यत् ॥ ३ ॥ सुरभेः ।
ते वर्णाः समदक्रमास्तदभिधावैदग्ध्यमव्याहतं
गुम्फः कोपि सपक्त्रिमः सहृदयास्वाद्यो रसः कोप्यसौ ।
हे सभ्याः परिभाव्य मादृशकृतीर्ब्रूत क्वचिन्निष्कृतं
किं तत्रास्त्यपरं पुरातनकवेर्येनैष कोलाहलः ॥ ४ ॥ गोसोकस्य ।
अनुद्घुष्टः शब्दैरथ च घटनात्प्रस्फुटरसः
पदानामर्थात्मा रमयति ननूत्तानितरसः ।
यथा किंचिद्दृश्यः पवनचलचीनांशुकतया
स्तनाभोगः स्त्रीणां हरति न तथोन्मुद्रितवपुः ॥ ५ ॥
धर्माशोकस्य ।

## ३३ काव्यमात्सर्यम् ।

वायूद्वारगतिस्ततः परिणतिः सृष्टेरहो कौशलं
वायुश्लोक इहैव सन्ति सकलाः काव्यस्य नैते गुणाः ।

कस्यायं मम हुं तवैव शृणुमः सम्यक् पुनः पठ्यतां
जानामि स्फुटता च नास्ति भणितं चान्यैः पुराणं पठ ॥ १ ॥
कस्यचित् ।

द्राक्षापाकविडम्बिनीमपि गिरं मात्सर्यदाहज्वरा-
न्नाचामन्ति मनागरोचकपराधीना: कियन्तो जना: ।
आकण्ठं परिपीय सत्कविगवीपीयूषमन्ये पुन-
र्नो माद्यन्ति यशःशरीरपिशितत्रासाय बद्धस्पृहा: ॥ २ ॥
जलचन्द्रस्य ।

भ्राम्यन्ती कुतुकावलम्बितमना: सारस्वतानाश्रमा-
नस्मै वाणि विधेहि दुर्जनमरुस्थानाय दूरे नमः ।
न प्राणन्ति यदर्पणादिह गुणा: कामं यशोवल्लय:
खिद्यन्ते सरसापि सत्यविरसस्रोतस्वती सीदति ॥ ३ ॥ तस्यैव ।
क्व रसिकरसदा रसालवल्ली क्व च रसकण्टकसंकटोयमध्वा ।
रचयसि रुचिराणि वाणि मोहादिह सुकुमारपदानि हा हतासि ॥४॥
रामदासस्य ।

ईषन्नासानिकोचः खरमुखरमुखप्रेक्षणं हासलेशः
स्वाबोधादप्रसादध्वननमसदवद्योक्तिहेलावहेला ।
मौनव्यासङ्गवार्तान्तरपररुचिरश्लोकपाठादयस्ते
सोढव्या: के कियन्त:शिव शिव कवि ते कुच्छला मत्सराणाम् ॥५॥
कविपण्डितश्रीहर्षस्य ।

## ३४ काव्यचौरः ।

धन्यास्ते भुवनं पुनन्ति कवयो येषामजस्रं गवा-
मुद्दामध्वनिपल्लवेन परितः पूता दिशां भित्तय: ।
धिक्तान्निःस्वविलासिनः कविखलांल्लोकद्वयद्रोहिणो
नित्याकम्पितचेतसः परगवीदोहेन जीवन्ति ये ॥ १ ॥
जलचन्द्रस्य ।

बद्धो लम्बितचूडमञ्जलिरयं वाणि क्षमस्वामृतं
न ब्रूमस्त्वयि देवभावसुलभं न द्योतते तन्महः ।
स्याच्चेदीषदपि प्रसह्य रसनाटङ्कैः कथं खण्डश-
श्छिन्दन्तो भवतीं कवीन्द्रघटितां जीवन्त्यमी दस्यवः ॥ २ ॥
वैद्यस्य ।

निःशङ्कं हर काञ्चनान्यनिभृतं दारान्गुरोः शीलय-
स्वच्छन्दं पिब वारुणीं जहि निरातङ्कं द्विजानां कुलम् ।
तैस्तैः पातकिभिः समं वस सुखं मा सत्कवीनां कृथा-

स्तेयं सूक्तिनिधानसद्मनि दुरुच्छेदं हि तत्किल्बिषम् ॥ ३ ॥
तस्यैव ।
इयं गौरेका नः क्वचिदपि न संयोजनविधा-
वमुष्याः पश्यामोरसभरमुचः कांचिदपराम् ।
गले बद्धा दध्मो यदि न धृतिरुद्दामविधृतौ
भयं गोचारेभ्यस्तदिह क उपायः प्रभवतु ॥ ४ ॥ सेल्हुकस्य ।
हृत्कण्ठश्रुतिभूषणानि बहुशो भ्रातः सुवर्णान्यपि
स्वान्यस्माभिरुदाहृतानि विपणिस्थानेषु दैन्यान्न किम् ।
धिक्कर्माणि तुलैव नास्ति निकषग्रावानभानक्रमौ
न क्रेता न परीक्षकः परमभूदुच्चैर्भयं दुर्जनात् ॥ ५ ॥ जितारेः ।

## ३५ सज्जनः ।

अञ्जलस्थानि पुष्पाणि वासयन्ति करद्वयम् ।
अहो सुमनसां वृत्तिर्वामदक्षिणयोः समा ॥ १ ॥ गोभटस्य ।
अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ २ ॥ केशटस्य ।
सुजनो न याति वैरं परहितबुद्धिर्विनाशकालेपि ।
छेदेपि चन्दनतरुः सुरभयति मुखं कुठारस्य ॥ ३ ॥
श्रीव्यासपादानाम् ।
असन्तो नाभ्यर्थ्याः सुहृदपि न याच्यस्तनुधनः
प्रियावृत्तिर्न्याय्या चरितमसुभङ्गेप्यमलिनम् ।
विपद्युच्चैःस्थेयं पदमनुविधेयं च महतां
सतां केनादिष्टं विषममसिधाराव्रतमिदम् ॥ ४ ॥ धर्मकीर्तेः ।
ये दीनेषु दयालवः स्पृशति यानल्पोपि न श्रीमदो
व्यग्रा ये च परोपकारकरणे हृष्यन्ति ये याचिताः ।
सुस्था सत्यपि यौवनोदयमहाव्याधिप्रकोपेपि ये
ते भूमण्डलमण्डनैकतिलकाः सन्तः कियन्तो जनाः ॥ ५ ॥
शब्दार्णवस्य ।

## ३६ दुर्जनः ।

एते स्नेहमया इति मा मा क्षुद्रेषु यात विश्वासम् ।
सिद्धार्थानामेषां स्नेहोप्यश्रूणि पातयाति ॥ १ ॥ गोभटस्य ।
कोर्थान्प्राप्य न गर्वितो भुवि जनः कस्यापदोस्तंगताः
स्त्रीभिः कस्य न खण्डितं भुवि मनः को नाम राज्ञां प्रियः ।
कः कालस्य न गोचरान्तरगतः कोर्थी गतो गौरवं

को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान् ॥ २ ॥

कस्यचित् ।

दूरादुच्छ्रितपाणिरार्द्रनयनः प्रोत्सारितार्धासनो
गाढालिङ्गनतत्परः प्रियकथाप्रश्नेषु दत्तोत्तरः ।
अन्तर्गूढविषो वहिर्मधुमयश्चातीव मायापटुः
को नामायमपूर्वनाटकविधिर्यः शिक्षितो दुर्जनैः ॥ ३ ॥

विन्दुशर्मणः ।

गुणोत्कर्षद्वेषात्प्रकृतिमहतामप्यसदृशं
खलः किंचिद्वाक्यं रचयति च विस्तारयति च ।
नचेदेषां तादृक्कमलकलिकार्द्धप्रतिनिधौ
मुनेर्गण्डूषेऽब्धिस्थित इति कुतोयं कलकलः ॥ ४ ॥ संघामित्रस्य।

शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥ ५ ॥ शिल्हणस्य ।

## ३७ सुजनदुर्जनौ ।

जीवन्तु साधुतरवः सुकृताम्बुसिक्ता
नश्यन्तु पङ्कपतिताः खलपांशवोपि ।
ये धारयन्त्यनुगतोपकृतिव्रतानि
यैः संनिधौ परगुणा मलिनीक्रियन्ते ॥ १ ॥ संकेतस्य ।

सत्सङ्गाद्भवति हि साधुता खलानां
साधूनां न तु खलसंगमात्खलत्वम् ।
आमोदं कुसुमभवं मृदेव धत्ते
मृद्गन्धं न तु कुसुमानि धारयन्ति ॥ २ ॥ प्रभाकरमित्रस्य ।

ये कारुण्यपरिग्रहादगणितस्वार्थाः परार्थं प्रति
प्राणैरप्युपकुर्वते व्यसनिनस्ते साधवो दूरतः ।
विद्वेषानुगमादनूर्जितकृपो रूक्षो जनो वर्तते
चक्षुःसंहरवाष्पवेगमधुना कस्याग्रतो रुद्यते ॥ ३ ॥

शिशुत्वव्यामोहात्कलयसि न चेत्त्वमनयो-
स्तदा स्तोकं ब्रूमः परिचिनु वचस्त्वं सदसतोः ।
सतां स्वान्तं यत्तन्मधुमधुरमन्तःकटु वहि-
र्वहिः स्वादुः स्वच्छं विषविषममन्तस्तदसताम् ॥ ४ ॥

जियोकस्य ।

आरम्भगुर्वी क्षयिणी क्रमेण

लघ्वी पुरा वृद्धिमती च पश्चात् ।
दिनस्य पूर्वार्धपरार्धभिन्ना
छायेव मैत्री खलसज्जनानाम् ॥ ५ ॥ वाचस्पतेः ।

३८ धन्यः ।

आम्यद्वालिशकीरपक्षहरितच्छायां वहिर्बिभ्रती-
मन्तर्दन्तुरपारिभद्रकलिकागर्भप्रभातस्करीम् ।
शुक्तिर्मारकतीव कुङ्कुमलसज्जम्बालपूर्णोदरा
वासालीसुकृतासनं प्रणयिनी चेलं मुखं चुम्बति ॥१॥ सेन्दूकस्य ।

विषयपतिरलुब्धो धेनुभिर्धाम पूतं
कतिचिदभिमतायां सीम्नि सीरा वहन्ति ।
शिथिलयति च भार्यानातिथेयीं सपर्या-
मिति सुकृतमनेन व्यञ्जितं नः फलेन ॥ २ ॥ शुभाङ्कस्य ।

धारानिपातरवबोधितपञ्जरस्थदात्यूहडम्बरकरम्बितकण्ठकूजाः ।
अट्टेषु काण्डपटचारितशीकरेषु धन्याः पिबन्ति मुखतामरसं बधूनाम् ३ ।
श्रीहनूमतः ।

शिलापट्टोद्घृष्टा मलयजरसालेपसुभगाः
स्फुरद्धूमामोदा दरदलितकर्पूरसुहृदः ।
इतः कम्बुच्छेदच्छविभिरहिवल्लीकिसलयै-
र्निषेवन्ते केपि क्रमुकफलफालीः सुकृतिनः ॥४॥ राजशेखरस्य ।

शिशुत्वं तारुण्यं तदनु च दधानाः परिणतिं
गताः पांशुक्रीडाविषयपरिपाटीरूपशमम् ।
लुठन्तोङ्के मातुः कुवलयदृशां पुण्यसरितां
पिबन्ति स्वच्छन्दं स्तनमधरमम्भः सुकृतिनः ॥५॥ श्रीहनूमतः ।

३९ उदात्तः ।

विमलमतिभिः कैरप्येतज्जगज्जनितं पुरा
विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा
इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते
कतिपयपुरस्वाम्ये पुंसां कएष मदज्वरः ॥ १ ॥ भर्तृहरेः ।

केनेन्दुः कुमुदेषु केन तरणिः पद्मेषु केनाम्बुदः
सारङ्गेष्वथ केन शाखिषु मधुर्दाक्षिण्यमध्यापितः ।
तत्तुङ्गाननुभूतसौरभपरीवारोपकारं प्रति
श्मश्रूद्भेजितकर्णजाहमनुजः कः प्रेरयत्वीश्वरान् ॥ २ ॥ शुङ्गौकस्य ।

भवन्ति नम्रास्तरवः फलोद्गमैर्नवाम्बुभिर्दूरविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम् ॥३॥
श्रीकालिदासस्य ।

यदालोकं कुर्वन्भ्रमति रविरश्रान्ततुरगः
सदालोकान्धत्ते यदगणितबाधा वसुमती ।
न सम्बन्धः किंतु प्रकृतिरियमेवं हि महतां
यदेते लोकानां परहितसुखैकान्तरसिकाः ॥ ४ ॥ मेधारुद्रस्य ।
धात्रीं धातुं वहति फणिनामग्रणीः कस्य शिक्षां
को वा ब्रूते तिमिरपटलप्लोषमह्नः प्रणेतुः ।
अद्रिश्रेणीमवति जलधिः केन दत्ताभ्यनुज्ञः
कर्म प्रायो भवति महतां स्वानुरूपं महिम्नः ॥ ५ ॥ भगीरथस्य ।

## ४० मनस्वी ।

मा खेदं भज हे विधुंतुद मुदं धेहि स्तुहि त्वं हरे-
स्तच्चक्रं विनिकृत्य दग्धमुदरं येनोत्तमाङ्गीकृतः ।
पश्यास्मानुदरंभरीनिह पराभूतान्निरस्ताहता-
न्विध्वस्तानववारितानधरितानेतान्धनाहंयुभिः ॥ १ ॥
वटेश्वरस्य ।

यदेते साधूनामुपरि मुखरा एव धनिनो
न सावज्ञैरेषामपि च निजवित्तव्ययभयम् ।
न वा क्लेशोमुष्मिन्नपरमनुकम्पैव भवति
स्वमांसत्रस्तेभ्यः क इह हरिणेभ्यः परिभवः ॥ २ ॥ भर्तृहरेः ।
शतं वा लक्षं वा नियुतमथ वा कोटिमथ वा
तृणायाहं मन्ये समयविपरीतं यदि भवेत् ।
शतं तल्लक्षं तन्नियुतमपि तत्कोटिरपि त-
द्यदात्तं सम्मानादपि तृणमनम्रेण शिरसा ॥ ३ ॥ तस्यैव ।
मा गाः प्रत्युपकारकातरतयावैवर्ण्यमाकर्णय
श्रीकर्णाटवसुंधराधिप सुधासिक्तानि सूक्तानि नः ।
वर्ण्यन्ते कतिनामनार्णवनदीभूगोलविन्ध्याटवी-
झञ्झामारुतचन्द्रमःप्रभृतयस्तेभ्यः किमात्तं मया ॥ ४ ॥
विल्हणस्य ।

राजा त्वं वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः
ख्यातस्त्वं विभवैर्यशांसि कवयो दिक्षु प्रतन्वन्ति नः ।
इत्थं मानद नातिदूरमुभयोरप्यावयोरन्तरं
यद्यस्मासु पराङ्मुखोसि वयमप्येकान्ततो निस्पृहाः ॥ ५ ॥

## ४१ कृपणः ।

वरं मृतो न तु क्षुद्रस्तथापि महदन्तरम् ।

एकस्य बन्धुर्नादत्ते नामान्यस्याखिलो जनः ॥ १ ॥ शब्दार्णवस्य ।
जीवताऽपि शवेनेव कृपणेन न दीयते ।
मांसं वर्द्धयतानेन काकस्योपकृतिः कृता ॥ २ ॥ कविराजस्य ।
दृढतरनिबद्धमुष्टेः कोषनिषण्णस्य सहजमलिनस्य ।
कृपणस्य कृपाणस्य च केवलमाकारतो भेदः ॥ ३ ॥ गोभटस्य ।
असंभोगेन सामान्यं कृपणस्य धनं परैः ।
अस्येदमिति संबन्धः हानौ दुःखेन गम्यते ॥ ४ ॥
श्रीव्यासपादानाम् ।
कृपणस्यास्तु दारिद्र्यं कार्पण्यावृतिकारकम् ।
विभवस्तस्य तद्दोषघोषणापटुडिण्डिमः ॥ ५ ॥ तेषामेव ।

## ४२ सेवकः ।

मौनान्मूकः प्रवचनपटुर्वातुलो जल्पको वा
धृष्टः पार्श्वे वसति नियतं दूरतश्चाप्रगल्भः ।
शान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ १ ॥ कस्यचित् ।
गात्रैर्गिरा च विकलश्चटुमीश्वराणां
कुर्वन्नयं प्रहसनस्य नटः कृतोऽसि ।
न त्वां पुनः पलितवर्णकभाजमेत-
न्नाट्येन केन नटयिष्यति दीर्घमायुः ॥ २ ॥ मुरारेः ।
यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटून्मृषा
नैषां गर्ववचः शृणोषि न पुनः प्रत्याशया धावसि ।
काले बालतृणानि खादसि सुखं निद्रासि निद्रागमे
तन्मे ब्रूहि कुरङ्ग कुत्र भवता किं नाम तप्तं तपः ॥ ३ ॥
शिल्हणस्य ।
प्रणमत्युन्नतिहेतोर्जीवितहेतोर्विमुञ्चति प्राणान् ।
दुःखीयति सुखहेतोः को मूढः सेवकादन्यः ॥ ४ ॥ कस्यचित् ।
हसति हसति स्वामिन्युच्चैरुदत्यपि रोदिति
गुणसमुदितं प्रेष्यः स्वैरं प्रणिन्दति निन्दति
द्रविणकणिकाक्रीतं यन्त्रं प्रनृत्यति नृत्यति ॥ ५ ॥ कस्यचित् ।

## ४३ मनस्विसेवकः ।

सोढं द्वास्थितदुर्वचः कटु ततो दृष्टो दुरीशश्चिरा-
दुद्गीर्णाः स्वगुणाश्च याचितमथ श्रोत्रे कृता नेति गीः ।

अस्मिन्पातकपञ्चके सति महत्याब्रह्महत्यादिकं
यत्पापं महदूचिरे मनुमुखाः कोन्वेष तेषां भ्रमः ॥ १ ॥
धर्मपालस्य ।

लज्जे लज्जे निमज्ज क्वचिदपि निभृतं तिष्ठ तिष्ठ प्रतिष्ठ
गच्छ द्रोणीं हिमाद्रेः पुनरपि तपसे भारति स्वस्ति तुभ्यम् ।
सोऽहं पुण्यक्षयेण प्रचुरपरिभवातङ्किनि प्रौढतापे
सेवापङ्के पतामि द्रविणकणधिया निष्कृपाणां नृपाणाम् ॥ २ ॥
कस्यचित् ।

अमीषां प्राणानां तुलितबिसिनीपत्रपयसां
कृते किं नास्माभिर्विगलितविवेकैर्व्यवसितम् ।
यदीशानामग्रे द्रविणमदमोहान्धमनसां
कृतं वीतव्रीडैर्निजगुणकथापातकमपि ॥ ३ ॥ धर्मकीर्तेः ।

कामं वनेषु हरिणास्तृणेन जीवन्त्ययत्नसुलभेन ।
विदधाति धनिषु न दैन्यं ते किल पशवो वयं सुधियः ॥ ४ ॥
शिल्हणस्य ।

वयमनिपुणाः कर्णप्रान्ते निवेशयितुं मुखं
कृतकमधुरं भर्तुर्भावं न भावयितुं क्षमाः ।
प्रियमपि वचो मिथ्या वक्तुं जनैर्न च शिक्षिताः
क इह सगुणो येन स्याम क्षितीश्वरवल्लभाः ॥ ५ ॥ भर्तृहरेः ।

## ४४ दुरीश्वरसेवकः ।

प्रालेयादपि शीतलो हुतवहः पीयूषगर्भादपि
स्वादीयो गरलं भवेदपि मृदुर्दम्भोलिरम्भोजतः
व्याहारादपि सुभ्रुवां खलवचः कर्णद्वयीदोहदं
न त्वेतादुरधीश्वरस्य कुटिलक्रूराः कटाक्षोर्मयः ॥ १ ॥
शङ्करधरस्य ।

स्नातं मारवरोचिरम्भसि कृतः स्नेहग्रहः सैकते
पाषाणे जनितोऽङ्कुरः खकुसुमैः सृष्टः शिरःशेखरः ।
बन्ध्याया विहिता सुतेन सखिता कूर्माङ्गनायाः पयः
पीतं येन निषेव्य मुग्धधनिनः संपादिताः संपदः ॥ २ ॥
पण्डितशशिनः ।

अरण्यरुदितं कृतं शवशरीरमुद्वर्तितं
स्थलेऽब्जमवरोपितं सुचिरमूषरे वर्षितम् ।
श्वपुच्छमवनामितं बधिरकर्णजापः कृतः
कृतान्धमुकुरक्रिया यदबुधो जनः सेवितः ॥ ३ ॥ शिल्हणस्य ।

तोयं निर्मथितं घृताय मधुने निष्पीडितः प्रस्तरः
पानार्थं मृगतृष्णिकोर्मितरला भूमिः समालोडिता ।
दुग्धा सेयमचेतनेन जरती दुग्धाशया गर्दभी
कष्टं यत्खलु दीर्घया धनतृषा नीचो जनः सेवितः ॥ ४ ॥
अमरसिंहस्य ।

स्तब्धस्तिष्ठसि पश्यदन्धपुरतः किं दर्शनाकाङ्क्षया
जल्पन्मूकमुखादितः प्रतिवचः किं श्रोतुमाकाङ्क्षसि
यः शृण्वद्वधिरः शृणोति स कथं विज्ञप्तिकां तावकीं
प्राणप्रेतमुपासमाननपठन्मूर्खस्त्वदन्यो जनः ॥ ५ ॥ वल्लणस्य ।

## ४५ क्षुद्रोदयदुःखितः ।

सुखं जीवन्ति जातान्धाः पर्वताः सरितोऽपि च ।
क्षुद्राभ्युदयसाक्षिभ्यामक्षिभ्यां हा हता वयम् ॥ १ ॥ कस्यचित् ।
धन्याः खलु नीचानां तृष्णातापार्तिविधुरमनसोपि ।
भ्रुकुटीतरङ्गकुटिलां न दृष्टिसरितं विगाहन्ते ॥ २ ॥ शङ्करधरस्य ।
अलङ्घ्यं सर्वेषामिह खलु फलं कर्मजनितं
विपत्कर्मप्रेष्या व्यथयति न जानासि हृदयम् ।
यदज्ञाः कुर्वन्ति प्रसभमुपहासं धनमदा-
दिदं त्वन्तर्गाढं प्रथमपरितापं जनयति ॥ ३ ॥
हे लोचनद्वय चलज्जलबुद्बुदाभ
किं न प्रयासि कटकामणिवद्विलीय ।
यद्दैवलब्धवसुमूर्खमुखावलेप-
मुद्रासु दीक्षितुमयं तव जन्मलाभः ॥ ४ ॥ वाक्कोकस्य ।
विद्यावानपि जन्मवानपि तथा युक्तोऽपि तैस्तैर्गुणै-
र्यन्नाप्नोति मनः समीहितफलं दैवस्य सा वाच्यता ।
एतावत्तु हृदि व्यथां वितनुते यत्प्राक्तनैः कर्मभि-
र्लक्ष्मीं प्राप्य जडोऽप्यसाधुरपि च स्वां योग्यतां मन्यते ॥ ५ ॥
कस्यचित् ।

## ४६ दारिद्र्यम् ।

लग्नः शृङ्गयुगे गृही सतनयो वृद्धौ गुरू पार्श्वयोः
पुच्छाग्रे गृहिणी खुरेषु शिशवो लग्ना वधूः कम्बले ।
एकः शीर्णजरद्गवो विधिवशात्सर्वस्य भूतो गृहे
सर्वेणैव कुटुम्बकेन रुदता सुप्तः समुत्थाप्यते ॥ १ ॥ कस्यचित् ।
प्रायो दरिद्रशिशवः परमन्दिराणां
द्वारेषु दत्तकरपल्लवलीनदेहाः ।

लज्जानिगूढवचसो बहुभोक्तुकामा
भोक्तारमर्धनयनेन विलोकयन्ति ॥ २ ॥ कस्यचित् ।

हलमगु बलस्यैकोऽनड्वा न्हरस्य न लाङ्गलं
पदपरिमिता भूमिर्विष्णोर्न गौर्न च लाङ्गलम् ।
प्रभवति कृषिर्नैवाद्यापि द्वितीयगवं विना
जगति सकले नेदृग्दृष्टं दरिद्रकुटुम्बकम् ॥ ३ ॥ कस्यचित् ।

मद्गेहे मुषलीव मूषकवधूर्मूषीव मार्जारिका
मार्जारीव शुनी शुनीव गृहिणी वाच्यः किमन्यो जनः ।
किं च क्षुत्क्षमघूर्णमाननयनैरुन्निद्रमुर्वी गतैः
कर्तुं वाग्व्ययमक्षमैः स्वजननी बालैः समालोक्यते ॥ ४ ॥
दुर्गतस्य ।

जरदम्बरसंवरणग्रन्थविधौ ग्रन्थकारएकोऽहम् ।
परिमितकदन्नवण्टनविद्यापारं गता गृहिणी ॥ ५ ॥ भानोः ।

## ४७ सचाटुदारिद्र्यम् ।

अम्बा तुष्यति न मया न स्नुषया सापि नाम्बया न मया ।
अहमपि न तया न तया वद राजन्कस्य दोषोऽयम् ॥ १ ॥
कस्यचित् ।

आजन्मनः सहजतुल्यविवर्तमान-
दौर्गत्यतोऽस्ति परमो न सुहृन्ममान्यः ।
येनात्मनोऽपरिगणय्य विनाशमाशु
देव त्वदाश्रयणपुण्यधनः कृतोस्मि ॥ २ ॥ दक्षस्य ।

दुर्गतिरेका वनिता ममापि पितुरपि पितामहस्यापि ।
तत्कुरु नाथ यथायं जनपरिवादः प्रशान्तिमभ्येति ॥ ३ ॥

दारिद्र्यगृध्रपरिभुक्तसमस्तमांसं स्नायूपरुद्धसकलास्थिचयावशेषम् ।
पीयूषवृष्टिमिव नाथ निधेहि दृष्टिं कङ्कालजालमिदमङ्कुरमातनोतु ॥४॥
कस्यचित् ।

दारिद्र्यं नृपतिः स नो निजपतिर्यस्य प्रसादादभू-
द्याच्ञा जीवितमंशुकं दश दिशः सद्मानि देवालयाः ।
मद्विद्वेषिणि लब्धसंनिधिरिति त्वय्याश्रये कुप्यता-
मद्वृत्त्यैव पुरस्कृतास्त्वदरयस्तेनाधुना का गतिः ॥ ५ ॥
वित्तपालस्य ।

## ४८ दरिद्रगृही ।

शीलं शातयति श्रुतं शमयति प्रज्ञां निहन्त्यादरा-
द्दैन्यं दीपयति क्षमां क्षपयति व्रीडामपि व्यस्यति ।

चेतो जर्जरयत्यपास्यति धृतिं विस्तारयत्यर्थितां
पुंसः क्षीणधनस्य किं न कुरुते वैरी कुटुम्बग्रहः ॥ १ ॥ दामोदरस्य।
उत्तिष्ठ क्षणमात्रमुद्वह सखे दारिद्र्यभारं मम
श्रान्तस्तावदहं चिरान्मरणजं सेवे त्वदीयं सुखम् ।
इत्युक्तं धनवर्जितेन बहुधा गत्वा श्मशानं शवं
दारिद्र्यान्मरणं वरं सुखमिति ध्यात्वेव तूष्णीं स्थितम् ॥ २ ॥
वसुकल्पस्य ।

क्षुत्क्षामाः शिशवः शवा इव तनुर्मन्दादरो बान्धवो
लिप्ता जर्जरकर्करीजललवैर्नो मां तथा बाधते ।
गेहिन्याः स्फुटितांशुकं घटयितुं कृत्वा सकाकुस्मितं
कुप्यन्ती प्रतिवेशिनी प्रतिमुहुः सूचीं यथा याचिता ॥ ३ ॥
कस्यचित् ।

तस्मिन्नेव गृहोदरे रसवती तत्रैव सा कण्डनी
तत्रोपस्करणानि तत्र शिशवस्तत्रैव वासः स्वयम् ।
सर्वं सोढवतोऽपि दुस्थगृहिणः किं ब्रूमहे तां दशा-
मद्य श्वो विजनिष्यमाणगृहिणी तत्रैव यत्कुन्थति ॥ ४ ॥
वैनतेयस्य ।

आस्तां किं बहुभिः परोपकृतयः संसारसारं फलं
सिद्धं तत्प्रतिकूलतर्किनि विधौ न स्तोकमप्यत्र नः ।
एते स्मः किल मानुषा वयमपि व्यर्थं व्यपेतायुषो
येषां स्वोदरपूर्तिरेव हि किमप्यष्टौ महासिद्धयः ॥ ५ ॥ कस्यचित् ।

## ४६ दरिद्रगृहिणी ।

अद्याशनं शिशुजनस्य बलेन जातं
श्वो वा कथं नु भवितेति विचिन्तयन्ती ।
अत्यश्रुपातकलुषीकृतगण्डदेशा-
न्नैच्छद्दरिद्रगृहिणी रजनीविरामम् ॥ १ ॥ कस्यचित् ।
यावद् दुस्थकुटुम्बिनीकरतलस्पर्शात्समालोकते
तत्तत्क्षुद्रकणादिरक्षणधिया घोरं घने वर्षति ।
तावज्जीर्णकुटीरकोटरविशत्सौदामिनीदीपितं
दृष्ट्वा तूलकजाल -˘˘˘ जलाकीर्णं मुहुर्मूर्च्छति ॥ २ ॥
योगेश्वरस्य ।

कुम्भीसंचिततण्डुलाःप्रतिदिनं नीताः क्षयं मूषिकै-
र्वास्तुष्वेव पिशाङ्कितोदरतलाः शीर्यन्ति वार्ताकवः ।
जीर्णं जालकमारनालपिठरीगर्भे च काकारवं

दीनायाः पथिकस्त्रियाः प्रियतमप्रत्यागमाकाङ्क्षया ॥ ३ ॥

नीलस्य ।

वैराग्यैकसमुन्नता तनुतनुः शीर्णाम्बरं बिभ्रती
क्षुत्क्षामेक्षणकुक्षिभिश्च शिशुभिर्भोक्तुं समभ्यर्थिता ।
दीना दुस्थकुटुम्बिनी परिगलद्बाष्पाम्बुधौताननाऽ-
प्येकं तण्डुलमानकं दिनशतं नेतुं समाकाङ्क्षति ॥ ४ ॥ वारस्य ।
सक्तूञ्शोचति संप्लुतान्प्रतिकरोत्याक्रन्दतो बालकान्-
प्रत्युत्सिञ्चति कर्परेण सलिलं शय्यातृणं रक्षति ।
दत्त्वा मूर्ध्नि विशीर्णशूर्पशकलं जीर्णे गृहे व्याकुला
किं तद्यन्न करोति दुस्थगृहिणी देवे भृशं वर्षति ॥ ५ ॥

लङ्गदत्तस्य ।

## ५० दरिद्रगृहम् ।

चलत्काष्ठं गलत्कुड्यमुत्तानतृणसंचयम् ।
गण्डूपदार्थिमण्डूककीर्णं जीर्णं गृहं मम ॥ १ ॥ कस्यचित् ।
हस्तप्राप्यतृणोज्झिताः प्रतिपयोवृत्तिस्खलद्भित्तयो
दूरालम्बितदारुदन्तुरमुखाः पर्यन्तवल्लीवृताः ।
वस्त्राभावविलीनसत्रयवधूदत्तार्गला निर्गिर-
स्त्यज्यन्ते चिरशून्यविभ्रमभृतो भिक्षाचरैर्मद्गृहाः ॥ २ ॥

कस्यचित् ।

पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं संप्रति समभावयोः सदनम् ॥ ३ ॥

कस्यचित् ।

धूमेन रिक्तमपि निर्भरबाष्पकारि
दूरीकृतानलमपि प्रतिपन्नतापम् ।
दैन्यातिशून्यमपि भूषितबन्धुवर्ग-
माश्चर्यमेव खलु खेदकरं गृहं नः ॥ ४ ॥ जलचन्द्रस्य ।
उत्सन्नच्छदिरुच्छ्वसद्वृति गलद्भित्ति स्खलन्मण्डलि
भ्राम्यत्कुण्डलि हिण्डदाखु खुरलिप्रक्रीडभेकावलि ।
चञ्चच्चर्मचटौघपक्षतिपुटप्राबद्धभांभांकृति
श्रीमत्सेनकुलावतंसभवतः शत्रोरिवासद्गृहम् ॥ ५ ॥

सोल्होकस्य ।

## ५१ जरा ।

एकगर्भोषिताः स्निग्धा मूर्ध्ना सत्कृत्य धारिताः ।

केशा अपि विरज्यन्ते जरसा किमुताङ्गनाः ॥ १ ॥

श्रीव्यासपादानाम् ।

केशाः पाकमुपागताः शिथिलतामङ्गेप्यनङ्गो गतः
– – – ⏑ ⏑ – प्रियतमा सभ्यं जनत्वं गता ।
ये चान्ये गुणशालिनोऽपि सुहृदस्ते चापि याता दिवं
तन्मां मुञ्च घनागमं व्रज वनं चेतः कुतः स्थीयते ॥ २ ॥

तरलिकस्य ।

केशाः काशनिभाः कपोलफलके त्वग्भिस्तरङ्गायितं
काचेनोचिततारकेण खचिते पर्यश्रुणी लोचने ।
अङ्गानामवसादितापि च गिरां कम्पस्तथाप्येष मे
मोहः स्नेहमयो न मुञ्चति मनः कस्मै समावेद्यताम् ॥ ३ ॥

सुव्रतस्य ।

शौर्याभिमानवनदावशिखे सुबद्ध-
प्रस्थानवृत्तिमतिविभ्रममूलबन्धो ।
मृत्योः पुरःसरबलध्वजवैजयन्ति
मातर्जरे सततमस्तु नमो भवत्यै ॥ ४ ॥ धर्मपालस्य ।

दिग्विभ्रमं दशनखण्डनमङ्गभङ्गं
केशग्रहं रतिविधौ मदनादरं च ।
श्वासप्रकम्पजडभावसुघूर्णितानि
धत्ते जरा प्रणयिनीव मयोपगूढा ॥ ५ ॥ कस्यचित् ।

## ५२ वृद्धः ।

स्वस्ति सुखेभ्यः सम्प्रति सलिलाञ्जलिरेष मन्मथकथायाः ।
ताअपि मामतिवयसं तरलदृशः सरलमीक्षन्ते ॥ १ ॥

शतानन्दस्य ।

आक्रान्तं वलिभिः प्रसह्य पलितैरत्यन्तमास्कन्दितं
वार्द्धक्यश्लथसन्धिबन्धनतया निस्थाम निर्धाम च ।
एतन्मे वपुरस्थिकेवलजरत्कङ्कालमालोकय स्थूल-
स्थूलशिराकपालपरुषत्वङ्मात्रमङ्गीकृतम् ॥ २ ॥ दक्षस्य ।

गलितं यौवनमधुना वनमधुना सेवनीयमस्माकम् ।
स्फुरदुरुहारमणीनां हारमणीनां गतः कालः ॥ ३ ॥

स्थूलप्रावाणोऽतिवृत्तकथनः कासाश्रुल[illegible]
भुग्नाङ्घ्रित्रिकपृष्ठजानुजघनो मुग्धोऽतिथीन्वारयन् ।
शृण्वन्धृष्टवधूवचांसि धनुषा संत्रासयन्वायसा

नाशापाशनिबद्धजीवविहगो वृद्धो गृहे ग्लायति ॥ ४ ॥
कस्यचित् ।

विकासयति लोचने स्पृशति पाणिना कुञ्चिते
विदूरमवलोकयत्यतिसमीपसंस्थं पुनः ।
बहिर्व्रजति सातऽऽपे स्मरति नेत्रवृत्तेः पुरा
जराप्रमुखसंस्थितः समवलोकयन्पुस्तकम् ॥ ५ ॥ कस्यचित् ।

## ५३ अनुशयः ।

क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न संतोषतः
सोढो दुःसहशीतवाततपनक्लेशो न तप्तं तपः ।
ध्यातं वित्तमहर्निशं न च पुनर्विष्णोः पदं शाश्वतं
तत्तत्कर्म कृतं यदेव मुनिभिस्तैस्तैः फलैर्वञ्चितम् ॥ १ ॥
भर्तृहरेः ।

नाथे श्रीपुरुषोत्तमे त्रिजगतामेकाधिपे चेतसा
सेव्ये स्वस्य पदस्य दातरि सुरे नारायणे तिष्ठति ।
यं कञ्चित्पुरुषाधिपं कतिपयग्रामेशमल्पार्थदं
सेवायै मृगयामहे नरमहो मूढा वराका वयम् ॥ २ ॥ तस्यैव ।

उषस्येव भ्रान्तं हतजठरहेतोस्तत इतः
स्वयं च स्वंविभ्रद्विचरति कुटुम्बं दिशि दिशि ।
वतास्माभिः काकैरिव कवलमात्रैकमुदितै-
र्न चायुर्दुर्गत्योरवधिरिह लब्धः कथमपि ॥ ३ ॥ वेशोकस्य ।

कौशल्या ननुरोधिना जनकभूर्दूरीकृता किं तु न
प्राप्ता पञ्चवटी न वानरपतेरासादितं सौहृदम् ।
सामर्षेण न वारिराशिरचिरादुल्लङ्घितः केवलं
काकुत्स्थेन मया दशाननतिरस्कारास्पदीभूयते ॥ ४ ॥ हरेः ।

जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृतालङ्काभर्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता नत्वधिगता ॥ ५ ॥ शूलपाणेः ।

## ५४ निर्वेदः ।

पित्रोर्नोपकृतं हिमांशुधवलं नोपार्जितं वा यशो
मित्राणामुपकारिता न विहिता दत्तं न च स्वेच्छया ।
गाढालिङ्गनलालसाऽपि दयिता नालिङ्गिता केवलं
कालोऽत्येति चलं च जीवितमिति क्षुण्णं मनश्चिन्तया ॥ १ ॥
कस्यचित् ।

नो खड्गप्रविदारिता करिघटा नोद्वेजिता वैरिण-
स्तन्वङ्ग्या विपुले नितम्बफलके न क्रीडितं लीलया।
नो जुष्टं गिरिराजनिर्झरचलज्झांकारि गाङ्गं पयः
कालोयं परपिण्डलोलुपतया काकैरिव प्रेरितः ॥२॥ कस्यचित्।
न प्राप्ता भुवि वारिवृन्ददमनी विद्या विनोदोचिता
खड्गाग्रैः करिकुम्भपीठदलनैर्नैवानुनीतं यशः।
कान्ताकोमलपल्लवाधररसः पीतो न चन्द्रोदये
तारुण्यं गतमेव निष्फलमहो शून्यालये दीपवत् ॥ ३ ॥

कस्यचित्।

नो मेघायितमर्थवारिविरहक्लिष्टार्थिशस्ये मया
नोद्वृत्तप्रतिपक्षपर्वतकुले निर्घातवातायितम्
नो वा वामविलोचनामलमुखाम्भोजेषु भृङ्गायितं
मातुः केवलमेव यौवनवनच्छेदे कुठारायितम् ॥ ४ ॥ भर्तृहरेः।
नाक्रान्ता मणिमेखला वसुमती लक्ष्मीः समावेशिता
नो विद्वद्भवनेषु पक्ष्मलदृशां नाश्रावि सूक्तामृतम्।
जन्म व्यर्थफलोदयं वत परं गृह्णद्भिरस्मादृशै-
र्व्याप्तं व्योम कियद्भुजङ्गमपतेर्भारः कियानार्पितः ॥ ५ ॥

साङ्गाधरस्य।

## ५५ विचारः।

ददति तावदमी विषयाः सुखं
स्फुरति यावदियं हृदि वासना।
मनसि तत्त्वविदां च विवेचके
क्व विषयाः क्व सुखं क्व परिग्रहः ॥ १ ॥ कस्यचित्।
आयुर्वासरमासवत्सरगणैर्गच्छत्यदूरं पथै
राक्रामन्ति कृतान्तकासरखुरक्षुण्णारजोराजयः।
ईपल्लङ्घितशैशवा इति वयःसंधिं दधाना इति
व्यक्तावर्जितयौवना इति तथा नन्दन्ति तन्द्रालवः ॥ २ ॥

जलचन्द्रस्य।

तन्मित्रं यदयन्त्रणं स विभवो यः साधुसाधारण-
स्तस्यां योषिति भावयेदपि रतं भावानुरक्तैव या।
तां चिन्तां मनसोद्वहेत सततं यस्याः फलं भुज्यते
तानीहेत फलानि यान्यविधुराण्याशामहीजन्मनः ॥ ३ ॥

कस्यचित्।

तत्पाण्डित्यं न पतति पुनर्येन संसारबन्धे
सौहार्दं तन्न चलति पुनर्यत्सुखे वाऽसुखे वा ।
संभोगास्ते रतिषु विदुषां ये न वाच्याः परेषां
तच्चैश्वर्यं जगति महतां यत्परेषां सुखाय ॥ ४ ॥ कस्यचित् ।
सद्विद्या यदि कल्पशाखिभिरलं यद्यर्थिनः किं तृणैः
सन्तश्चेदमृतेन किं यदि खलास्तत्कालकूटेन किम् ।
किं कर्पूरशलाकया यदि दृशः पन्थानमेति प्रिया
संसारेपि सतीन्द्रजालघटनं यद्यस्ति तेनापिकिम् ॥ ५ ॥
कस्यचित् ।

## ५६ विचिकित्सितम् ।

बीभत्सा विषया जुगुप्सिततमः कायो वयो गत्वरं
प्रायो बन्धुभिरध्वनीनपथिकैर्योगो वियोगावहः ।
हातव्योयमसार एव विरसः संसार इत्यादिकं
सर्वस्यैव हि वाचि चेतसि पुनः कस्यापि पुण्यात्मनः ॥ १ ॥
बिल्हणस्य ।

तडिन्मालालोलं प्रतिविरतिदत्तान्धतमसं
भवे सौख्यं हित्वा शमसुखमुपादेयमनघम् ।
इति व्यक्तोदारं चटुलवचसः शून्यमनसो
वयं वीतव्रीडाः शुकइव पठामः पुनरमी ॥ २ ॥ तस्यैव ।
रेतःशोणितयोरियं परिणतिस्तद्वर्ष्म तच्चाभव-
न्मृत्योरास्पदमाश्रयो गुरुशुचां रोगस्य विश्रामभूः ।
जानन्नप्यवशो विवेकविरहान्मज्जन्नविद्याम्बुधौ
शृङ्गारीयति पुत्रकाम्यति वत क्षेत्रीयति स्त्रीयति ॥ ३ ॥ तस्यैव ।
बीभत्साः प्रतिभान्ति किं नु विषयाः किं नु स्पृहायुष्मती
देहस्यापचयो मतौ निविशते गाढो गृहेषु ग्रहः ।
ब्रह्मोपास्यमिति स्फुरत्यपि हृदि व्यावर्तिका वासना
का नामेयमतर्क्यहेतुगहना दैवी सतां यातना ॥ ४ ॥ तस्यैव ।
स्थिरापायः कायः प्रणयिषु सुखं स्थैर्यविमुखं
महारोगो भोगः कुवलयदृशः शष्पसदृशः ।
गृहावेशः क्लेशः प्रकृतिचपला श्रीरपि खला
यमः स्वैरी वैरी तदपि न हितं कर्म विहितम् ॥ ५ ॥ कस्यचित् ।

## ५७ शमविघ्नः ।

प्रेम्णा पुरा प्रणिहितं मयि चक्षुरीष-
दुल्लासिताञ्चकुचया मितमध्यया यत् ।

संप्रत्यतिस्तिमितवस्त्रमिवाङ्गलग्न-
मेतज्जिहासुरपि हातुमनीश्वरोऽपि ॥ १ ॥ कस्यचित् ।
भिक्षाशनं भवनमायतनैकदेशः
शय्याभुवः परिजनो निजदेहभारः ।
वासश्च जीर्णपटखण्डनिबद्धकन्था
हा हा तथापि विषयान्न जहाति चेतः ॥ २ ॥ बिल्हणस्य ।
मधुरमशनं सूक्ष्मं वासो विभूषणमुज्ज्वलं
तरुणतरवः क्रीडारामाः सुधाशुचयो गृहाः ।
तदिदमखिलं त्यक्तुं शक्यं भवत्यपि देहिनां
प्रणयसरसा येऽमी दारास्तएव हि दुस्त्यजाः ॥ ३ ॥ कस्यचित् ।
गङ्गाधौतशिलातले फलभरच्छन्नाद्रिकूलद्रुमे
सिद्धाध्यासितकन्दरे हिमवति स्थाने स्थिते श्रेयसि ।
कः कुर्वीत शिरः प्रणाममलिनं मान्यं मनस्वी जनो
यद्वित्रस्तकुरङ्गशावनयना न स्युः स्मरास्त्रं स्त्रियः ॥ ४ ॥
कस्यचित् ।
संसारेऽस्मिन्नसारे कुनृपतिभवनद्वारि सेवाकलङ्क-
व्यासङ्गव्यस्तधैर्यं कथममलधियो मानसं संविदध्युः ।
यद्येताः प्रोद्यदिन्दुद्युतिनिचयभृतो न स्युरम्भोजनेत्राः
प्रेङ्खत्काञ्चीकलापाः स्तनभरविनमन्मध्यभाजस्तरुण्यः ॥ ५ ॥
कस्यचित् ।

## ५८ अर्द्धशमः ।

एकं सागरतीरनीरनिकरस्फाराञ्जलिक्षालितैः
पुष्पैरच्युतपूजनं निजकरव्यापारसंपादितैः ।
नोचेन्मञ्जुलमालतीदललसत्खट्वार्चिते मन्दिरे
कान्तातुङ्गनितम्बबिम्बसुरतक्रीडारसैः स्थीयते ॥ १ ॥ कस्यचित् ।
प्रशान्ते धीराणां मनसि न परब्रह्मरसिके
रजो वा राज्यं वा द्वयमिदमभेदं सुकृतिनाम् ।
धिगस्माकं चित्ते विगलितविवेके पुनरिह
प्रिया वा प्राणा वा सदृशमथवा पूर्वमधिकम् ॥ २ ॥ पुरोकस्य ।
धन्यानां गिरिकन्दरोदरभुवि ज्योतिः परं ध्यायता-
मानन्दाश्रुजलं पिबन्ति शकुना निःशङ्कमङ्के स्थिताः ।
अस्माकं तु मनोरथोपरचितप्रासादवापीतट-
क्रीडाकाननकेलिमण्डपजुषामायुः परं क्षीयते ॥ ३ ॥
सत्यबोधस्य ।

सद्यः काश्मीरमृष्टस्तनकलसलुठत्तारहारावलीभिः
कर्पूरोद्गारिणीभिः सममसमसुखाः केलयः केरलीभिः ।
नोचेद्भिक्षाप्रसन्ने मनसि मनसिजक्लेशनाशे विलासो
वाराणस्यां निवासः स्मरहरचरणोपासनावासनाभिः ॥ ४ ॥
वासुदेवस्य ।

अग्रे गीतं सरसकवयः पार्श्वतो दाक्षिणात्याः
पृष्ठे लीलावलयरणितं चामरग्राहिणीनाम् ।
यद्येतत्स्यात्कुरु भवरसास्वादने लम्पटत्वं
नो चेच्चेतः प्रविश परमब्रह्मणि प्रार्थनैषा ॥ ५ ॥ उत्पलराजस्य ।

५९ कारुणिकः ।

निष्किंचनत्वाद्विधुरस्य साधोरभ्यर्थितस्यार्थिजनेन किंचित् ।
नास्तीति वर्णा मनसि भ्रमन्तोनिर्गन्तुमिच्छन्त्यसुभिः सहैव ॥ १ ॥
मङ्गलस्य ।

ताः संपदो विपद एव न याः समग्र-
मुत्तारयन्ति जगदाविलमार्तिपङ्कात् ।
तल्लोहमेव हृदयं यदशक्यमार्तेः
स्वीयार्तिभावयति न स्फुटितेन शुद्धिम् ॥ २ ॥ मालोकस्य ।
एते वयं तनुधनाः कृपणायमुर्वी
दीनाः शतं मृदु च विस्तरयन्ति वाचः
तद्भ्रातरः शकुनिफेरवसारमेया
ढौकध्वमेतदहह स्फुटतु क्षणेन ॥ ३ ॥ तस्यैव ।
यत्र प्राणबलेन यत्र पिशितैर्यत्र त्वचा केवलं
यात्रामर्थिजनोचितामुपगतः श्लाघ्यः स कालो गतः ।
कुर्मः किं धनमन्यदस्ति न किमप्यस्माकमस्मात्परं
बाधिर्यं कृतमत्र कर्णकुहरे दूरेस्तु वागर्थिनः ॥ ४ ॥
परशुरामस्य ।

मुदा यत्र प्राणास्तृणमिव परार्थव्यसनिन-
स्त्यजन्तो लज्जन्ते कियदिति धिया तद्युगमगात् ।
तृणं प्राणप्रायं त्यजति न जनो यत्र समये
वयं जातास्तत्रेत्यहह कृपणं जीवितमिदम् ॥ ५ ॥ जीवबोधस्य ।

६० शान्त्याशंसा ।

कदा भिक्षाभक्ष्यैः करगलितगङ्गाम्बुतरलैः
शरीरं मे स्थास्यत्युपरतसमस्तेन्द्रियसुखम् ।

कदा ब्रह्माभ्यासास्थिरतनुतयारण्यविहगाः
पतिष्यन्ति स्थाणुभ्रमहृतधियः स्कन्धशिरसि ॥ १ ॥ भर्तृहरेः।
गङ्गातीरे हिमगिरिशिलाबद्धपद्मासनस्य
ब्रह्मध्यानाभ्यसनविधिना योगनिद्रां गतस्य।
किं तैर्भाव्यं मम सुदिवसैर्यत्र ते निर्विशङ्काः
संप्राप्स्यन्ते जरठहरिणा गात्रकण्डूविनोदम् ॥ २ ॥ कृष्णस्य।
रथ्यान्तश्चरतस्तथा धृतजरत्कन्थालवस्याध्वगैः
सत्रासं च सकौतुकं च सदयं दृष्टस्य तैर्नागरैः।
निर्व्याजीकृतचित्सुधारसमुदा निद्रायमाणस्य मे
निःशङ्कः करटः कदा करपुटीभिक्षां विलुण्ठिष्यति ॥ ३ ॥
वल्लणस्य।
कदा वाराणस्यामिह सुरधुनीरोधसि वस-
न्वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम्।
अये गौरीनाथ त्रिपुरहर शम्भो त्रिनयन
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ४ ॥
विश्वेश्वरस्य।
अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा
मणौ वा लोष्टे वा कुसुमशयने वा दृषदि वा
तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः
क्वचित्पुण्यारण्ये शिवशिव शिवेति प्रजपतः ॥ ५ ॥ मुञ्जस्य।

## ६१ कृतार्थशान्तः।

कान्तायाः करजैः कपोलफलके पत्रावली कल्पिता
केलिद्यूतपणीकृतो विहरता पीतः स बिम्बाधरः।
खेदार्द्रीकृतचन्दनस्तनतटः सानन्दमालिङ्गितो
निर्विघ्ना विषयाः शिवात्ममहसि न्यस्तं मनः संप्रति ॥ १ ॥
मुञ्जस्य।
यल्लीलाकमलाहतौ प्रमुदितं यन्मन्मथस्यास्पदं
यत्कान्ताप्रणयापराधकलहे पर्याप्तकौतूहलम्।
यत्प्रेमार्द्रवधूविलासललितभ्रूलास्यबद्धस्पृहं
तच्चेतः स्मरवैरिभग्नसदनप्रान्ते स्थितीर्वाञ्छति ॥ २ ॥ तस्यैव।
जितेयं दोर्दर्पाज्जलधिपरिवेशा वसुमती
शिरः क्षौणीन्द्राणां निजचरणपीठे विलुठितम्।
कृतं दत्तं भुक्तं कृतमपि कुले यत्समुचितं
कृतार्थस्तीर्थेषु भ्रमणमधुना वाञ्छति मनः ॥ ३ ॥ उमापतेः।

अभ्यस्ताः स्फुटमेव शास्त्रगतयः सम्यक्कवित्वोदधेः
पारं चाधिगतं सतां परिषदि प्राप्तः प्रतिष्ठोदयः ।
निर्विण्णस्य ममाधुना ननु परः पन्था न दैन्यं विना
नेतुं वाञ्छति वासना सुरधुनीतीरेऽनुरूपं वयः ॥ ४ ॥

वासुदेवस्य ।

कीर्तिर्लब्धा सदसि विदुषां शीलिताः क्षोणिपाला-
वाक्संदर्भाः कति चिदमृतस्यन्दिनो निर्मिताश्च ।
तीरे संप्रत्यमरसरितः क्वापि शैलोपकण्ठे
ब्रह्माभ्यासप्रवणमनसा नेतुमीहे दिनानि ॥ ५ ॥ धोयीकस्य ।

## ६२ शान्तः ।

सूक्तिं कर्णसुधां व्यनक्तु सुजनस्तस्मै न मोदामहे
ब्रूतां वाचमसूयको विषमुचं तस्मै न खिद्यामहे ।
या यस्य प्रकृतिः सतां वितनुतां किं नस्तया चिन्तया
कुर्मस्तत्खलु कर्म जन्मनिगडच्छेदाय यज्जायते ॥ १ ॥

ज्ञानाङ्कुरस्य ।

यदासौ दुर्वारः प्रसरति मदश्चित्तकरिण-
स्तदा तस्योद्दामप्रसररसरूढैर्व्यवसितैः ।
क्व तद्धैर्यालानं क्व च निजकुलाचारनिगडः
क्व सालज्जारज्जुः क्व विनयकठोराङ्कुशमपि ॥ २ ॥ भर्तृहरेः ।
मज्जन्मापि हि निष्फलं श्रुतमपि व्यर्थं गुणाः किं कृते
हा धिक्कष्टमनर्थकं गतमिदं निःशेषमस्मद्वयः ।
मार्गः कोपि निरत्ययं न वहति व्याघातबद्धग्रहो
धर्मार्थादिचतुष्पथे निवसति क्रूरो विधिर्गौल्मिकः ॥ ३ ॥

महाव्रतस्य ।

महाशय्या भूमिर्मसृणमुपधानं भुजलता
वितानं चाकाशं व्यजनमनुकूलोऽयमनिलः ।
स्फुरद्दीपश्चन्द्रः सुरभिवनितासङ्गमुदितः
सुखं शान्तः शेते ननु च भवभीतो नृप इव ॥ ४ ॥ भवभीतस्य ।
अवश्यं यातारश्चिरतरमुषित्वापि विषया
वियोगे को भेदस्त्यजति न जनो यत्स्वयमिमान् ।
व्रजन्तः स्वातन्त्र्यात्परमपरितापाय मनसः
स्वयं त्यक्ता ह्येते शमसुखमनन्तं विदधति ॥ ५ ॥ हरेः ।

## ६३ निष्क्रमः ।

पूर्वं तावत् कुवलयदृशालोललोलैरपाङ्गै-

राकर्षद्भिः किमपि हृदयं पूजिता यौवनश्रीः ।
संप्रत्यन्तर्निहितसदसद्भावलब्धप्रबोध-
प्रत्याहारापहृतहृदयो वर्तते कोपि भावः ॥ १ ॥
इयं बाला मां प्रत्यनवरतमिन्दीवरदल-
प्रभाचौरं चक्षुः क्षिपति किमभिप्रेतमनया ।
गतोमोहोऽस्माकं स्मरसमरवाणव्यतिकर-
ज्वरज्वाला शान्ता तदपि न वराकी विरमति ॥ २ ॥
ज्ञानशिवस्य ।

यदासीदज्ञानं स्मरतिमिरसंस्कारजनितं
तदा दृष्टं नारीमयमिदमशेषं जगदपि ।
इदानीमस्माकं पटुतरविवेकाञ्जनजुषां
समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म तनुते ॥ ३ ॥ कस्यचित् ।
किमस्मान्वामाक्षि स्मरविजययात्राभ्युदयिकै-
र्वृथा शान्तांल्लाजैरिव हसितलेशैः स्नपयसि ।
इदानीं गोलोम्ना शुचिनि तनुकालाबुजठरे
पतद्भिर्व्याहारे पतति हि परं लाञ्छिनि मनः ॥ ४ ॥ ग्लोब्दस्य ।
गतः कालो यत्र प्रणयिनि मयि प्रेमकुटिलः
कटाक्षः कालिन्दीलघुलहरिवृत्तिः प्रभवति ।
इदानीमस्माकं जरठकमठीपृष्ठकठिना
मनोवृत्तिस्तत्किं व्यसनिनि मुधैव क्षपयसि ॥ ५ ॥ वल्लणस्य ।

## ६४ निस्पृहः ।

वासो वल्कलमास्तरः किसलयान्योकस्तरूणां तलं
मूलानि क्षतये क्षुधां गिरिणदीतोयं तृषाशान्तये
क्रीडा मुग्धमृगैर्वयांसि सुहृदो नक्तं प्रदीपः शशी
स्वाधीनेपि धने तथापि कृपणा याचन्तइत्यद्भुतम् ॥ १ ॥
कस्यचित् ।

नीताः पुण्याग्निगेहे शिशिररजनयस्तोमसत्रे निदाघं
शीर्णे कुग्रामदेवीपरिसरसदने वासराः प्रावृषेण्याः ।
दृष्टं व्याभुग्नभीमभ्रुकुटि च वदनं संपदा गर्वितानां
तत्त्वं तृष्णे कृतार्थीभव कुरु विरतिं मुञ्च नः साधयामः ॥ २ ॥
योगेश्वरस्य ।

निजं कर्म क्षीणं स खलु विपरीतो हत विधिः
सुकृत्ये वा तत्त्वे भृशमुपगता यत्ननिचयाः ।

इदानीमस्माकं स्फुरदुरुजराजर्जरमिदं
वपुर्जातं तृष्णे विरम विरमेत्यञ्जलिशतम् ॥ ३ ॥ गोशोकस्य ।
वयमिह परितुष्टा वल्कलैस्त्वं च लक्ष्म्या
सममिह परितोषे निर्विशेषा विशेषाः ।
स तु भवतु दरिद्रोयस्य तृष्णा विशाला
मनसि च परितुष्टे कोऽर्थवान्को दरिद्रः ॥ ४ ॥ कृष्णमिश्रस्य ।
मातर्लक्ष्मि भजस्व कंचिदपरं मत्काङ्क्षिणीमास्मभू-
र्भोगेभ्यः स्पृहयालवस्तव वशाः का निस्पृहाणामसि ।
सद्यःस्यूतपलाशपत्रपुटिकापात्रे पवित्रीकृतै-
र्भिक्षासक्तुभिरेव संप्रति वयं काश्यां समीहामहे ॥ ५ ॥
लक्ष्मीधरस्य ।

## ६५ वनगमनोत्सुकः ।

अये दिष्ट्या नष्टो मम गृहपिशाचीपरिचयः
परावृत्तं मोहात्स्फुरति च मनाग्ब्रह्मणि मनः ।
विकारोप्यक्षाणां गलित इव निर्भाति विषया-
स्तथापि क्षेत्रज्ञः स्पृहयति वनाय प्रतिमुहुः ॥ १ ॥ भर्तृहरेः ।
रम्यं हर्म्यतलं न किं वसतये श्रव्यं न गीतादि किं
किं वा प्राणसमासमागमसुखं नैवाधिकप्रीतये ।
किन्तु प्रान्तपतत्पतङ्गपवनमालोलदीपाङ्कुर-
च्छायाचञ्चलमाकलय्य सकलं सन्तो वनान्तं गताः ॥ २ ॥
विज्ञातात्मनः ।

आस्तामकण्टकमिदं वसुधाधिपत्यं
त्रैलोक्यराज्यमपि देव तृणाय मन्ये ।
निःशङ्कसुप्तहरिणीकुलसंकुलासु
चेतः परं लुठति शैलवनस्थलीषु ॥ ३ ॥ शालवाहस्य ।
हरिणचरणक्षुण्णोपान्ताः सशाद्वलनिर्झराः
कुसुमशवलैर्विष्वग्वातैस्तरङ्गितपादपाः ।
मुदितविहगश्रेणीचित्रध्वनिप्रतिनादिता-
मनसि न मुदं कस्यादध्युः शिवा वनभूमयः ॥ ४ ॥
गुणाकरभद्रस्य ।

कुरङ्गाः कल्याणं प्रतिविटपमारोग्यमटवि
स्रवन्ति क्षेमं ते पुलिन कुशलं भद्रमुपलाः ।
निशान्तादस्वन्तात्कथमपि च निष्क्रान्तुमधुना
मनोऽस्माकं दीर्घामभिलषति युष्मत्परिचितम् ॥ ५ ॥
लक्ष्मीधरस्य ।

## ६६ तपोवनम् ।

प्रत्यग्रगोमयविलिप्तवितर्दिकानि
पूर्णाहुतिप्रबलवह्निशिखाशतानि ।
शुश्रूषमाणमृगलोचनकन्यकानि
तान्यद्य तापसवनानि मनो हरन्ति ॥ १ ॥ नरसिंहस्य ।
एते नीवारवप्राः पृथुकुसुमसमित्पार्वतः कन्दरोयं
देवीयं जन्हुपुत्रीसि कतिलशयितः शान्तनिःशङ्करङ्कुः ।
कान्तारे दर्भदूर्वाचयशुचिनि वचः स्मार्तमावर्तयन्ति
ब्रह्माणो दुर्विपाकग्रहगहनतया यामिनीजागरूकाः ॥ २ ॥ मधोः ।
एतानि क्रतुपृष्ठवेदिविलुठद्वित्राणि वातप्रमी-
च्छन्नोपान्ततरूणि पश्य दधते पुण्याश्रमाणि श्रियम् ।
यान्युत्क्षिप्य मनः पराञ्चति परं नारायणाराधन-
श्रद्धामोदितमेकदैव धनिकद्वारेषु दारेषु च ॥ ३ ॥ तस्यैव ।
एते पुरः सुरभिकोमलहोमधूम-
लेखानिपीतनवपल्लवशोणिमानः ।
पुण्याश्रमाः श्रुतिसमीहितसामगीति-
साकूतनिश्चलकुरङ्गकुलाः स्फुरन्ति ॥ ४ ॥ श्रीमल्लक्ष्मणसेनस्य ।
शार्दूली स्नेहगर्भे मुकुलितनयनं लेढि शावं हरिण्या-
बन्धुप्रीत्या शिखण्डी तिरयति फणिनामातपं कीर्णबर्हः ।
सिंही रक्षत्यपत्यं स्वमिव कलभकं निर्गतायां करिण्यां
मैत्र्या येषां निवासे गहनगिरिदरीशायिनस्ते जयन्ति ॥ ५ ॥
चन्द्रयोगिनः ।

## ६७ तपस्वी ।

पाणिः पात्रं पवित्रं भ्रमणपरिगतं भैक्ष्यमक्षय्यमन्नं
वस्त्रं विस्तीर्णमाशादशकमपमलं तल्पमस्वल्पमुर्वी
येषां निःसङ्गताङ्गीकरणपरिणतिस्वस्तिसंतोषिणस्ते
धन्याः संन्यस्तदैन्यव्यतिकरनिकराः कर्म निर्मूलयन्ति ॥ १ ॥
नग्नाचार्यस्य ।
धिग्धिक्क्रान् कृमिनिर्विशेषवपुषः स्फूर्जन्महासिद्धयो
निष्पन्दीकृतशान्तयोपि च तपस्फारा गृहेष्वासते ।
तं विद्वांसमिह स्तुमः करपुटीभिक्षाल्पशाकेपि वा
बालावक्रसरोजिनीमधुनि वा यस्याविशेषो रसः ॥ २ ॥ बल्लणस्य ।
वारांस्त्रीनभिषुण्वते विदधते वन्यैः शरीरस्थिती-

रैणेय्यां त्वचि संविशन्ति वसते चापि त्वचं तारवीम् ।
तत्पश्यन्ति च धाम नाभिपततो यत्रार्मणे चक्षुषी
धन्यानां विरजस्तमा भगवती चर्येयमाह्लादते ॥ ३ ॥ मुरारेः ।
वल्मीकार्द्धनिमग्नमूर्तिरुरगत्वग्ब्रह्मसूत्रान्तरः
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसंपीडितः ।
अंसव्यापिशकुन्तनीडानिचितं बिभ्रज्जटामण्डपं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ॥ ४ ॥
कालिदासस्य ।
प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया ।
ध्यानं रत्नशिलातलेषु विबुधस्त्रीसंनिधौ संयमो
यद्वाञ्छन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥ ५ ॥ तस्यैव ।

## ६८ बहुविषयशान्तिः ।

नैकं जन्म तवैव वत्स न परं तुल्या च कर्मस्थिति-
र्भोक्तव्येषु सुखेषु हृष्यसि मुधा दुःखेषु किं ताम्यसि ।
भ्रातस्थैर्यमुपेहि नन्विह भवान्संसारदीर्घाध्वगः
सुच्छायास्तरवः क्वचिन्मरुभुवः क्वापि प्रचण्डातपाः ॥ १ ॥
दशरथस्य ।
नन्वात्मा व्यवधीयतां गृहरसाद्वैराग्यमाधीयतां
चेतः संप्रति दम्यतां सुरसरित्तीरे सदा स्थीयताम् ।
भिक्षार्थं व्यवसीयतां समुचितं सत्कर्म संचीयतां
कृष्णश्चेतसि धीयतां परतरं ब्रह्मानुसंधीयताम् ॥ २ ॥ भर्तृहरेः ।
ते तावत्कृतिनः परार्थघटकाः स्वार्थस्य बाधेन ये
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ।
तेमी मानुषराक्षसाः परहितं यैः स्वार्थतो हन्यते
ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥ ३ ॥ तस्यैव ।
विवेकः किं सोपि स्वरसवलिता यत्र न कृपा
स किं मार्गो यस्मिन्भवति न परानुग्रहरसः ।
स किं धर्मो यस्मिन्न भवति परद्रोहविरतिः
श्रुतं तत्किं साक्षादुपशमपदं यन्न नयति ॥ ४ ॥ कस्यचित् ।
कृमिकुलचितं लालाक्लिन्नं विगन्धि जुगुप्सितं
निरुपमरसप्रीत्या खादन्नरास्थि निरामिषम् ।
सुरपतिमपि श्वा पार्श्वस्थं सशङ्कितमीक्षते
गणयति न हि क्षुद्रो लोकः परिग्रहफल्गुताम् ॥ ५ ॥ ग्रूलस्य ।

## ६९ अथाध्यात्मवित् ।

भवारण्यं भीमं तनुगृहमिदं छिद्रबहुलं
बली कालश्चौरो नियतमसिता मोहरजनी ।
गृहीत्वा ज्ञानासिं विरतिफलकं शीलकवचं
समाधानं कृत्वा स्थिरतरदृशो जागृत जनाः ॥ १ ॥
अये दूरभ्रान्तं विषयविषमारण्यविपथे
परिभ्रान्तं चेतो मम विधुरितं स्वैरमधुना ।
निरावर्ते नित्ये स्थिरनिरवधानभ्रममये
विवेकप्रभ्रश्यद्विकृतिपरमानन्दजलधौ ॥ २ ॥ भवानन्दस्य ।
ध्यायन्नेष तमादिदेवममरस्रोतस्विनीरोधसि
क्वापि क्लेशकषायिताभिरुपरिग्लानो मनोवृत्तिभिः ।
अभ्यासोपहताङ्गुलिक्रममिलन्निर्वेदवीणाकल-
ध्वानावर्जितनिर्जितेन्द्रियगतिर्लीनः परे ब्रह्मणि ॥ ३ ॥ शंकरस्य ।
मृत्पिण्डेन भुवैव किं तदनु तद्भेदेन किं मेरुणा
किं ब्रह्माण्डजरायुकोटरकुटीकीटैः सुराद्यैरपि ।
त्रैलोक्येपि दयालुसौख्यललितान्याश्चर्यमेतत्पुन-
श्चेतोद्वैतसमाधिनीरधिसुधापूरप्लवं गाहते ॥ ४ ॥ वल्लणस्य ।
नानाप्येके यदिह दहरं पुण्डरीकं यदोक-
स्तोके यस्याप्यनुभवविधौ न स्वदन्ते मधूनि ।
यस्योन्मेषाद्दिनमणिरुचोप्यन्धकारप्रकाराः
शश्वत्तस्मै प्रणम हृदय ब्रह्मणे शाश्वताय ॥ ५ ॥ कस्यचित् ।

## ७० भवितव्यता ।

सृजति तावदशेषगुणालयं पुरुषरत्नमलंकरणं भुवः ।
तदपि दुर्गतिसाक्षि करोति चेदहह कष्टमपण्डितता विधेः ॥ १ ॥
कस्यचित् ।

अध्वश्रमाय चरणौ विरहाय दारा-
अभ्यर्थनाय वचनं च वपुर्जरायै ।
एतानि मे विदधतस्तव सर्वदेव
धातस्त्रपा न यदि किं न परिश्रमोपि ॥ २ ॥ राजशेखरस्य ।
आलम्बनाय धरणी न च नागभूमिः
स्वर्वासिनां च वसतिर्न भवेदमुष्य ।
पूर्वार्जिताशुभवशीकृतपौरुषस्य
कल्पद्रुमोपि न समीहितमातनोति ॥ ३ ॥ कस्यचित् ।

गुणवत्पक्षपराङ्मुखि स्वजनकुलोच्छेदबद्धनिर्बन्धे ।
अपि वीरवंशवैरिणि भगवति भवितव्यते जयसि ॥ ४ ॥
विद्युत्ता धनसंगता चिरतरं नाकारि नाकारि चे-
ज्ज्योत्स्नासंगतविग्रहः प्रतिदिशं सम्पूर्णविम्बः शशी ।
आमृत्यु स्तनजन्मयौवनमदो नाकारि वामभ्रुवां
धिग्धातारमकारि येन जगति व्यङ्गः स गङ्गाधरः ॥ ५ ॥
कस्यचित् ।

## ७१ दैवम् ।

करोतु नाम नीतिज्ञो व्यवसायमितस्ततः ।
फलं पुनस्तदेवास्य यद्विधेर्मनसि स्थितम् ॥ १ ॥ कस्यचित् ।
भग्नाशस्य करण्डपिण्डिततनोर्ग्लानेन्द्रियस्य क्षुधा
कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः ।
तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा
सुस्थास्तिष्ठत दैवमेव जगतः शान्तौ क्षये चाकुलम् ॥ २ ॥
कस्यचित् ।
धन्योसौ विधिरेव यस्य जगतो निर्माणमत्युज्ज्वलं
प्रत्याकारमपूर्ववस्तुरचनावैचित्र्यमत्यद्भुतम् ।
किं चात्यन्तमितो विचित्रमपदं शक्रस्य यद्वज्रिण-
स्त्रैलोक्योदरवर्त्तिकर्मफलयोर्दृग्गोचरे कुञ्जिका ॥ ३ ॥ दशरथस्य ।
य एको लोकानां परमसुहृदानन्दजनकः
कलाशाली श्रीमांस्त्रिभुवनविधौ मङ्गलधरः ।
सुधासूतिः सोयं त्रिपुरहरचूडामणिरहो
प्रयात्यस्तं हन्त प्रकृतिविषमा दैवगतयः ॥ ४ ॥ कस्यचित् ।
यद्भग्नं धनुरीश्वरस्य शिशुना यज्जामदग्न्यो जित-
स्त्यक्ता यच्च गुरोर्गिरा वसुमती बद्धो यदम्भोनिधिः ।
एकैकं दशकन्धरक्षयकृतो रामस्य किं वर्ण्यतां
दैवं वर्णय सोपि येन सहसा नीतः कथाशेषताम् ॥ ५ ॥
श्रीहनूमतः ।

## ७२ कालः ।

घातयति महापुरुषान् सममेव बहूननादरेणैव ।
परिवर्तमान एकः कालः शैलानिवानन्तः ॥ १ ॥ बाणस्य ।
व्योमैकान्तविहारिणोपि विहगाः संप्राप्नुवन्त्यापदं
वध्यन्ते निपुणैरगाधसलिलान्मीनाः समुद्रादपि ।
दुर्णीतं किमिहास्ति किं सुचरितं कस्थानलाभे गुणः

कालो हि व्यसनप्रसारितकरो गृह्णाति दूरादपि ॥ २ ॥
वसुभागस्य।

भीमेनात्र विजृम्भितं धनुरिह द्रोणेन मुक्तं शुचा
कर्णस्यात्र हया हता रथपतिर्भीष्मोत्र योद्धुं स्थितः।
विश्वं रूपमिहार्जुनस्य हरिणा संदर्शितं कौतुका-
दुद्देशास्त इमे न ते सुकृतिनः कालो हि सर्वंकषः ॥ ३ ॥
हलायुधस्य।

दिवसरजनीकूलच्छेदैः पतद्भिरनारतं
वहति निकटे कालस्रोतः समस्तभयावहम्।
इह हि पततो नास्त्यालम्बो नचापि निवर्तनं
तदपि भवतां मोहः कोयं यदेवमनाकुलाः ॥ ४ ॥ कस्यचित्।

दयालुर्नो बाले न च सुजनगोष्ठीषु रमते
विलासैर्नारीणां न हि भवति संभावितरसः।
अनुद्विग्नः कालः कवलयति कृत्स्नं जगदहो
निसर्गक्रूराणां न खलु करुणार्द्रः परिचयः ॥ ५ ॥ योगेश्वरस्य।

## ७३ श्मशानम्।

अर्द्धप्लुष्टं बहुभ्यः शवपिशितमुपाहृत्य हृष्टश्चिताभ्यो
जातग्रासातिरेकः स्फुटतरधमनीनद्धशुष्कार्द्रकायः।
प्रेतः संतर्ज्य दृष्ट्या कुटिलपरुषया मज्जनिष्कर्षशुष्कै-
राहन्त्याहारलुब्धान्मुहुरभिपततो जम्बुकानस्थिखण्डैः ॥ १ ॥
जयादित्यस्य।

शिरां प्रेतः कश्चिद्दशति दशनाग्रेण सरसां
लिलिक्षुर्मस्तिष्कं कलयति च मूर्धानमितरः।
करं धूत्वा धूत्वा ज्वलदनलदीप्ताङ्गुलिशिखं
चितास्थालीपक्वं हरति कुणपक्रव्यमपरः ॥ २ ॥ नीलाम्बरस्य।

नृत्यद्वेतालमालावलयितविकटप्रान्तमुड्डामरोग्र-
प्रक्रीडड्डाकिनीकं प्रतिपदमुदयत्पूतनोत्फाललीलम्।
उत्खेलत्कोलकेलीकवलितविघसग्राससंसिक्तगृध्रा-
कृष्टन्त्रस्थिप्रमोदं न जनयति कथं दृश्यमानं श्मशानम् ॥ ३ ॥
उमापतेः।

उद्बद्धेभ्यः सुदूरं घनजनिततमःपूरितेषु द्रुमेषु
प्रोद्ग्रीवं पश्य पादद्वयनमितभुवः श्रेण्यः फेरवाणाम्।
उल्कालोकैः स्फुरद्भिर्निजवदनदरीसर्पिभिर्वीक्षितेभ्य-
श्च्योतत्सान्द्रं वसाम्भः क्वथितशववपुर्मण्डलेभ्यः पिबन्ति ॥ ४ ॥
पाणिनेः।

चञ्चत्पक्षाभिघातज्वलितहुतवहप्रौढधामाश्रितायाः
क्रोडादुव्याकृष्टमूर्तेरहमहमिकया चण्डचञ्चुग्रहेण ।
सद्यस्तप्तं शवस्य ज्वलदिव पिशितं भूरि जग्ध्वार्धदग्धं
पश्यान्तः प्लुष्यमाणः प्रविशति सलिलं सत्वरं गृध्रवृद्धः ॥ ५ ॥

तस्यैव ।

## ७४ समस्या ।

थूथूकृत्य वमद्भिरध्वगजनैरप्रातकण्ठं पयः
शुष्यत्तालुगलैर्विरुत्य लवणोदन्वानुपालभ्यते ।
केन क्षारखने वृथैव भवतो नामानृतं निर्मितं
पाथोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः ॥ १ ॥

विद्यायाः ।

अये केयं धन्या धवलगृहवातायनतले
तुलाकोटिक्वाणैर्विषमविशिखं जागरयति ।
पुरा या प्राणेशे गतवति कृता पुष्पधनुषा
शरासारैरात्रिंदिवमकृपमुज्जागरकृशा ॥ २ ॥ कस्यचित् ।

हरशिरसि शिरांसि यानि रेजुः
शिव शिव तानि लुठन्ति गृध्रपादाः ।
अयि खलु विषमः पुरा कृतानां
विलसति जन्तुषु कर्मणां विपाकः ॥ ३ ॥ कस्यचित् ।

उपरि विधृतशारिप्रौढधन्विप्रसारा-
दिह पयसि नदीनां गाहितुं नैव शक्ताः ।
तटनिकटनिरूढाः प्रस्थितौ यस्य चण्डाः
सरलितकरदण्डाः कुम्भिनोम्भः पिबन्ति ॥ ४ ॥ गङ्गाधरस्य ।

सीताया हृदये शिरीषकुसुमप्राये पफालोच्चकैः
पौलस्त्यस्य सदैव कुण्ठकुलिशे वज्राधिके वक्षसि ।
आपुङ्खं निममज्ज तत्कथमहो नैतद्विजानीमहे
कः शाखी सखि यस्य पुष्पमभवत्पुष्पायुधस्यायुधम् ॥ ५ ॥

कस्यचित् ।

## ७५ उच्चावचम् ।

धेनुः कामदुघा किमिच्छति तदा स्थातुं न मध्येगृहं
किं न प्रार्थयति स्थितिं करतले चिन्तामणिः सादरम् ।
उत्कः किं भवनाङ्गणान्तिकमलं कर्तुं न कल्पद्रुमः
पुंसः पुण्यवतो यदा किल भवेदाज्ञाविधेयो विधिः ॥ १ ॥

कस्यचित् ।

किमस्मान्विद्वेक्षि क्षपितबहुदोषव्यतिकरा-
न्गुणान्वैधेयानां श्रियमुदयिनीं वीक्ष्य धनिनाम् ।
परिच्छेदः शौचं विनयपरता चेन्द्रियजयो
विवेकोतः कृत्यं न खलु वयमर्थप्रतिभुवः ॥ २ ॥ छित्तपस्य ।
उत्थायोत्थाय पापेष्वभिरमति मतिर्मन्दबुद्धेर्यदा ते
नैवोद्वेगो न शान्तिर्न च भवति घृणा कुर्वतः कर्म निन्द्यम् ।
तत्किं नैव प्रभाते ज्वलदनलसमा रौरवी नाम रौद्री
---कीलचक्रक्रकचपटुरवा राजधानी यमस्य ॥ ३ ॥

श्रीमत्पुरुषोत्तमस्य ।

शैलैर्बन्धयति स्म वानरहृतैर्वाल्मीकिरम्भोनिधिं
व्यासः पार्थशरैस्तथापि न तयोरत्युक्तिरुद्भाव्यते ।
वागर्थौ च तुलाधृताविव तथाप्यस्मत्प्रबन्धानयं
लोको दूषयितुं प्रसारितमुखस्तुभ्यं प्रतिष्ठे नमः ॥ ४ ॥

धर्मकीर्तेः ।

प्रासादाः शिखरस्खलज्जलधराः खातानि वारांनिधि-
स्पर्धावन्त्युपयान्ति भूमिसमतां कालेन राज्ञामपि ।
क्षुद्रस्यापि कवेः सदर्थरचनाकीर्तिस्तु या वाङ्मयी
नादृष्ट्वा युगविप्लवं पुनरसौ प्रायः परिक्षीयते ॥ ५ ॥

पुरुषोत्तमस्य ।

## प्रतिराजस्तुतिः ।

आनन्दं विदुषां तनोति तनुते कर्णज्वरं विद्विषां
श्रीमानादिवराहपादसरसीजन्मप्रणामं मुहुः ॥
सद्बन्धुर्गुणसिन्धुरन्धलगुडी धर्मस्य वर्त्मा (भर्ता) वनेः
श्रीमल्लक्ष्मणसेनदक्षिणभुजादण्डोपि षण्डावटुः ? ॥ १ ॥
यो हेलोक्तिभिराहितो धनवतामुद्विग्नकान...... ।
गुम्फैर्लब्धगतिः क्षुधाकुलशिशुक्रेङ्कारसंवर्धितः ।
पीत्वा जङ्गमकल्पभूरुहवर त्वद्वाचमेतां सुधा-
सध्रीचीं वटुदास शाम्यतु स मे प्रोद्दामकर्णज्वरः ॥ २ ॥

साञ्चाधरस्य ।

पयोधिपरिमाणेषु धनेषु च रणेषु च ।
वन्दीन्द्राणां नरेन्द्राणां वटुदासस्तरण्डकः ॥ ३ ॥ वेतालस्य ।
अलमादिवराहेण वटुदासं परं स्तुमः ।
जगदुद्धरता येन न वक्रीकृतमाननम् ॥ ४ ॥ उमापतिधरस्य ।
तत्प्राङ्गणान्तमधिरोहति कल्पवल्ली

चिन्तामणिर्लुठति पादतले च तस्य ।
येनेक्षितः सुकृतसागरपारदृश्वा
विश्वानुरञ्जनपटुर्वटुदासदेवः ॥ ५ ॥ कविराजव्यासस्य ।

श्रीधरदासविनिर्मितसदुक्तिकर्णामृते प्रवाहोयम् ।
पञ्चम उच्चावच इति विविधप्रमोदं तनोतु रसिकानाम् ॥ १ ॥
इति महामाण्डलिकश्रीश्रीधरदासकृतौ सदुक्तिकर्णामृत उच्चावचो नाम पञ्चमः प्रवाहः ॥ वीचयः ७६ । श्लोकाः ३८० ॥

## ग्रन्थ-समाप्तिः ।

श्रीधरदासविनिर्मितसदुक्तिकर्णामृते प्रवाहाणाम् ।
पञ्चकमिह षट्सप्तत्यधिकशतचतुष्टयी वीचिः ॥ १ ॥
श्लोकानां च शतत्रयमशीत्युपेतं सहस्रयोर्द्वितयम् ।
ग्रन्थश्च षष्टिसमधिकसप्तशताधिक-सहस्रपञ्चतयम् ॥ २ ॥
शाकेत्र सप्तविंशत्यधिकशतोपेतदशशते(११२७)शरदाम् ।
श्रीमल्लक्ष्मणसेनक्षितिपस्य रसैकविंशेब्दे ॥ ३ ॥
सवितुर्गत्या फाल्गुनविंशेषु परार्थहेतवे कुतुकात् ।
श्रीधरदासेनेदं सदुक्तिकर्णामृतं चक्रे ॥ ४ ॥

## आशीः

भवतु नृपो धर्मपरः परमसमृद्धा च भवतु वसुधेयम् ।
धे (दे) यात्सुखानि लोके केशवचरणाम्बुजद्वितयम् ॥ १ ॥
इतिश्रीधरदासविनिर्मितसदुक्तिकर्णामृतं समाप्तम् ।
वीचयः ४७६ । श्लोकाः २३८० ॥

V=Vallabhadeva's Subhashitavali, S=Sarangadhara's Paddhati.

अथ

# सदुक्तिकर्णामृतस्थ—

## श्लोकानामकारादिवर्णानुसारेणानुक्रमणी

( उ—उपोद्घात; स—समाप्ति. )

### प

य

# शुद्ध्यशुद्धिपत्रम्

| अशुद्धम् | पृष्ठाङ्कः | पङ्क्तिः | शुद्धम् |
|---|---|---|---|
| वधूनां | ३ | २७ | रधूणां |
| मदपदं | ४ | १० | मदमदपदं |
| त्खण्डेन्दुच्छ | ८ | २१ | त्खण्डेन्दूच्छ |
| लीलामृतः | १० | ८ | लीलामृतः |
| शशिकल | ११ | २३ | शशिशकल |
| ध्याम | ११ | ३३ | श्याम |
| साक्कारि | १२ | १७ | सात्कारि |
| दग्धक | १४ | १४ | दन्धक |
| कणामृतम् | १५ | १ | कर्णामृतम् |
| शिर श्रेणि | १५ | ८ | शिरःश्रेणि |
| धीरवतां | १५ | २६ | धीवरतां |
| हिताहिभोग | १७ | १७ | हिभोग |
| चण्डी चण्डी | १७ | २८ | चण्डी |
| बालन्दुकेणा | १७ | ३२ | बालेन्दुकणा |
| गौरीघाना | १८ | १४ | गौरीघना |
| शिरमि | १६ | २६ | शिरसि |
| र्विमो | १६ | १३ | र्विभो |
| वप | २० | १३ | चप |
| दंष्ठा | २१ | १३ | दंष्ट्रा |
| जम्मा | २२ | २७ | जन्मा |
| लङ्कृति | २३ | १५ | लङ्कृति |
| लम्बीदरो | २४ | २७ | लम्बोदरो |
| वपुरवतु वपु-रवतु | २६ | ३२ | वपुरवतु |
| नयतिरां | २७ | २० | नयति तरां |
| दास्थ | ३२ | ६ | दस्थि |
| मसृणावि | ३२ | २८ | मसृणानि |
| स्विधात् | ३२ | ३१ | स्वियत् |
| दप्ति | ३२ | ३२ | दप्त |
| कारकलभ | ३३ | ४ | करि कलभ |
| कुतुस्त्व | ३३ | २२ | कुतस्त्व |
| माहमा, ागरां | ३५ | ७ | महिमा, गिरां |
| विशाल विवरो | ३५ | २८ | विशालसाल-विवरो |
| विष्टं | ३६ | २१ | विष्टः |
| मास्त | ३८ | ८ | मस्ति |
| वालक | ३८ | २६ | बालक |
| पजता | ३८ | २६ | पजाता |
| सुप्तो | ३८ | ३१ | सुप्ता |
| वत्म | ४० | ७ | वत्म |
| कंसाद्वपः | ४१ | १६ | कंसद्विषः |
| प्राणप | ४१ | २८ | प्रयाणप |
| वधूहितो | ४२ | ३ | वधूहतो |
| वेशता | ४२ | १७ | वेशिता |
| तगुरु | ४३ | १७ | तागुरु |
| चपन्त्या | ४८ | ११ | चयन्त्याः |
| ननो | ४६ | ६ | मयनो |
| वति | ५६ | १६ | मति |
| नविव | ५७ | १६ | नमिव |
| कुसुमं | ६४ | ३४ | कुसुम |
| प्रय स्य | ७२ | १३ | प्रयायस्य |
| नयता | ७३ | २ | नयना |
| पिया | ७३ | २१ | प्रिया |
| लाङ्गली | ७३ | १३ | लाङ्गुली |
| खङ्गा | ७६ | २८ | खङ्का |
| दिसन् | ८० | ३४ | खिन्दू |
| परिपूर | ८१ | ६ | परिपूत(र्ण) |
| वक्र | ८३ | १६ | वक्तुं |
| भङ्क्त्का | ८८ | २० | भङ्क्त्वा |
| त्वय्या | ८६ | १६ | त्वय्या |

| अशुद्धम् | पृष्ठाङ्कः | पङ्क्तिः | शुद्धम् |
|---|---|---|---|
| धनुषेतस्याः | ६१ | ७ | धनुरैतस्याः |
| तृप्ति | ६७ | २४ | तृप्तिर् |
| रमया | ६८ | ६ | रमया |
| सघः | ६६ | २६ | सख्यः |
| चेथं | १०१ | ३ | चेत्थं |
| बन्ध्यारितं | १०२ | १० | बन्ध्यायितं |
| किरष्यति | १०३ | ३१ | करिष्यति |
| प्रेषित | १०४ | ४ | प्रोषित |
| वार्त | १०५ | १५ | वार्तं |
| प्रत्यासन्नं | १०५ | २८ | स्प्रत्यासन्नं |
| निष्पदन्ता- | १०६ | ३१ | निष्पन्दता- |
| सदानीं | १०७ | २ | सदानीं |
| फेन | १११ | ३२ | केन |
| द्रगेव | ११४ | १६ | द्रुगेव |
| सुरमनसः | ११६ | ३१ | सुमनसः |
| मलं | ११८ | २६ | मलं वर्तुलतरः |
| प्रार्मीगर् | १२६ | २८ | प्रार्मीर् |
| बालत्वदा | १२६ | ३२ | बालत्वाद |
| दल्य | १२७ | ३ | दल्प |
| प्याम्रि | १२७ | २२ | ष्यासि |
| दुम | १२७ | ३४ | द्रुम |
| ल्पप | १२८ | १० | ल्प |
| नांश | १३१ | २७ | नांशु |
| नरिन्ध्र | १३१ | २८ | नीरन्ध्र |
| रिमतं | १३३ | ६ | स्मितं |
| डिरिडकं | १३५ | १६ | डिरिडमं |
| विं | १३६ | २६ | किं |
| चञ्चायिकम् | १३७ | १० | चञ्चायिकाम् |
| वच्यन्त्य | १३७ | २४ | वच्यन्त्य |
| पत्र | १३८ | ११ | पत्रे |
| स्मेरै | १३६ | ७ | स्मेरैरशावेच्चणा |
| सक्का | १४१ | ३० | शक्का |
| यथा यथा | १४३ | १३ | यथा तथा |
| पादाग्रन्यासः | १४४ | ३१ | पादन्यासः |
| स्मराभि | १४५ | १० | स्मरामि |
| लाङ्गरि | १४५ | १५ | लाङ्गलि |
| वधूम्भिः | १४६ | ४ | वधूभिः |
| वल्लूप्रक्षक | १४६ | १४ | वल्लूप्रक्ष |
| प्राणः | १५२ | २० | पाणेः |
| प्रयाषि | १५३ | ३४ | प्रेयषि |
| स्नवित | १५४ | २६ | स्नपित |
| पश्वतो | १५४ | ३१ | पश्यतो |
| नान्त | १५५ | १० | तान्त |
| नितं | १५५ | १२ | नितम्ब |
| ततारकैः | १५६ | १६ | ततस्तारकैः |
| मुक्त | १५७ | ७ | मुक्त |
| उषषि | १५७ | २० | उषषि |
| हासितं | १५७ | २६ | हसितं |
| कम्प्युषषि | १५७ | ३१ | कमप्युषषि |
| शोणिभा | १५७ | ३४ | शोणिमा |
| दाभ | १५८ | २ | दाम |
| तत् | १५८ | ३ | तम् |
| तुष्टया | १५८ | २३ | तुष्टया |
| शूना वि | १५६ | ७ | शूनामपि |
| कासौ | १५६ | १० | कोऽसौ |
| निलीप | १६० | १३ | निलीय |
| नितम्बिनि | १६० | १६ | नितम्बिनि |
| भ्यर्थ्यते | १६० | १८ | भ्यर्थ्यते |
| कलपितुं | १६१ | ६ | कलयितुं |
| ककुम् | १६१ | १६ | ककुप् |
| शतमुख | १६५ | १० | शतमख |
| स्तुषिता | १६५ | ३४ | स्तुषिताः |
| तलिनो | १६४ | १० | नलिनो |
| वाहम | १६६ | २२ | वाहन |

| अशुद्धम् | पृष्ठाङ्कः | पंक्तिः | शुद्धम् |
|---|---|---|---|
| मिक | १६६ | २५ | पिक |
| यामिमी | १६७ | ३४ | यामिनी |
| किसयो | १६८ | ६ | किसलयो |
| अरोह | १७२ | २४ | आरोह |
| शिखि | १७३ | २७ | शिखि |
| वर्षांसु | १७५ | ८ | वर्षांस |
| त्युन्मद | १७५ | १७ | न्युन्मद |
| सिन्धवा | १७६ | १२ | सिन्धवो |
| मोदिनः | १७६ | १३ | मोदिनः |
| पालोकय | १७६ | १४ | मालोकय |
| तर्थापि | १७८ | ३ | तथापि |
| खञ्जन | १७८ | ३४ | खञ्जन |
| माच्छेद | १८० | २१ | मानच्छेद |
| हालिके | १८१ | ३१ | हालिके |
| भ्यर्थ्य | १८३ | ३० | भ्यर्थ्य |
| गृहस्प | १८५ | ३ | गृहस्य |
| श्रेयसे | १८८ | १५ | श्रेयसे |
| भ्रमभुक्रय | १८८ | १६ | भ्रमभुक्रय |
| सूते | १८८ | ३१ | |
| सरस्वती | १८९ | २ | सरस्वती रभसतः |
| मा भूत्तेयम-रुन्धतीपतिरपित्वं, | १९० | १९ | माभूच्चेयमरुन्धतीभगवतीडुः, |
| चौणीज | १९२ | २६ | चौणीश |
| प्यपयाति | १९२ | ३४ | प्युपयाति |
| मनान् | १९३ | २ | मना |
| तन् | १९८ | १८ | तत् |
| ध्यतभोर् | १९८ | २८ | व्यतनोद् |
| ताहक् | २०० | २ | ताहक् |
| कुत | २०१ | १८ | कुत |
| वांत | २०४ | १२ | वांतं |

| अशुद्धम् | पृष्ठाङ्कः | पंक्तिः | शुद्धम् |
|---|---|---|---|
| यत्परि | २०८ | १३ | यत्परि |
| हृदये | २१३ | ३० | हृदये |
| ववीर | २१८ | ३ | वीर |
| पिष्ठप | २२० | ८ | विष्टप |
| गत्तरवं | २२५ | २ | गत्तत्वं |
| घोरासि | २२५ | ७ | घोरसि |
| वक्रं | २२५ | १० | वक्त्रं |
| विचिन्त्य | २२५ | १५ | विचिन्त्य |
| बटवो | २२६ | २१ | बहवो |
| मञ्जी | २२८ | १२ | यञ्जी |
| क्रिमयो ऽभि | २२८ | २२ | क्रिमयोऽपि |
| करणाः | २२९ | ५ | करणाकिरणाः |
| च्चभः | २२८ | २८ | च्चमः |
| मेना | २३० | १९ | येना |
| स्पृष्ट्वा | २३० | ६ | सृष्ट्वा |
| अयि | २३७ | २४ | अपि |
| कथार्थितस्य | २४० | २२ | कथार्थितस्य |
| तेम्भासि | २४० | ३३ | तेम्भसि |
| कुसुमे | २४५ | ६ | कुसुमं |
| कुसुमं | २४५ | ६ | कुसुमे |
| द्रुमान् | २४६ | ४ | द्रुमान् |
| मद्माकरे | २४६ | १७ | पद्माकरे |
| द्रुमे | २४७ | ९ | द्रुमे |
| कराक | २४८ | ३ | करटक |
| चन्दनं | २४९ | १६ | चन्दनाः |
| कोणों | २५० | ६ | कोणो |
| कतिनकति | २५३ | १७ | कतिकतिन |
| तृणार्त्तन | २५३ | ३३ | तृणार्त्तन |
| पश्यपाश- | २५५ | ३५ | पाश |
| मति | २५६ | १८ | यति |
| जातोऽथ | २५६ | ३४ | जातोऽश्व |
| मयास्य | २५७ | १८ | मपास्य |

| अशुद्धम् | पृष्ठाङ्कः | पंक्तिः | शुद्धम् |
|---|---|---|---|
| लीङ्घत | २५८ | ३१ | लङ्घिता |
| कार्मुवक्षयः | २५९ | ८ | कार्मुकवक्षयः |
| कूकुर्वानर | २५९ | २४ | कूर्दन्वानर |
| दूरात् | २६० | ८ | दूरात् |
| विहङ्गैर्द्रुतं | २६० | १३ | विहङ्गैर्द्रुतं |
| दाना | २६० | १४ | दान |
| दूकोद्वान्त | २६० | २१ | दूवक्त्रोद्वान्त |
| तास्मिन् | २६१ | ६ | तस्मिन् |
| व्याडः | २६१ | ३२ | व्यालः |
| घर्षणे | २६२ | ७ | घर्षणै |
| तत्रनुरूपं | २६२ | २४ | तत्रानुरूपं |
| धिर | २६३ | १८ | चिर |
| दृष्टः | २६३ | २२ | दृष्टः |
| प्रवालङ्कुरो | २६३ | २२ | प्रबलाङ्कुरो |
| मुकुलितः | २६३ | २४ | मुकुलितः |
| मप | २६८ | ७ | मय |
| अमं | २६९ | ४ | अमुं |
| रामीमि | २७० | ६ | रमीभि |
| दावानली | २७० | १६ | दावावली |
| काकुभ | २७१ | ३ | काकुभि |
| टल्लुराठा | २७५ | २ | टल्लुरठा |
| अपि | २७५ | १६ | अयि |
| लम्बािभ | २७७ | ६ | लम्बभि |
| मुषलो | २७८ | १७ | मुशलो |
| पाठः | २७९ | ६ | पीठः |
| विभावन | २७९ | २२ | विभावने |
| स्वप्न | २७९ | १६ | |
| मम्य | २७९ | २२ | मयय |
| तलीषा | २८० | २ | तहलीषा |
| रक्षित | २८० | १२ | दक्षित |
| शटामुत्करा | २८० | १४ | सटामुत्करा |
| श्मश्रु | २८० | १७ | श्मश्रु |
| हस्तडागः | २८६ | २२ | हास्तडागाः |
| विपुषः | २८७ | २९ | विप्रुषः |
| नक्त्रं | २८९ | ३ | नक्तं |
| पान्तरालि | २८९ | २१ | पान्तराणि |
| वडभी | २८९ | २९ | वलभी |
| कुध्यति | २९० | १५ | कुप्यति |
| चलत् | २९१ | ३ | दलत् |
| लुएठत | २९१ | ३१ | लुएठन |
| नेत्र | २९४ | ३४ | नेत्रै |
| मेनार्य | २९५ | २८ | येनार्यं |
| श्लाघ्य | २९५ | ३४ | श्लाघ्य |
| टङ्कस्य | २९६ | १० | दङ्कस्य |
| गजाम् | २९७ | ३४ | गजान् |
| स्मनां | ३०३ | ६ | स्मनां |
| दृविणेति-पादात्पूर्वम्— | ३०५ | ३१ | "पठतिवितथ-स्तोत्रं भर्तुः प्रहृष्यति हृष्यति" इतिपठनीयम् |
| नृगाणाम् | ३०६ | ८ | नृगाणाम् |
| कूमाज्ञि | ३०६ | २९ | कूर्माज्ञ |
| सर्वस्व | ३०७ | ३२ | सर्वस्व |
| नैच्छ | ३०८ | २७ | नैच्छ |
| जाल | ३०९ | ३१ | जालमुद्गत |
| सत्रय | ३१० | १७ | सत्रप |
| क्रीड | ३१० | २८ | क्रीडि |
| द्वितीयपादादौ | ३११ | ५ | "वार्धक्याद् वलिभङ्गिनी" इतिपठनीयम् |
| लप्रावाणो | ३११ | ३२ | लप्राणगणो |
| सेमे | ३१२ | १४ | सेव्ये |
| भामं | ३१७ | ६ | भाम्यं |
| तत्रेतः | ३१७ | ३० | तत्रेतः |
| तनुते | ३१९ | १३ | मनुते |
| चितम् | ३२० | ३४ | चितिम् |

| अशुद्धम् | पृष्ठाङ्कः | पंक्तिः | शुद्धम् |
|---|---|---|---|
| कीर्णवर्द्ध: | ३२१ | २१ | कीर्णवर्द्धाः |
| समिक्क | ३२५ | २६ | संपक्क |
| रोद्दीलुस्यामि | ३२७ | ६ | "वीद्दियाकालक कच" इतिपाठः । |
| लगुडी | ३२७ | २४ | लगुडो |
| षण्डावटुः | ३२७ | २६ | दण्डवटुः |
| द्विमकान् | ३२७ | २६ | द्विमविलैर्वचो |
| ...कलव | १६१ | १० | न्मोदपंकिल-कलव |
| मनंगनानाम् | १६१ | ७ | मंगनानाम् |
| त्वङ्ग...... | २६१ | १ | दलत्वङ्गत्पद्माम्रलम |
| बुष | २६१ | ११ | बुम |
| निर्विशेषाविशषा | ३२० | ५ | निर्विशेषाविशेषः |
| विर्यान्त | २३७ | ३४ | स्वयाऽति |
| संवृणाता | ३३ | १६ | संवृणुता |
| स्तिमितनयनं | १४४ | २१ | स्मिमितवक्त्रं |
| कृत्वास्यामे | १४४ | २२ | कृत्वा श्यामा |
| हस्तमुक्क | १४४ | २२ | हस्तमुक्तं |
| पादांगुल्या लुलित० | १४४ | २३ | पादांगुष्ठालुलित |
| पातितांकं | १४४ | २३ | पातिताङ्कं |
| अत्यायतार्धम् | १४४ | २४ | ऋज्वायतार्धम् |
| निहित रचनैः | १४४ | २५ | निहितवचनैः |
| चौताननां | १५० | ८ | धौताननां |
| द्वौ हस्तौ | १५३ | १४ | स्वौ हस्तौ |
| बभूव | १५४ | ८ | बभूव |
| विषयाभाग | १५१ | २८ | विषयादूराग |
| लयभवगतः | १५१ | २७ | लयमुपगतः |

| अशुद्धम् | पृष्ठाङ्कः | पंक्तिः | शुद्धम् |
|---|---|---|---|
| सदाङकमानु | १४४ | २७ | ताद्विकलानु |
| ...कलुष | १७१ | ७ | वीतिवलुष |
| ...पस्वमूर्ध | १६३ | २१ | रक्तोत्फालरयात्स्वमूर्ध- |
| ——...—— | १८७ | ६ | द्दतोद्दमकरीन्दवृन्दाशनिम चक्रायेषु नीराधिषु, |
| स्मरयद | १८७ | १४ | स्मरपद |
| श्रोत्रैः... | १४५ | १३ | श्रोत्रैर्नापि च किंशरीकलगलोद्गीतानि |
| —यान्...वूला | १४६ | २१ | यद्भानवाश्रमदेना न विदन्ति दूला |
| वातान्दो... | १४६ | ३४ | वातान्दोलित-नीलपंकजगलत्— |
| ल—म | १८४ | २४ | लालिम |
| घन—— | १३६ | १२ | घनाश्लेषात्समुत्कीर्णता, यातायात— |
| शारद... | १४० | २६ | शारदाम्रतरलातनुकान्तिः |
| दृष्टि...... | १४० | २८ | दृष्टिर्न संचारिता, |
| वलये... | १४० | २६ | रुद्धेपतन्तीक्षितौ, |
| —स्निग्धैः | १४३ | ३४ | धीरैः स्निग्धैः |
| लहरी... | १४३ | ३३ | लहरी भोरकानानदीति । |
| भोगै..... | १४८ | ११ | भोगैस्तव वराङ्कचोदितैः, |
| ...प्रेष्यतां | १४८ | १६ | खेदापायः प्रयामिवचन— |
| हारः...तत, | १४६ | १८ | हारः कञ्चुकित्वनाशं गतः |

## BOOKS OUT OF THE SERIES.

**1. Kama-Kala**—or the science of ancient Hindu Love in English by Kanno Mall M. A. with 30 very beautiful tri-colour and half-tone illustrations. Unique book of its kind. Printed at the Times of India Press. Rs. 5-0-0

**2. Kunda-Mala**—(Drama) of Diṅnāga with comm. intro. of 56 pages, notes and translation in English by Veda Vyasa M. A & S. D Bhanot M A. Rs. 3-8-0

**3 Physical-Culture**—by Dr. Jai Chand Sharma M.B., B.S., with 21 illustrations 'Wonderful guide to health almost new methods derived from Yoga.' Rs. 1-0-0

**4. The Heyapaksa of Yoga**—or a constructive synthesis of Psychological material in Indian Philosophy (written from the standpoint of normal individual Psychology as found in the Yoga Praxis) with a foreword by Dr. S. Radhakrishnan by P. V. Pathak M. A, 1932. Rs. 7-8-0

**5. Jasaharacariyu**—of Puṣpadanta in Apabhraṁśa critically ed. with intro., glossary and notes by Dr P. L. Vaidya. Rs. 6-0-0

**6. Savaydhammadoha**—(Apabhraṁśa) critically ed. with trans. by Prof. H. L. Jain. Rs 2-8-0

**7. Kicakvadh**—of Nītivarman with the comm. of Janārdanasena critically ed. by Dr. S. K. De (The poem is one of great literary interest). Rs. 4-0-0

**8. Introduction to Prakrit**—by Mr. A. C. Woolner M.A., C I.E., Best book for mastering Prakrits, 2nd ed. Rs. 3-0-0

**9. Nighantu and Nirukta**—critically ed. by Dr. L. Sarup complete. Rs. 6-4-0

**10. Pancasiddhantika**—of Varāhmihira (Astronomy) text, comm. intro. and English translation by Pt. Sudhakar Dvivedi and Thibaut. Rs. 10-0-0

**11. Abhidhanaratnamala**-of Halāyūdha edited with Sanskrit English Glossary by Aufrecht. Rs. 10-0-0

**12. Naya Kumaracariu**—of Puṣpadanta critically edited with an exhaustive intro., glossary, indices and notes by Hira Lal Jain M. A. LL. B. 1933. Rs. 6-0-0

**13. Karakanda-Cariu**—of Kanakāmara Muni — an apabhramsa work in ten chapters edited by Prof. Hira Lal Jain M. A. LL. B. with a thorough intro., complete and literal English trans. glossary indices, notes etc. Rs.

*Apply to:—*

**MOTI LAL BANARSI DASS Booksellers**
LAHORE.